# DARŚANAMAÑJARĪ

## PART I

(न्यायवैशेषिक-दर्शनविचारः)

J.K. Brahmam


By

**R. THANGASWAMI SARMA,**

Nyaya, Vyakarana, Vedanta Siromani,
Hindi Vidvan and Praveena,
Lecturer in Sanskrit,
Department of Sanskrit,
University of Madras,
MADRAS-600 005.





UNIVERSITY OF MADRAS

1985

# DARŚANAMAÑJARĪ

## PART I

BY

**R. THANGASWAMI SARMA,**

Nyaya, Vyakarana, Vedanta Siromani,
Hindi Vidvan and Praveena,
Lecturer in Sanskrit,
Department of Sanskrit,
University of Madras,
MADRAS-600 005.

R. THANGASWAMI SARMA
Professor of Sastra Cudamani
K.S.R.I. Madras-4.
6, XIth Cross St,
INDIRA NAGAR, ADYAR,
MADRAS-600 020.



**UNIVERSITY OF MADRAS**

**1985**

# दर्शनमञ्जरी

( न्यायवैशेषिकात्मकः प्रथमो भागः )



BY

**R. THANGASWAMI SARMA,**

Nyaya, Vyakarana, Vedanta Siromani,
Hindi Vidvan and Praveena,
Lecturer in Sanskrit,
Department of Sanskrit,
University of Madras,
MADRAS-600 005.

Annals of Oriental Research Publication




UNIVERSITY OF MADRAS

1985

## FOREWORD

Sri R. Thangaswami who is proficient in the fields of Vedānta, Nyāya and Vyākaraṇa has already brought out the work 'A Bibliography of Advaita Vedānta' in Sanskrit; and, the present volume 'Darśanamañjarī', which is a succinct, direct and simple *résumé* of the fields of Nyāya and Vaiśeṣika doctrines, was published serially in the Annals of Oriental Research, University of Madras. The other three subsequent volumes which he intends to bring out would deal with the means and objects of knowledge in the different schools of Philosophy, a survey of the Sāṅkhya, Yoga and Pūrvamīmāṁsā schools and a survey of the Uttaramīmāṁsā doctrines respectively. A student of Indian Philosophy generally feels the difficulty in understanding the basic concepts from the original works in Sanskrit which are in terse and complicated style. Only very few of the modern exponents are capable of confidently handling these texts directly. If the learner resorts to secondary sources, then, often the spirit of the text is lost by oversimplification and misguided parallelisms; or at times the very idea in the original is changed due to wrong translation or misinterpretation. He seldom gets the benefit of learning the original directly if he depends solely on other books upon the subject. At times subjectivity also tends to vitiate the interpretations. So if there are books in Sanskrit itself written in simple style by traditional scholars, who are not likely to miss any significant point in the original in the process of abstraction, they will serve as stepping stones to the modern learners in the initial stages of research. To fill this void, Sri Thangaswami has set out to give the

essence of the doctrines of the Nyāya-Vaiśeṣika in a lucid form. Since he has been teaching Vedānta and Vyākaraṇa for the past twenty-five years, the wisdom of experience shines forth in his works. Various charts help in assimilating in a quick glance the branching commentaries on works, classification of categories, terms in logic and doctrines in different schools. The work gives not merely details of manuscripts or printed references but gives dates of authors, cites views of well-known scholars, gives legendary anecdotes, draws simple outlines of terse doctrines, provides technical exposition, gives an account of *kroḍapatra-s* and serves as a history of *darśana* literature as well as a model text book and is a ready reckoner for the researcher. The indices are very useful and the list of *kroḍapatra-s* helps the reader to comprehend the vast sweep of the doctrine of the Nyāya-Vaiśeṣika. A close study of this work will no doubt impel the student to acquaint himself further with the works in the field of *darśana*. This publication is sure to give a fresh impetus to the progress of research in *darśana* especially in this part of the country.

Madras
11—10—1984

N. VEEZHINATHAN

# विषयानुक्रमणिका

छन्दःपादयुगा निरुक्तिसुनखा शिक्षासुजङ्घायुगा
ऋग्वेदोरुयुगा यजुस्सुजघना या सामवेदोदरा ।
तर्कोद्वृत्तकुचा श्रुतिस्मृतिगला काव्यारविन्दानना
वेदान्तामललोचना विलसती तां नौमि वागीश्वरीम् ॥

# किञ्चित् प्रास्ताविकम्

मान्याः सहृदयास्सुहृदयाश्च विद्वांसः ।

मदीयस्य अद्वैतवेदान्तसाहित्येतिहासाख्यग्रन्थस्य विद्वत्सु विमर्शकसंस्थासु अनुसन्धानसमितिषु पण्डितेषु पत्रिकासु च प्रशस्ति साफल्यं उपयोगितां उपकारिताञ्च दृष्ट्वा एवमेव दर्शनान्तरेष्वपि ग्रन्थो लेखनीय इत्याशा लोभो वा सञ्जातः येन प्रेरित उत्तेजितश्चाहं दर्शनमञ्जरीति नाम्ना सर्वदर्शनानां सारस्य ग्रन्थसम्पदश्च लेखने दत्तचित्तोऽहमभवम्, यस्य परिश्रमस्य फलभूतोऽयं दर्शनमञ्जर्याः प्रथमो भागः विदुषां सेवायां समर्प्यते ।

मदीया च योजना एवमस्ति—

| | | | |
|---|---|---|---|
| दर्शनमञ्जर्याः | I. प्रथमभागे | — | न्यायवैशेषिकदर्शनविचारः |
| दर्शनमञ्जर्याः | 2. द्वितीयभागे | — | सर्वदर्शनगतप्रमाणप्रमेयविचारः, |
| दर्शनमञ्जर्याः | 3. तृतीयभागे | — | सांख्ययोगपूर्वमीमांसादर्शनविचारः, |
| दर्शनमञ्जर्याः | 4. चतुर्थभागे | — | उत्तरमीमांसादर्शनविचार, इति । |

चतुर्णां भागानां आवश्यकविषयविशेषाः समार्जितास्संक्षिप्तरूपेण लिखिताश्च । परं सर्वेषां दर्शनानां विस्तरेण लेखनम्, एकदैव मुद्रापणञ्च स्नातकोत्तरविद्यार्थिनां विभिन्नविषयकशास्त्रग्रन्थाध्यापनकार्येण साकं कालविलम्बसम्पादकं भवति । आर्थिकसङ्कटश्चानिवार्यस्सम्पन्नः । ततश्च प्रत्यार्धवार्षिकं प्रकाश्यमानायां 'अनालस् आफ् ओरियण्टलरिसर्चपत्रिकायां (A.O.R.) भागशः मुद्रापणं सुलभमासीत् ।

एवं भागशः प्रकाशितस्य ग्रन्थस्य प्रथमो भागः न्यायवैशेषिकदर्शनग्रन्थतत्प्रतिपाद्य-सम्पद्रूपः विद्वत्तमानां सेवायां समर्पितोऽस्ति ।

ग्रन्थरचनाप्रकारः— दर्शनशब्दार्थविचारपूर्वकं दर्शनेषु न्यायदर्शनस्य स्थानं निर्धारितम् । न्यायशब्दार्थविचारपूर्वकं प्राचीननव्यन्याययोर्भेदमुपवर्ण्य सूत्र-भाष्य-वार्तिक-वृत्तिरूपाः, स्वतन्त्राश्च न्यायग्रन्थाः, ग्रन्थप्रतिपाद्या विषयाः ग्रन्थ कर्तॄणां इतिहासाश्च सविस्तरं उपवर्णिताः । नव्यन्यायग्रन्थेषु तत्त्वचिन्तामणेस्स्थानं निर्धार्य ग्रन्थप्रतिपाद्यविषयाः परिशीलिताः । तत्त्वचिन्तामणेः आलोक-दीधिति-जागदीशी - माथुरी - भवानन्दी - गुणानन्दी - रहस्य - प्रकाश - गादाधरीत्याख्य-व्याख्याप्रस्थानानि सुविशदं विशेषता-उपव्याख्यादिवर्णनपूर्वकं न्यरूपिषत ।

वैशेषिकदर्शनस्य प्राचीनता परिशीलिता । वैशेषिकशब्दार्थविचारपूर्वकं वैशेषिकदर्शनस्य स्थानं न्यायवैशेषिकयोः भेदं ऐकमत्यञ्च सम्यग्विचारितम् । सूत्रभाष्यवृत्तिरूपाश्च वैशेषिकग्रन्थाः सप्रतिपाद्यविषयं सुविशदं वर्णिताः । बौद्ध-प्रभावात् वैशेषिकसूत्रेषु पाठभेदाविर्भावः विचारितः । इदानीमनुपलभ्यमानाः वैशेषिकसूत्रव्याख्यारूपाः रत्नकोशादिस्वतन्त्रग्रन्थाश्च विमर्शसरण्यां परामृष्टाः ।

न्यायवैशेषिकसिद्धान्तप्रदर्शनपराः ग्रन्थाः यावन्तोऽमुद्रिताः मुद्रिताश्च विद्यन्ते तेषां सर्वेषां सपरिशीलनं विषयविस्तारः कृतः । ये षोडशपदार्थान् सप्त-पदार्थेष्वन्तर्भावयन्ति, ये सप्त पदार्थान् षोडशपदार्थेष्वन्तर्भावयन्ति, ते सर्वे ग्रन्थाः विचारसरण्यां आनीताः । एवं प्रसङ्गात् सङ्ग्रहेण रूपरेखाचित्रणद्वारा क्वचित् क्वचित् सविस्तरञ्च अवैदिकदर्शनानां सिद्धान्ताः, तेषां खण्डनपरा न्यायग्रन्थाश्च वर्ण्यविस्तारसहिता न्यरूपिषत ।

शाब्दबोधविषयकग्रन्थानां विचारप्रसङ्गे शाब्दबोधविषये न्यायमीमांसक-व्याकरणानुसारं शाब्दप्रक्रिया सूपवर्णिता । दार्शनिकाः वादाः वादिनः वादप्रधानाः क्रोडपत्ररूपाश्च न्यायवैशेषिकसिद्धान्तपराः ग्रन्थाः सुविस्तृताः ।

एवं मूलव्याख्योपव्याख्य,स्वतन्त्रप्रकरणभेदेन भिन्नाः सर्वेऽपि न्यायवैशेषिक-ग्रन्थाः क्रोडीकृता विद्यन्ते । न केवलं ग्रन्थानां सारप्रदर्शने, नापि केवलं ग्रन्थानां व्याख्यादिवर्णने, नापि च केवलं ग्रन्थकर्तॄणां कालादिनिरूपणे एव ऐदम्पर्यम्, परं

विमर्शकानां विभिन्नाशया अपि तत्र तत्र परिशीलिताः । परं साम्प्रदायिकसिद्धान्ते अभिलाषातिशयश्च प्रकटीकृतः । पठितॄणां अनुसन्धानकर्तॄणां च उपयोगाय विभिन्ना अनुक्रमणिकाश्च संयोजिताः ।

यद्यपि काव्यसाहित्येतिहासविषयकः संस्कृतभाषामय एतादृशग्रन्थ आधुनिकैर्विद्वद्भिर्विरचितो विद्यते । परं शास्त्रसम्बद्धाः दार्शनिका वा संस्कृतभाषामया ग्रन्था विरला एवेति तेषां निर्माणे मां प्रोत्साहितवद्भ्यः पण्डितेभ्यः प्राध्यापकवर्येभ्यः विशिष्य भूतपूर्वप्राध्यापकवर्येभ्यः Dr. K. K. राजा महाशयेभ्यः, इदानीं प्राध्यापकपदवीमलङ्कुर्वद्भ्यः Dr. N. वीषिनाथमहाशयेभ्यश्च मदीयां कृतज्ञतां निवेदये । मदीयां प्रार्थनां स्वीकृत्य A. O. R. पत्रिकायां यथासमयं अधिकस्थानदानेन प्रोत्साहकेभ्यः A. O. R. सम्पादकेभ्यः Dr. N. सञ्जीविमहोदयेभ्यः मदीया कृतज्ञता राजते । सुचारुरूपेण मुद्रितवते रत्नमुद्रणालयाय साधुवादाः समर्प्यन्ते । अन्येषामपि भागानां यथावसरं प्रकाशनाय भगवन्तं प्रार्थये । एतादृशाः ग्रन्था आचार्य–शिरोमण्यादिपरीक्षासु M. A. परीक्षासु च तत्तद्दर्शनविषयकसामान्यज्ञानाय अतीव उपकुर्वन्ति । विद्वांसः छात्राश्च अनेन किञ्चिदपि प्रयोजनं प्राप्स्यन्तीति, मदीयः परिश्रमः सफलो भवितेति च विश्वसिमि—

न विद्यादर्पतो ग्रन्थप्रवृत्तिर्मम, किं त्विदम् ।
विद्वन्मानसवासाय गन्तुं पाथेयमास्थितम् ॥

विद्वज्जनविधेयः

R. THANGASWAMI

फाल्गुनी - सङ्कटहरचतुर्थी, रुद्रोत्कारिसंवत्सरम्

21 - 3 - 1984

### सहायकग्रन्थाः

(1) मुद्रिताः सर्वे न्यायवैशेषिकदर्शनग्रन्थाः ।

(2) अमुद्रिताः विभिन्नहस्तलिखितपुस्तकालयस्थाः ग्रन्थाः ।

(3) हस्तलिखितपुस्तकालयप्रकाशिताः सविवरणग्रन्थसूचयः ।

(4) विदेशीयस्वदेशीयभाषामयाः शोधपत्रिकाः ।

# ABBREVIATIONS

| | |
|---|---|
| A.I.O.C. | All India Oriental Conference |
| A.L.B. | Adyar Library Bulletin |
| A.L.S. | Adyar Library Series |
| A.O.R. | Annals of Oriental Research |
| Ash.S.S. | Ashtoshmuukarchi Sanskrit Series |
| B.K. | Bibliothica Indica |
| C.A.S.S. | Calcutta Asiatic Sanskrit Series |
| C.S.S. | Chowkhambha Sanskrit Series |
| Ch.S.S. | Chowkhambha Sanskrit Series |
| G.J.G. | Ganganath Jha Granthamala |
| G.O.S. | Government Oriental Series |
| G O.S.B. | Government Oriental Series, Baroda |
| H.P.R. | Haradatta Prasad Sastri |
| H.S.S. | Haridas Sanskrit Series |
| I.O.L. | India Offiice Library |
| J.O.I. | Journal of Oriental Institute |
| J.A S.B. | Journal of Asiatic Society, Bengal |
| J O.I.B. | Journal of Oriental Institute, Baroda |
| K.M. | Kavyamala |
| K.S.S. | Kasi Sanskrit Series |
| L.D S. | Lalbhai - Dalpatbhai - Sanskrit Series |
| M G.O.M.L.S. | Madras Government Oriental Manuscripts Library Series |
| N.I.A. | New India Antiquary |
| P.N.S. | Pandit New Series |
| P.O.S. | Pune Oriental Series |
| S.B.S. | Saraswathi Bhavan Text Series |
| S.S. | Sanskrit Series |
| T.P.H. | Thesophical Publishing House |
| T.S.M.L. | Tanjore Sarasvati Mahal Library |
| T.S S. | Travancore Sanskrit Series |
| V.N.S. | Vijaya Nagaram Series |

—:*:—

# पत्रसंख्यानुसारिणी विषयानुक्रमणिका

# दार्शनिकरूपरेखानुक्रमणिका

---

# वर्णितग्रन्थानुक्रमणिका

---

# वैशेषिकग्रन्थाः

क्रोडपत्राणि–वादग्रन्थाश्च

# दर्शनमञ्जरी

By

R. THANGASWAMI

*Nyaya-Vyakarana Vedanta Siromani, Lecturer in Sanskrit,*

*Sanskrit Dept. University of Madras.*

विश्वसाहित्ये संस्कृतसाहित्यम् अतिप्राचीनं सर्वाङ्गपूर्णं क्रमप्राप्तविकासञ्चेति सार्वजनीनम् । साहित्यस्यास्य बहुषु अङ्गेषु अध्यात्मसिद्धान्तपरो भागः प्रधानतम इति साहित्यमर्मज्ञाः विचक्षणाश्शास्त्रज्ञाश्च । सोऽयं भागस्सहस्राधिकैः प्रकाशितैर-प्रकाशितैश्च ग्रन्थैः पूर्णो विकसितश्च राजते । अध्यात्मसिद्धान्तपरो भागः दर्शन-शब्देन व्यवहृतः प्रयुक्तश्च दृश्यते भारतीयसम्प्रदाये । दर्शनमञ्जरी इति नाम्ना सर्वेषां दर्शनानां सारं प्रबन्धरूपेण चिकीर्षतो मम प्रथमं दर्शनशब्दार्थविचारः, अध्यात्मसिद्धान्तपराणां ग्रन्थानां दर्शनशब्दव्यवहारे औचित्यञ्च वर्णनीयं भवति ।

यद्यपि भरताख्येन दुष्यन्तपुत्रेण अन्येन वा राज्ञा संघटितोऽयं देश इति भारतशब्दव्यवहारो देशस्यास्येति बहूनां मतम्, तथापि भासि - ज्ञाने ज्ञान-प्रकाशे रतः - आसक्तः, संलग्न इति व्युत्पत्त्या भारतोऽयं देश अनादिकालादारभ्य तत्त्वज्ञानार्जने व्यापृतो दृश्यत इति कथनमपि न दोषायेति रोचते मह्यम् ।

एवञ्च भारतीया अन्वर्थनामानस्तत्त्वज्ञानार्जने व्यापृता आसन् । ते शान्त-चित्ताः जितेन्द्रियाः दिव्यचक्षुषः अखिलं पदार्थजातं करतलामलकवत् प्रत्यक्षी-कुर्वाणाः विचारविवेकशीलाश्च भूत्वा मानवसमुदायस्य श्रेयसे कल्याणकामनया च यानि तत्त्वानि, यांश्च सिद्धान्तान् बुद्धियुक्तिसहितान् ज्ञानप्राप्तिसाधनभूतान् आविर्भावयामासुः, तानि दर्शनशब्देन व्यवह्रियन्ते । तथा च तेषां तपस्सम्पूतायाः धिषणायाः निखिलानां जागदिकानां पदार्थानां मूलंकषमालोचनापूर्वकः तत्त्वज्ञान-प्राप्त्यै युक्तिपूर्वकश्च यः प्रयत्नस्स एव दर्शनशब्दवाच्यो भवति । सोऽयं प्रयत्न एव

"आहारनिद्राभयमैथुनञ्च सामान्यमेतत् पशुभिर्नराणाम्"

इत्युक्तरीत्या पशुभिरभिन्नान् मानवान् पृथक् करोति, मानवजातेरुत्कर्षमापादयति च ।

मनुष्यः किल निसर्गत एव मननस्वभावः। मत्वा कर्माणि सी[1]व्यति इति मनुष्यशब्दव्युत्पत्तिसम्भवात्। यदा च स कृत्यैः प्रतिक्षणमाकुलः, चिन्तान्तर-विमुक्तः, वैषयिकसुखेषु सञ्जातालम्बुद्धिः विरक्तो वा भवति तदा स चिन्तयति सुतरामिमाँ जटिलां विश्वसमस्याम्-कोऽहम्? कुतोऽहम्? सर्वतो दृश्यमानस्यास्य जगतः किं सत्य स्वरूपम्? जगतोऽस्य उत्पत्तिः कथम्? सृष्टेः कारणं किम्? को नाम बन्धः? कथमेष आगतः? कथं प्रतिष्ठा अस्य? कथं विमोक्षः? कोऽसा-वनात्मा? परमः क आत्मा? तयोर्विवेकः कथम्?" इत्येवञ्जातीयकाम्। ईदृशानां प्रश्नानानां समस्यानां वा समुचितम् उत्तरं दर्शनेभ्य एव लब्धुं शक्यते। तादृश-चिन्तनमननपरिणतिभूतान्येव दर्शनानि। दर्शनान्येव सर्वेषामस्माकं प्रश्नानां योग्यं समुचितं युक्तियुक्तञ्च समाधानं दर्शयन्ति। [2]दृश्यते अनेन इति दर्शनशब्द-व्युत्पत्तेः। सरहस्यस्य निगूढतमस्य प्रपञ्चस्य तत्त्वम् अनेनैव दृश्यत तस्यान्वर्थता।

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।
तत्त्वं पूषन् अपावृणु सत्यधर्माय दृष्टये[3] ॥ इति

मन्त्रे तु दृष्टिशब्दः प्रयुक्तः। हिरण्मयेन पिधानभूतेन पात्रेणेव आत्मनः द्वारम् आवृतं दृश्यते। पूषन् सत्यस्य ब्रह्मणः परमात्मनः तत्त्वस्य दृष्टये-दर्शनाय द्वारमप-सारय" इति तस्यार्थः। तत्र दृष्टिशब्दः दर्शनार्थम् आवेदयति। एवमेव विचार-भेदे मते वादे वा सोऽयं दृष्टिशब्दः गीतायाम्[4]—

असत्यमप्रतिष्ठ ते जगदाहुरनीश्वरम्।
अपरस्परसम्भूतं किमन्यत् कामहैतुकम् ॥
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।

इत्यत्र प्रयुक्तः। दृशिर् धातोरेवोत्पन्नोऽयं शब्दः अनन्तरं सर्वासूपनिषत्सु बहुलं आत्मदर्शनार्थे प्रयुक्तो विद्यते। तथाहि—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य[5]" इति, "आत्मनो वा अरे दर्शनेन श्रवणेन मत्या

1. षीवु तन्तुसन्ताने पाणिनीयधातुपाठे 1108
2. दृशिर् प्रेक्षणे पाणिनीयधातुपाठे 988
3. ईशावास्योपनिषत्सु 15th Mantra.
4. भगवद्गीता अध्याय 16/8.9.
5. बृहदारण्यकोपनिषत्सु 2/4/5.

विज्ञानेन इदं सर्वं विज्ञातं भवति[1] " इति । इदमेव वाक्यं दर्शनस्य आधारभित्तिरवधार्यते । आत्मसाक्षात्कार एव मानवस्य चरमोद्देश्यम् । स च श्रवण मनननिदिध्यासनैरेव सम्भवति नान्यथा । इमान्येव श्रवणादीनि दर्शनहेतुत्वेन स्वीकृतानि—

"श्रोतव्यः श्रुतिवाक्येभ्यः मन्तव्यश्चोपपत्तिभिः ।
मत्वा तु सततं ध्येय एते दर्शनहेतवः[2] ॥ इति ।

पूर्वं श्रुतिवाक्येभ्यः श्रवणम्, श्रुतस्य बुबोधयिषया मनने प्रवृत्तिः, मननद्वारा पक्षप्रतिपक्षोपपत्तिभिर्निर्णीतेऽर्थे निदिध्यासनं प्रवर्तते । निदिध्यासनाद्धि आत्मदर्शनम् । एवञ्च श्रवणाभावे मननाभावः, मननाभावे निदिध्यासनाभावः, निदिध्यासनाभावे आत्मदर्शनाभाव इति प्रक्रिया । एवञ्च दर्शनशब्दः केवलात् प्रेक्षणरूपादर्थात् विकसित आत्मदर्शने आत्मदर्शनसाधनभूते शास्त्रे च व्यवहृतो दृश्यते । अत एव

"दर्शनं नयन—स्वप्न-बुद्धि-धर्मोपलब्धिषु । शास्त्रदर्पणयोश्च[3] "

इति दृश्यते । वस्तुतः तदिदं दर्शनम् एकमेव—"एकमेव दर्शनम्, ख्यातिरेव दर्शनम्[4] " इति प्रसिद्धेः । सर्वस्यास्य आत्मानात्मभेदभिन्नस्य प्रपञ्चस्य अन्यथाख्यातिरूपं ज्ञानं दर्शनशास्त्रेणैव भवितुमर्हति नान्यथा । एवमेव मनुस्मृतौ[5]—

वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणाञ्च संयमः ।
अहिंसा गुरुसेवा च निःश्रेयसकरं परम् ॥

सर्वेषामपि चैतेषाम् आत्मज्ञानं परं स्मृतम् ।
तद्धि अग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः ॥

सम्यग्दर्शनसम्पन्नः कर्मभिर्न निबध्यते ।
दर्शनेन विहीनस्तु संसारं प्रतिपद्यते ॥[6] इति ।

---

1. बृहदारण्यकोपनिषत्सु 2/4/5.
2. विवरणप्रमेयसंग्रहे p. 2. and मानवोपपुराणे chap. VI.
3. मेदिनीकोशे 20/73.
4. योगसूत्रभाष्ये समाधिपादे चतुर्थे सूत्रे
5. मनुस्मृतौ अध्याय 12/83-85
6. मनुस्मृतौ अध्याय 6/74

एवं याज्ञवल्क्यस्मृतावपि[1] —

"इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥"

इति दर्शनशब्द आत्मसाक्षात्कारे आत्मयाथातथ्यज्ञाने च प्रयुक्तः। तथा च सरहस्यस्य निगूढतमस्य प्रपञ्चस्य तत्त्वमार्गप्रदर्शकं ज्ञानविशेषधायकं ज्ञानविशेषप्राप्तिप्रयोजकं दर्शनमेव शास्त्रशब्देन व्यवह्रियते। [2]शास्ति च [3]त्रायते च इति शास्त्रम्, [4]शंसति च शास्त्रम् इति व्युत्पत्तेः।

"यच्छास्ति च क्लेशरिपूनशेषान् सन्त्रायते दुर्गतितो भवाच्च।
तच्छासनात् त्राणगुणाच्च शास्त्रम्[5]"

"प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते[6] ॥

"शासनात् शंसनात् शास्त्रं शास्त्रमित्यभिधीयते।
शासनं द्विविधं प्रोक्तं शास्त्रलक्षणवेदिभिः ॥

शंसनं भूतवस्त्वेकविषयं न क्रियापरम्"[7]। इति।

एवं च नित्येन वेदेन उपनिषद्भिश्च कृतकेन सूत्रादिना वा येन शब्दविशेषेण पुरुषाणां कस्मादपि प्रवृत्तिः कस्मादपि निवृत्तिर्वा उपदिश्यते तच्छास्त्रमिति भवति। एवं विधिनिषेधपरं शासनार्थकं शास्त्रं धर्मशास्त्रादि भवति। शंसनार्थकं तु वस्तुनः वास्तविकं स्वरूपमावेदयति वर्णयति च विधिनिषेधमुखेन। धर्मशास्त्रादि कर्तव्याकर्तव्यविधानप्रधानं पुरुषतन्त्राधीनं भवति। शंसनार्थकं ज्ञानप्रधानं दर्शनं तु वस्तुस्वरूप-

---

1. याज्ञवल्क्यस्मृतौ आचाराध्याये 8th verse.
2. शासु अनुशिष्टौ पाणिनीयधातुपाठे 1075
3. त्रैङ् पालने पाणिनीयधातुपाठे 965
4. शंसु स्तुतौ पाणिनीयधातुपाठे 728
5. नागार्जुनीयमूलमध्यमकारिका p. 3. Bibliothica Buddhica Series IV 1913.
6. श्लोकवार्तिके p. 350. Madras University Edn.
7. पराशरोपपुराणे अष्टादशाध्याये

प्रतिपादनपरं वस्तुतन्त्रं भवति। एवं च दर्शनं नाम वस्तुतत्त्वनिरूपकोऽभ्यर्हित पुरुषप्रणेतृकशब्दसन्दर्भविशेषः, अथवा तत्त्वज्ञानसाधनं शास्त्रमिति वक्तव्यम्।

एवंविधानां दर्शनग्रन्थानां विचारशैली विस्तृता अधिकं व्यापिका च भवति। दर्शनग्रन्थेषु च तत्त्वविज्ञानस्य, नीत्याः तर्कस्य मनोविज्ञानस्य प्रमाणानाञ्च विशदाः विचाराः व्याख्याश्च कृता दृश्यन्ते। दार्शनिकग्रन्थाः समन्वयात्मिकां दृष्टिं अनुसृत्य प्रवृत्ता एव विद्यन्ते। यद्यपि दर्शनेषु भेदा विद्यन्ते, सिद्धान्तेषु च भेदा दृश्यन्ते, परं किञ्चिदपि दर्शनं दर्शनान्तरस्य उपेक्षामकृत्वा युक्तियुक्तानां विचाराणां समीक्षां कुर्वदेव दृश्यते। अत एव दर्शनग्रन्थेषु विचाराणां विमर्शावसरे नूतना काचन पद्धतिः दर्शनकारैस्स्वीकृता। सा च पद्धतिः पूर्वोत्तरपक्षरूपा। एतां पद्धतिं आधारं कृत्वा दर्शनानि परमपुरुषार्थसाधनतत्त्वज्ञानसाधनानि भवन्ति। मानवजीवनस्य उन्नतं लक्ष्यं अधिगन्तुं दर्शनानां परिशीलनं मानवस्य नितान्तमावश्यकं भवति। दर्शनानां परिशीलनेन बुद्धिशक्तेः दूरदर्शितायाः विश्लेषणशक्तेश्च विकासस्सुतरां भवति। दर्शनानां अध्ययनं अध्यापनं परिशीलनं वा दुःखस्य कारणं दुःखनिवृत्त्युपायञ्च आवेदयति।

सर्वेषां दर्शनानाम् इदमेव परमं प्रयोजनम् यत — रागादिदोषवर्जनम्। "शमार्थं सर्वशास्त्राणि विहितानि मनीषिभिरित्यभियुक्तवचनात्। एवं तन्त्रवार्तिके[1] "विज्ञानमात्रक्षणभङ्गनैरात्म्यवादानामपि उपनिषत्प्रभवत्वम्, विषयेषु आत्यन्तिकं रागं निवर्तयितुमित्युपपन्नं सर्वेषां प्रामाण्यम्" इत्युक्तम्। एवं सति तत्र यदि दार्शनिका एव परस्परं दर्शनेनैव निमित्तेन रागद्वेषपरिग्रहवन्तो भवन्ति ततो हास्यतरं लोके किञ्चिदन्यन्न विद्यते इत्यापाततः यद्यपि प्रतिभाति। वस्तुतस्तु तत्तद्दर्शनमूलपुरुषाणां महतां वचस्सु परामृश्यमानेषु दर्शननिमित्तरागद्वेषशून्यत्वं स्पष्टमभिहितमवगम्यते।

अन्योन्यपक्षप्रतिपक्षभावात् परस्परं मत्सरिणः प्रवादाः।
नयानशेषानविशेषमिच्छन्नपक्षपाती समयस्तथार्हतः[2] ॥

इत्यार्हतवचनेऽपि स्वदर्शनस्य दर्शनान्तरविरोधगन्ध एव नास्तीति स्पष्टमुक्तं भवति। एवमद्वैतदर्शने[3]

---

1. तन्त्रवार्तिकम् p. 81. Benaras Edn. 1903
2. सर्वदर्शनसंग्रहे p. 86 Poona Edn.
3. माण्डूक्यकारिकायां अद्वैतप्रकरणे कारिका 17

स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम् ।
परस्परं विरुध्यन्ते तैरयं न विरुध्यते ॥

अत्रैवं शाङ्करं भाष्यम्[1]— एवं रागद्वेषोपेताः स्वसिद्धान्तनिमित्तमेव परस्परं विरुध्यन्ते । तैरन्योन्यविरोधिभिरस्मदीयोऽयं वैदिकस्सर्वानन्यत्वात् आत्मैकत्वपक्षो न विरुध्यते । यथा स्वहस्तपादादिभिराधाते जातेऽपि पुरुषो यथैक्यज्ञानेन न क्रुध्यत्येवमस्मिन् दर्शने दर्शनान्तरनिमित्तद्वेषादिर्नास्तीत्यभिप्रायः" इति । एवं विशिष्टाद्वैतदर्शनेऽपि सर्वस्य ब्रह्मात्मकत्वमुच्यते । ब्रह्मात्मकत्वं नाम सर्वस्य ब्रह्मशरीरत्वम् । "तथाच आत्मन इव परेषामपि विश्वरूपभगवद्रूपत्वानुसन्धाने कथं वैरावकाशः[2] ? एकशरीरावयवन्यायात्' इति वर्णितम् । प्रपञ्चे परिदृश्यमानं सर्वं सर्वशेषिणो भगवतो निरतिशयमनुकूलम् । तत्र किञ्चिल्लीलारसानुकूलम्, किञ्चिद् भोगरसानुकूलम्, इत्येता दृशसिद्धान्तनिष्ठावतो भागवतस्यापि भगवत इव सर्वं अनुकूलमेव । एवं स्थिते प्रातिकूल्यभावनाया एवाभावात् कथं परकीयसिद्धान्ते प्रद्वेषः । एवमद्वैतविशिष्टाद्वैतसिद्धान्तयोरपि एकशरीरन्याय एवानुसृतः । न्यायमिमम् अन्येऽप्येवमुदाहरन्ति[3]—

हस्तादिभेदेन बहुप्रकारः कायो यथैकः परिपालनीयः ।
तथा जगद्भिन्नमभिन्नदुःखसुखात्मकं सर्वमिदं तथैव ॥

एवं चार्वाकदर्शनमपि शान्तिमेव बोधयति-

सर्वहेतुनिराशंसं भावानां जन्म वर्ण्यते ।
स्वभाववादिभिस्ते च नाहुः स्वमपि कारणम् ॥

राजीव केसरादीनां वैचित्र्यं कः करोति हि ।
मयूर चन्द्रिकादिर्वा विचित्रः केन निर्मितः ॥

यथैव कण्टकादीनां तैक्ष्ण्यादिकमहेतुकम् ।
कादाचित्कतया तद्वद् दुःखादीनामहेतुता[4] ॥

---

1. शाङ्करं माण्डूक्यकारिका भाष्यम् p. 125. Anandasrama Edn.
2. तात्पर्यचन्द्रिका 11/55. Madras Edn.
3. बोधिचर्या p. 328.
4. बोधिचर्या p. 541.

अग्निरुष्णो जलं शीतं समस्पर्शस्तथानिलः ।
केनेदं चित्रितं तस्मात् स्वभावात्तद्व्यवस्थितिः[1] इति ।

अत्र दुःखादीनामहेतुतालक्षणया आकस्मिकतया तत्प्रयोजकत्वेन इतरेषु द्वेषो न कर्तव्यः। अपितु स्वभावभावनया शान्त एव भवेदित्यभिप्राय इति ज्ञायते। तथा च यो विचारशीलः पुरुषस्सर्वदर्शनसारं विजानाति तस्य मनस्सदा शान्तं भवति । एकदेशज्ञानिनां गृहीतग्राहित्वाभिमानो रूढमूलो भवति । नानादर्शनसार-ग्राहिणस्तु तादृशाभिमानविधुराः प्रायश्शान्ता भवन्ति । ततश्च य एव सर्व-शास्त्रज्ञस्तस्य शान्तं मनस्सदा इति वचनमनुसृत्य मनसश्शान्तिरेव सर्वदर्शनानां प्रयोजनं भवतीति स्वीकर्तव्यम् ।

तदिदं दर्शनं दृष्ट-अदृष्ट वादभेदात् द्वेधा भिन्नं विद्यते। तत्र दृष्टवादिदर्शनं तु दृष्टप्रपञ्चस्यैव अस्तित्वबुद्धिं स्वीकरोति । अदृष्टप्रपञ्चस्य आमुष्मिकपरलोकादि-शब्दव्यवहृतस्य नास्तित्वं स्वीकरोतीति कारणेन नास्तिकदर्शनं इति प्रसिद्धम् । अदृष्टवादिदर्शनन्तु दृष्टादृष्टपरयोरात्मानात्मनोरस्तित्वं स्वीकरोतीति आस्तिकदर्शननाम्ना प्रसिद्धम् । आस्तिकशब्द ईश्वरास्तित्ववादिनि प्रसिद्धः, नास्तिकशब्दश्च ईश्वरनास्ति-त्ववादिनि प्रसिद्धः । यद्येवं स्वीक्रियते तर्हि पूर्वमीमांसैकदेशिनः अपूर्वाणामेव फलदातृत्वं न तु तद्भिन्नस्य ईश्वरस्येति ईश्वरमनङ्गीकुर्वाणा अपि आस्तिकशब्द-व्यवहारानर्हा भवेयुः, एवं प्रकृति–पुरुषसम्बन्धात् जगत्सृष्टिवादिनः ईश्वरस्वीकारस्य आवश्यकतामनङ्गीकुर्वाणा सांख्या अपि आस्तिकशब्दभाजो न भवेयुः । यदि च परलोकास्तित्ववादी आस्तिकः, परलोकनास्तित्ववादी नास्तिक इति स्वीक्रियते तर्हि बौद्धा अपि केचन कर्मसिद्धान्त–परलोकास्तित्ववादिनः, तन्त्रप्रामाण्यवादिनस्तान्त्रि-काश्च आस्तिका भवेयु । तस्मात् "नास्तिको वेदनिन्दक"[2]इति वाक्यं प्रमाणं स्वीकृत्य वेदप्रमाण्यस्वीकर्तार आस्तिकः, वेदाप्रामाण्यास्वीकर्तारश्च नास्तिका इति स्वीकर्तव्यम् । एवं सति आस्तिकदर्शनेषु न्याय-वैशेषिक-सांख्य-योग-मीमांसा-वेदान्तसंज्ञकानि षड् दर्शनानि अन्तर्भवन्ति । नास्तिकदर्शनेषु अवैदिकदर्शनेष्विति प्रसिद्धेषु चार्वाक-बौद्ध-जैन दर्शनानि अन्तर्भवन्ति । इयं दर्शनभेदरूपरेखा-

1. सर्वदर्शनसंग्रहे p. 13. Poona Edn.
2. मनुस्मृतौ 2/11.

- दर्शनम्
  - आस्तिकम्
    - न्याय
    - वैशेशिक
    - सांख्य
    - योग
    - पूर्वमीमांसा
    - वेदान्त
      - शुद्धाद्वैत
      - द्वैत
      - विशिष्टाद्वैत
      - शैव
        - शैवसिद्धान्त
        - वीरशैव
        - शिवाद्वैत
        - काश्मीरशैव
      - अद्वैत
  - नास्तिकम्
    - चार्वाक
    - बौद्ध
      - वैभाषिक
      - सौत्रान्तिक
      - योगाचार
      - माध्यमिक
    - जैन
      - दिगम्बर
      - श्वेताम्बर

# दर्शनमञ्जरी

## न्यायदर्शनम्

तत्रादौ न्यायदर्शनसार आरभ्यते। सामान्यतः न्यायशब्दः नियमेन ईयते इति व्युत्पत्त्या नियमयुक्ते व्यवहारे प्रयुज्यते। अत एव न्यायालयः न्यायकर्ता इत्यादि व्यवहारोऽपि दृश्यते। एवं प्रसिद्धदृष्टान्तेन सदृशार्थेन न्यायशब्दप्रयोगो दृश्यते— स्थालीपुलाकन्यायः काकाक्षिगोलकन्यायः, देहलीदीपन्यायः, काकतालीयन्याय इत्यादिषु। परं शास्त्रग्रन्थेषु नीयते—प्राप्यते विवक्षितार्थसिद्धिरनेनेति व्युत्पत्त्या येन प्रतिपाद्यविषयस्य सिद्धिर्भवति, येन सिद्धान्तस्साधितो भवति स एव न्याय इत्युच्यते। स च प्रतिज्ञाहेतूदाहरणोपनयनिगमनात्मकः पञ्चावयवयुक्तो वाक्यसमूह एवेति स एव न्याय इति कथ्यते। "साधनीयस्यार्थस्य यावति शब्दसमूहे सिद्धिः परिसमाप्यते स पञ्चावयवोपेतवाक्यात्मको न्याय" इति वात्स्यायनभाष्ये[1]। अनुमानाङ्गभूतानि इमानि पञ्च वाक्यानि यदि परबोधनार्थं प्रयुज्यन्ते तदा परार्थानुमानमिति व्यवह्रियते। सूक्ष्मदृष्ट्या यदि विचारः क्रियते तर्हि परार्थानुमाने सर्वेषां प्रमाणानां संघटनं दृश्यते। प्रतिज्ञावाक्ये शब्दस्य हेतुवाक्ये अनुमानस्य उदाहरणवाक्ये प्रत्यक्षस्य उपनयवाक्ये उपमानस्य च संघटनं दृश्यते। अत एव न्यायवार्तिके[2] "समस्तप्रमाणादर्थाधिगतिर्न्यायः" एवं न्यायभाष्ये[3] "प्रमाणैरर्थपरीक्षणं न्यायः" इति वर्णितम्। तथा च न्यायशब्दः यत्र प्रमाणसाहाय्येन वस्तुविचारः क्रियते तत्र सर्वत्र प्रयोक्तुं शक्यत इति फलितम्। अत एव मीमांसाशास्त्रग्रन्थेष्वपि न्यायशब्दः प्रयुक्तो विद्यते - यथा - मीमांसान्यायप्रकाशः, न्यायमाला इत्यादि, एतेषु न्यायशब्दस्य वेदार्थनिर्णयसाधनं युक्तिसंगतविवेचनात्मकः अधिकरणात्मकश्च पदार्थ इत्यर्थः।

---

1. p. 30, C. S. S. 281.
2. p. 13, K. S. S. No. 33, 1916
3. p. 23, C. S. S. 281.

परन्तु न्यायशब्दः गौतमीयदर्शने रूढो भूत्वा गौतमसूत्र - भाष्य - वार्तिक-वृत्ति - तत्सम्बद्धेषु च ग्रन्थेषु एव प्रयुज्यते । अत्र कारणं गौतमसूत्राणां तत्परम्परागतग्रन्थानाञ्च प्रधानतया अनुमान - तदवयवविषयिणी प्रवृत्तिरेव । तस्मात् त एव न्यायशास्त्रशब्देन व्यवह्रियन्ते ।

न्यायशास्त्रमिदं न्यायविस्तरः, न्यायदर्शनम्, न्यायविद्या, गौतमीविद्या, अक्षपाददर्शनम्, तत्त्वशास्त्रम्, हेतुविद्या, वादार्थः, तर्कविद्या इत्यादिभिर्नामभिः व्यवहृतमपि आन्वीक्षिकी प्रमाणविद्येति समाख्ये सुतरां शोभेते ।

प्रदीपस्सर्वविद्यानां उपायस्सर्वकर्मणाम् ।

आश्रयस्सर्वधर्माणां सेयमान्वीक्षिकी मता ॥ इति

वात्स्यायनभाष्ये[1] आन्वीक्षिकी सर्वविद्याप्रकाशिका सर्वकर्मसाधिका सर्वधर्मणमाधारभूता चेति वर्णिता । प्रत्यक्षागमाभ्यां ईक्षितस्य अनु ईक्षणम्—अन्वीक्षा । तथा प्रवर्तत इत्यान्वीक्षिकी - न्यायविद्या - न्यायशास्त्रम्, इति । सेयमान्वीक्षिकी न्यायतर्कादिशब्दैरपि व्यवह्रियते इति न्यायभाष्ये[2] । आन्वीक्षिक्यां न्यायानां न्यायसम्बद्धानां विषयान्तराणाञ्च प्रतिपादनात् सा न्यायशास्त्रनाम्ना व्यवह्रियते ।

न्यायसाधारणविषयश्च प्रमाणानि । वाचस्पतिमिश्रैस्तात्पर्यटीकाया[3]मुक्तम्—"यद्यपीतरा विद्याः प्रामाणिकमेवार्थमभिनिविशन्ते तथाप्येतद्विद्याप्रतिपाद्यमेव प्रमाणादि उपजीव्य स्वे स्वे व्युत्पाद्येऽर्थतत्वे प्रवर्तन्ते, न तु प्रमाणाद्यपि व्युत्पादयन्ति" इति । तथा च न्यायशास्त्रस्य प्रमाणसंस्पर्शि नाम युज्यत एव । पदार्थोद्देशसूत्रे[4] च निर्देशप्राथम्यात् प्रमाणस्य न्यायप्रधानप्रमेयत्वं लभ्यत इति न्यायशास्त्रस्य प्रामाणशास्त्रमिति नाम सेत्स्यति । दृश्यते किल लोके अभिधेयबहुत्वे सत्यपि प्रधानप्रमेयसंस्पर्शि नामकरणम् । स्वप्रतिपाद्यरैवतकगिरिवर्णनाद्यर्थबहुत्वेऽपि प्रधानप्रमेयशिशु-

---

1. p. 38, C. S. S. 281
2. p. 24, C. S. S. 281.
3. p. 40, V. S. S. 15, 1898.
4. प्रमाणप्रमेयेत्यादिसूत्रे, न्यायसूत्रम् 1 - 1 - 1.

पालवधावलम्बि नामकरणं माघकाव्यस्य किरातार्जुनीयादेश्च दृश्यते । एवं उत्तर-मीमांसायाः जीववियदादिप्रतिपादकत्वेऽपि प्रधानप्रमेयब्रह्मसंस्पर्शि नामकरणं—ब्रह्मविद्या इति । ततश्च न्यायशास्त्रे प्रमाणानि हि प्रमेयात् पूर्वं निर्दिश्यन्ते प्रमेयसाधकानि । इदमेव च प्रमाणानां प्राधान्यं यत् प्रमेयनिर्वाहकत्वम् । तस्मात् प्रमाणविद्या इति नाम न्यायशास्त्रस्य सुतरामुपपन्नम् । अत एव पदवाक्यप्रमाण पारावारपारीणेत्यादि बिरुदावलिश्च पण्डितकवीनां श्रूयते । न्यायमञ्जर्यां[1] जयन्त-भट्टश्च "ननु वेदप्रामाण्यनिर्णयश्चेन्न्यायविस्तरः कृतमनेन मीमांसात एव तत्सिद्धेः । तत्र हि अर्थविचारवत् प्रामाण्यविचारोऽपि कृत एव । सत्यम् । स त्वानुषङ्गिकः मुख्यस्त्वर्थविचार एव । पृथक्प्रस्थाना हीमा विद्याः । सा च वाक्यार्थविद्या न प्रमाणविद्या" इति ग्रन्थेन न्यायशास्त्रस्य प्रमाणविद्या-समाख्यां मनुते ।

अस्य न्यायशास्त्रस्य सर्वशास्त्रोपकारत्वा सुतरां प्रसिद्धा । स्मृतिपुराणदिषु तस्य चतुर्दशविद्यास्थानानामेकतमत्वेन प्रतिपादनात् ।

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदास्स्थानानि विद्यानां धर्मस्य च चतुर्दश[2] ॥

अङ्गानि देदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश[3] ॥

आर्षं धर्मोपदेशं च देशकालाविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः[4] ॥

कामन्दकीये विद्याविभागे "आन्वीक्षिकी त्रयीवार्ता दण्डनीतिश्च शाश्वती" इति त्रय्यादिपूर्वत्वेन आन्वीक्षिक्याः निर्देशे हेतुः सकलविद्यार्थप्रकाशकत्वसकल-

---

1. p. 4, V. S. S. 10, 1895.
2. याज्ञवल्क्यस्मृतिः - आचाराध्यायः श्लोकः—3.
3. विष्णुपुराणम् 3 - 6 - 28.
4. मनुस्मृतिः 12 - 106.

विद्यार्थप्रकाशमूलकसकलक्रियानुष्ठानौपयिकत्वलक्षणं प्राधान्यमेवेति ज्ञातुं पार्यते। शब्दसाधुत्वान्वाख्यानपरस्य पाणिनीयस्येव आन्वीक्षिकीप्रतिपाद्यं प्रमाणादि उपजीव्य शास्त्रान्तराणां अभिमतार्थव्यवस्थापकत्वात् आन्वीक्षिक्या अपि सर्वशास्त्रोपकारकत्वं सुतरां उपपन्नम्। विद्यानां यानि कर्माणि प्रतिपाद्यानि सामाग्निहोत्रकृष्यादीनि तेषाम्, आदित्यो वै यूपः, यजमानः प्रस्तरः, व्रीहीनवहन्ति, ग्रहं संमार्ष्टि, श्येनेन यजेत इत्यादिभ्यो वाक्येभ्यश्च अभिमतार्थप्राप्तिः आन्वीक्षिकीप्रतिपादितसंशयपरीक्षादि प्रमाणविनिवेशद्वारेणैव सिध्यति। एवं दण्डनीतिवार्तयोरपि द्रव्यगुणकर्मणां अभिमतानभिमतोपायतापरिज्ञापनम्, साध्यसाधनेतिकर्तव्यतासु प्रवर्तनम्, अनुष्ठानगतानां प्रयोजकत्वाप्रयोजकत्वादीनां निर्णयश्च आन्वीक्षिकीगम्या एव। अर्थशास्त्रे च कौटिल्येन आन्वीक्षिक्या लोकयात्रानिर्वाहकत्वं प्रतिपादितम्[1]। त्रयीप्रतिपाद्ययोः धर्माधर्मयोः वार्ताप्रतिपाद्ययोरर्थानर्थयोः दण्डनीतिप्रतिपाद्ययोर्नयापनययोः प्राबल्यदौर्बल्यविचारश्च हेतुभिरान्वीक्षिक्यामेव साध्यते। तथा च सर्वविद्यानां परीक्षणसाधनत्वात् सर्वकर्मणां आरम्भादिफलाधिगमपर्यन्तानुष्ठानवैचित्र्यप्रतिभोत्पादकत्वात् वैदिकलौकिकसर्वकर्मणां आन्वीक्षिक्या अवधार्यत्वात् व्यसनेऽभ्युदये च बुद्धेरवस्थापनात् प्रज्ञा-वाक्य-क्रियावैशारद्यापदानाच्च आन्वीक्षिकी सर्वशास्त्रोपकारिणीति भवति।

न्यायशास्त्रस्य विद्यास्थानत्वञ्च न्यायमञ्जर्यां वर्णितम्[2]। विद्यास्थानत्वं नाम चतुर्दशानां शास्त्राणां पुरुषार्थसाधनोपायत्वमेवोच्यते। वेदनं-विद्या, तच्च न घटादिवेदनम्। अपि तु पुरुषार्थसाधनवेदनम्। विद्यायाः-स्थानम्=आश्रयः—उपाय इत्यर्थः। तच्च पुरुषार्थसाधनज्ञानोपायत्वञ्च कस्यचित् साक्षात्कारेण, कस्यचिदुपायद्वारा इति। एवं न्यायविस्तरस्तु मूलस्तम्भभूतस्सर्वविद्यानाम्, वेदप्रामाण्यहेतुत्वात्। वेदेषु हि तार्किकरचितकुतर्कविप्लावितप्रामाण्येषु शिथिलितास्थाः कथमिव बहुवित्तव्ययायासादिसाध्यं वेदार्थानुष्ठानमाद्रियेरन् साधवः। किंवा स्वामिनि वेदे परिम्लाने तदनुयायिना मीमांसादिविद्यास्थानपरिजनेन कृत्यं भवेत्। तस्मादशेषदुष्टतार्किकोपमर्दनपूर्वकं दृढतरवेदप्रामाण्यप्रत्ययाधायि न्यायं

1. अध्यायः 2.
2. p. 3, V. S. S. 10.

उपदिशत् अक्षपादोपदिष्टं न्यायविस्तराख्यं शास्त्रं प्रतिष्ठाननिबन्धनमिति परं विद्यास्थानम्। एतेन सकलविद्याप्रतिष्ठानमूलकत्वात् न्यायशास्त्रस्य उपादेयता ज्ञायते। अत एव गौतमप्रथितं शास्त्रं सर्वशास्त्रोपकारकमिति च श्रूयते।

न्यायशास्त्रस्य प्रवृत्तिः द्विधा भिन्ना दृश्यते—प्रमेयप्रधाना, प्रमाणप्रधाना चेति। येषु ग्रन्थेषु प्रमेयविचाराणां प्राधान्यं भवति ते प्रमेयप्रधानाः। येषु ग्रन्थेषु प्रमाणविचाराणां प्राधान्यं भवति ते प्रमाणप्रधानाः। गौतमादारब्धेषु गङ्गेशोपाध्यायपर्यन्तेषु सर्वेषु ग्रन्थेषु प्रमेयाणां प्राधान्यदर्शनात् ते प्रमेयप्रधानाः ग्रन्थाः। गङ्गेशोपाध्यायादारब्धेषु सर्वेषु ग्रन्थेषु प्रमाणप्राधान्यदर्शनात् ते प्रमाणप्रधानाः ग्रन्थाः। तथा च प्रमेयप्रधानाः ग्रन्थाः प्राचीनन्यायशास्त्रे, प्रमाणप्रधानाः ग्रन्थाः नव्यन्यायशास्त्रे च परिगणनार्हा भवन्ति।

प्राचीननव्यन्याययोर्न केवलं विचाराणां प्राधान्ये भेदः, परं भाषायां शैल्याञ्च भेदो दृश्यते। प्राचीनन्याये प्रकारता - विशेष्यता - संसर्गता - प्रतियोगिता - अनुयोगिता - अवच्छेदकता-निरूप्यता-निरूपकताप्रभृतयः शब्दाः नैवाधिकं प्रयुक्ता दृश्यन्ते। परं नव्यन्याये एतेषां प्रयोगा अधिकं दृश्यन्ते। प्राचीन न्यायशास्त्रसाहित्यस्य शैली सरला सुगमा आडम्बररहिता च दृश्यते। प्रायोगिकशैल्यां रचितास्ते ग्रन्थाः संक्षिप्तास्साङ्केतिकाश्च दृश्यन्ते। अनुमानप्रयोगाश्च पञ्चावयवादिवाक्यैरप्रयुक्ता विद्यन्ते। तस्मादस्यानुमानत्वं अस्पष्टं भवति। परं नव्यन्यायशास्त्रस्य शैली परिमार्जिता आडम्बरपूर्णा स्वरूपतो दुर्गमापि शैलीसौन्दर्यात् अर्थतस्स्पष्टा भवति। पारिभाषिकाणां शब्दानां परिचये सति प्रतिपाद्यार्थावबोधे भाषया शैल्या वा काठिन्यं नानुभूयते। प्राचीनन्यायशास्त्रे विषयप्रतिपादनं तलस्पर्शि न भूत्वा स्थूलं भवति। नव्यन्याये विषयप्रतिपादनं सूक्ष्मातिसूक्ष्मविचारप्रधानं भूत्वा सर्वाङ्गस्पर्शि भवति।

षोडशपदार्थानां तत्त्वज्ञानात् निःश्रेयसाधिगम एव न्यायदर्शनस्य प्रतिपाद्यो विषयः। निःश्रेयसो नाम मोक्षः। स च प्रमाणादीनां षोडशपदार्थानां तत्त्वज्ञानेन विना न प्राप्तुं शक्यः। प्रमाणादीनां तत्त्वज्ञानं च तेषां उद्देश-लक्षण - परीक्षादिभिर्विना न भवेत्। अत एव त्रिविधा शास्त्रस्य प्रवृत्तिः—उद्देशः, लक्षणम्, परीक्षा चेति। तेषु नामधेयेन पदार्थमात्रकथनं उद्देशः। स च प्रथमसूत्र - प्रमाण- प्रमेय - संशय - प्रयोजन - दृष्टान्त - सिद्धान्त - अवयव - तर्क - निर्णय - वाद - जल्प -

वितण्डा - हेत्वाभास - छल - जाति - निग्रहस्थानानि इति[1] निर्दिष्टः । उद्दिष्टस्य तत्त्वव्यवच्छेदकोऽसाधारणोधर्मो लक्षणम्—यथा गोः सास्नादिमत्त्वम्, अश्वस्य एकशफवत्त्वमित्यादि । लक्षितस्य लक्षणं घटते न वा इति प्रमाणैरर्थावधारणं परीक्षा । तत्र क्रमप्राप्तं प्रमाणलक्षणं वर्णितं—प्रमाता येन अर्थं प्रमिणोति[2], उपलब्धिसाधनानि प्रमाणानि[3], प्रमाकरणं प्रमाणमि[4]त्यादिना । प्रमा हि नाम यथार्थज्ञानम्, तदतिशयसाधकं साधकतमं करणं प्रमाणमित्युच्यते । न हि प्रमाणज्ञानमन्तरा प्रमेयादीनां ज्ञानं भवितुं शक्यम् । एवं च यथार्थज्ञानसाधनानां प्रमाणादीनां तत्त्वज्ञानान्निःश्रेयसाधिगमप्रकारश्च एवं वर्णितः—"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायात् अपवर्गः[5] । दुःखादीनां यद्यत् उत्तरं तस्य तस्य विनाशे सति तदनन्तरस्यापायात् अपवर्गः । तत्र षोडशपदार्थानां तत्त्वज्ञानात् मिथ्याज्ञानापाये दोष अपैति, दोषापाये प्रवृत्तिरपैति, प्रवृत्त्यपाये निमित्ताभावात् जन्मापैति । जन्मापाये दुःखमपैति, निमित्तापाये नैमित्तिकस्याप्यपाय इति न्यायात् । दुःखात्यन्तापायश्च मोक्षः । एवञ्च प्रमाणादीनां षोडशपदार्थानां सम्यग् ज्ञान एव निःश्रेयसप्रेप्सुभिः सर्वैर्यत्न आस्थेय इत्ययं न्यायदर्शनस्य प्रतिपाद्यो विषयः ।

न्यायदर्शनस्य प्राथमिकः प्राचीनतम इदानीमुपलब्धश्च मूलग्रन्थः न्यायदर्शनाख्यस्सूत्रग्रन्थः ।

न्यायसूत्राणिः—ग्रन्थेऽस्मिन् पञ्च अध्यायास्सन्ति । प्रत्यध्यायं आह्निकद्वयम् । सूत्राणि पाठभेदेन[6] 528–532 सन्ति । प्रथमाध्याये प्रथमाह्निके एकचत्वारिंशत्सूत्राणि सप्त प्रकरणानि च सन्ति । तत्र द्वाभ्यां सूत्राभ्यां शास्त्रस्य विषयप्रयोजने दर्शिते । षड्भिस्सूत्रैः प्रमाणां लक्षणम्, चतुर्दशभिः प्रमेयाणां लक्षणम्, त्रिभिर्न्यायपूर्वाङ्गलक्षणम्, षड्भिर्न्यायाश्रयसिद्धान्त-

---

1. न्यायसूत्रम् 1—1—1.
2. वात्स्यायनभाष्य 1—1—1.
3. वात्स्यायनभाष्य 1—1—3.
4. तर्कभाषायाम् ।
5. न्यायसूत्रम् 1—1—2.
6. A. वाचस्पतिपाठे 528.
   B. वार्तिकपाठे 531.
   C. वृत्तिकारपाठे 532.

लक्षणम्, अष्टभिर्न्यायस्वरूपवर्णनम्, द्वाभ्यां न्यायोत्तराङ्गलक्षणञ्चोपवर्णितं विद्यते। प्रथमाध्यायस्य द्वितीयाह्निके चत्वारि प्रकरणानि विंशतिसूत्राणि च विद्यन्ते। तेषु त्रिभिः कथालक्षणम्, षड्भिर्हेत्वाभासलक्षणम्, अष्टभिश्छललक्षणम्, त्रिभिः पुरुषाशक्तिलिङ्गदोषसामान्यलक्षणञ्चोपवर्णितं दृश्यते। द्वितीयाध्यायस्य प्रथमाह्निके नव प्रकरणानि अष्टोत्तरषष्ठिसूत्राणि च सन्ति। तत्र सप्तभिस्संशयपरीक्षा, त्रयोदशभिः प्रमाणसामान्यपरीक्षा, द्वादशभिः प्रत्यक्षपरीक्षा, चतुर्भिः प्रासंगिकी अवयविपरीक्षा, द्वाभ्यां अनुमानपरीक्षा, पञ्चभिर्वर्तमानपरीक्षा, पञ्चभिरुपमानपरीक्षा, अष्टभिश्शब्दसामान्यपरीक्षा, द्वादशभिश्शब्दविशेषपरीक्षा चेति परीक्षाः कृता विद्यन्ते। द्वितीयाध्यायस्य द्वितीयाह्निके चत्वारि प्रकरणानि एकोनसप्तति सूत्राणि च सन्ति। तेषु द्वादशभिः प्रमाणचतुष्टृपरीक्षा, सप्तविंशतिभिः शब्दानित्यत्वम्, अष्टादशभिः शब्दपरिणामः, द्वादशभिः शब्दशक्तिपरीक्षा च कृता विद्यन्ते। तृतीयाध्यायस्य प्रथमाह्निके नव प्रकरणानि त्रिसप्तति सूत्राणि च सन्ति। तेषु सप्तविंशतिभिस्सूत्रैः आत्मपरीक्षा, पञ्चभिश्शरीरपरीक्षा, विंशतिभिरिन्द्रियपरीक्षा, दशभिरिन्द्रियनानात्वम्, द्वादशभिः पृथिव्यादिगुणाश्च वर्णिताः। तृतीयाध्यायस्य द्वितीयाह्निके द्विसप्तति सूत्राणि सप्त प्रकरणानि च सन्ति। तेषु नवभिस्सूत्रैर्बुद्धिनित्यत्वनिराकरणम्, अष्टभिः क्षणभंगवाद-परिणामवाद-सत्कार्यवादनिराकरणम्, चतुर्विंशतिभिः ज्ञानस्यात्मगुणत्वसाधनम् मनोगुणत्वनिराकरणञ्च, चतुर्भिस्स्मृतिकारणविचारः, दशभिश्शरीरचैतन्यनिरासः, चतुर्भिर्मनःपरीक्षा, त्रयोदशभिश्शरीरोत्पत्तिनिमित्तविचारश्च कृता विद्यन्ते। चतुर्थाध्यायस्य प्रथमाह्निके सप्तषष्ठिसूत्राणि चतुर्दशप्रकरणानि च सन्ति। तेषु द्वाभ्यां प्रवृत्तिदोषसामान्यपरीक्षा, सप्तभिः दोषत्रैराश्यविचारः, चतुर्भिर्जन्मान्तरपरीक्षा, पञ्चभिर्जगतश्शून्यतोपादानकत्वनिराकरणम्, त्रिभिर्जगतो ब्रह्मकारणकत्वनिराकरणम्, त्रिभिर्जगत आकस्मिकत्वनिराकरणम्, नवभिस्सर्वानित्यत्वनित्यत्वनिराकरणम्, त्रिभिस्सर्वपृथक्त्वनिराकरणम्, चतुर्भिस्सर्वशून्यतावादनिरासः, त्रिभिस्संख्यैकान्तवादनिराकरणम्, दशभिः फलपरीक्षा, चतुर्भिर्दुःखपरीक्षा, दशभिरपवर्गपरीक्षा चेति विद्यन्ते। चतुर्थाध्यायस्य द्वितीयाह्निके एकपञ्चाशत्सूत्राणि षड् प्रकरणानि च सन्ति। त्रिभिस्तत्त्वज्ञानोत्पत्तिवर्णनम्, चतुर्दशभिरवयवावयविनिरूपणम्, अष्टभिः परमाणोस्सावयवत्वनिरवयवत्वपरीक्षा, द्वादशभिः प्रमाणादिप्रतीतेर्मिथ्यात्वनिरासः, विषयमिथ्यात्वनिरासः, सौत्रान्तिकानां बाह्यार्थभंगवादनिराकरणञ्च, चतुर्दशभिस्तत्त्वज्ञानोपायाश्च वर्णिताः।

पञ्चमाध्यायस्य प्रथमाह्निके त्रिचत्वारिंशत्सूत्राणि सप्तदशप्रकरणानि च सन्ति। एषु जातेश्चतुर्विंशति भेदाः कथाभासाश्च वर्णिताः। द्वितीयाह्निके चतुर्विंशतिसूत्राणि सप्त प्रकरणानि च सन्ति। एषु द्वाविंशति निग्रहस्थानानि वर्णितानि विद्यन्ते।

एतेषां न्यायसूत्राणां प्रणेता गौतममुनिः। अस्य गौतमः,[1] अक्षपादः[2], मेधातिथिरित्यादीनि[3] नामानि दृश्यन्ते। रामायणकालप्रसिद्धः महर्षिः अहल्या-पतिर्वसिष्ठमित्रं गौतम एवायमिति वदन्तः केचन दृढतरप्रमाणशून्यां कथाञ्च वर्णयन्ति—पितृवाक्यपरिपालनाय वनं जिगमिषुं रामचन्द्रं निवारयितुकामः तर्क-तत्त्वाम्बोधिपारदृश्वा गौतमः तर्कालङ्कृतमिदं वचनमुवाच—"राम! किं वनवास-मिच्छसि? किं वनेषु सर्वेषु वासमिच्छसि? आहोस्वित् यस्मिन् कस्मिन् वने वास-मिच्छसि? यदि प्रथमः पक्षस्तर्हि चतुर्दशवर्षपरिमितः कालो न पर्याप्तः। यदि द्वितीयः पक्षस्तर्हि अयोध्यायास्समीप एव वने वासं कर्तुमर्हसि" इति। गौतमस्य तर्कपूर्णां वाचमाकर्ण्य स्तब्धवाक् रामचन्द्र एवमुवाच—"यः पठेत् गौतमीं विद्यां न स शान्तिमवाप्नुयात्" इति। गौतमस्य अक्षपादनामप्राप्तिविषये काचन किंवदन्ती प्रसिद्धा विद्यते। गौतमस्य मनः निरन्तरं तत्त्वचिन्तने मग्नमासीत्। मनसश्चक्षुरिन्द्रियसंयोगाभावात् यत्रतत्रगमने गौतमस्य गतिस्स्खलिता अभवत्। अतश्च भगवान् महेश्वरः कृपया गौतमस्य पादयोरक्षिणी ससर्ज इति अक्षः-नेत्रं-दर्शनसाधनतया जातं पादोऽस्येति अक्षपादसमाख्या संजाता इति। पादयोश्चक्षुषि संजातेऽपि मनसः पादचक्षुरिन्द्रियसंयोगाभावस्य तदवस्थतया अन्ये केचन अक्ष-पादसमाख्योत्पत्तौ कारणान्तरं वदन्ति—कदाचित् वेदव्यासापरनामधेयः कृष्ण-द्वैपायनमहर्षिः स्वमतदूषकः जीवब्रह्मणोर्भेदस्य तर्केण प्रतिपादकः गौतमः चक्षुषा मां मा पश्यतु, नाहं अस्यावलोकयिष्यामि इति प्रतिज्ञातवान्। तदा गौतमेन महर्षिणा व्यासस्य अवलोकनार्थं पादौ प्रसारितौ, सपदि व्यासेन प्रसादितस्य तस्य पादयोः चक्षुस्संजातमिति, अक्षपादनाम्ना गौतमस्स्तुतश्च इति। सूत्रनिर्माणकालश्च क्रैस्तवीयद्वितीयशतकादारब्धः षष्ठशतकान्तः (150 A. D. - 600 A. D.) इति कालनिर्णयपराणां मतम्।

---

1. विश्वनाथकृतन्यायसूत्रवृत्त्यन्ते।
2. न्यायभाष्ये, न्यायवार्तिक, तात्पर्यटीकायाञ्च।
3. प्रतिमानाटके पञ्चमेऽङ्के।







1. दिनकरी p. 234, Nirnaya Sagar Edn.
2. कारिकावली Verses 63-65.
3. विश्वनाथगौतमसूत्रवृत्ति p. 24-25 Benaras Edn. 1920.
4. न्यायसार p. 94. T. S. S. 109

## न्यायसूत्रभाष्यम्[1]

भाष्यमिदमतिप्राचीनम् । भाष्येऽस्मिन् सूत्रोपरि पूर्वाचार्यैरुद्भ सितानामप्यर्थानां निर्देशस्तत्र तत्र दृश्यते ।

सूत्रार्थो वर्ण्यते यत्र शब्दैस्सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥ इति

भाष्यलक्षणमस्मिन् सम्पूर्णं घटते । क्वचित् क्वचिद् सूत्राणां द्वेधा अर्थवर्णनमपि दृश्यते[2] । आत्यन्तिकनित्यसुखाभिव्यक्तिर्मोक्ष इति प्राचीनानां वादोऽत्र[3] खण्डितः । जैनमतावलम्बिना भद्रबाहुना दशवैकालिकनिर्युक्तिनामके ग्रन्थे, अथवा पूर्वतनैर्नैयायिकैस्सिद्धान्तितः प्रतिज्ञाहेतूदाहरणादिदशावयवसिद्धान्तः न्यायभाष्ये[4] खण्डितः । उपायकौशल्याख्ये बौद्धग्रन्थे प्रथमाध्याये साधितः पञ्चावयववाक्यगतयोरुपनयनिगमनयोर्नावश्यकत्वसिद्धान्तः भाष्येऽत्र[5] खण्डितः । लङ्कावतारसूत्रेषु षष्ठाध्याये साधितः बौद्धानां क्षणिकवादः, द्वितीयदशमाध्याययोर्वर्णितो योगाचाराणां विज्ञानवादश्च खण्डितः[6] । माध्यमिकसूत्राणां सप्तमेऽध्याये वर्णितो माध्यमिकवृत्तौ पोषितश्च शून्यवादः माध्यमिकबौद्धोक्तोदाहरणानुवादपूर्वं प्रतिक्षिप्तो [7]दृश्यते । अस्य भाष्यस्य कर्ता महर्षिर्गोत्रनाम्ना वात्स्यायनः[8] । पक्षिलस्वामीति नामान्तरम्[9] । अस्य जीवनकालः विमर्शकसरण्या 300-400 A. D.

न्यायभाष्यस्योदयकालः वैदिकबौद्धधर्मयोः संघर्षकाल आसीत् । तथा च बौद्धनैयायिकानां आस्तिकनैयायिकानां च वादेतिहासस्य श्रीवृद्धिर्नूतमाश्चर्यमावहति । न्यायसूत्रेषु बौद्धनैयायिकेन नागार्जुनेन दोषा उद्भाविताः । वात्स्यायनो

---

1. ptd. K. S. S. 43, 1920.
2. सूत्रम् 1 - 1 - 5.
3. सूत्रम् 1 - 1 - 22.
4. सूत्रम् 1 - 1 - 32.
5. सूत्रम् 1 - 1 - 39.
6. सूत्रम् 3 - 2 - 11, - 13, 4 - 2 - 26, 27.
7. सूत्रम् 4 - 2 - 31 - 33.
8. See न्यायभाष्ये, न्यायवार्तिके च ।
9. See न्यायवार्तिकतात्पर्यटीका ।

भाष्यकार अक्षपादसूत्रेषु बौद्धोद्भावितान् दोषान् स्वीये भाष्ये दूरीचकार। न्यायभाष्यप्रोक्तानां सिद्धान्तानां खण्डनम्, दिङ्नागेन बौद्धनैयायिकेन स्वीये प्रमाणसमुच्चयनामके ग्रन्थे कृतम्। न्यायवार्तिकं निर्माय उद्योतकरः दिङ्नागयान् आक्षेपान् मार्जयामास, प्रसंगात् वसुबन्धुप्रमुखानां बौद्धानाञ्च सिद्धान्तं खण्डयामास। ततश्च धर्मकीर्तिर्नाम बौद्धनैयायिकः प्रमाणवार्तिकं न्यायबिन्दुञ्च कृत्वा न्यायवार्तिकप्रोक्तान् सिद्धान्तान् दूषयामास। एव धर्मोत्तरनामा बौद्धश्च न्यायबिन्दुव्याख्यानिर्माणव्याजेन न्यायवार्तिकमदूषयत्। ततश्च उद्भटविद्वान् वाचस्पतिमिश्रः न्यायवार्तिकतात्पर्यटीकां निर्माय वार्तिकमतमपोषयत्। एवं उदयनाचार्यः न्यायवार्तिकटीकापरिशुद्धिं कृत्वा सर्वेषां बौद्धानां मतञ्च दूषयित्वा न्यायदर्शनमदुष्टं ख्यापयामास।

### न्यायवार्तिकम्[1]

वार्तिकमिदं भाष्योक्तान् अर्थान् युक्त्या साधयति न्यायसूत्राणां अर्थवर्णनमुखेन तलस्पर्शि गाम्भीर्यं प्रकाशयति। अत्र प्रदर्शिता प्रखरा तर्कप्रणाली तार्किकाणां समाजे कामप्यपूर्वां प्रतिष्ठामापादयति। वार्तिकमिदम्—

उक्तानुक्तद्विरुक्तानां विचारस्य निबन्धनम्।
हेतुभिश्च प्रमाणैश्च एतद्वार्तिकलक्षणम्॥ इति

वार्तिकलक्षणयुक्तं विद्यते। वार्तिकमिदं एकविंशति दुःखस्वरूपम्[2], निःश्रेयसस्य परापरभेदेन विभागम्, जीवन्मुक्तिक्रममुक्तिभेदञ्च उपपाद्य[3] दिङ्नागप्रोक्त प्रत्यक्षं कल्पनापोढमिति प्रत्यक्षलक्षणम्, एवं वसुबन्धुविचारञ्च दूषयति। तत्र तत्र "अपरे" "भदन्त" इत्यदिशब्दैस्तान निर्दिशति[4]। एवं जैमिनिप्रोक्तप्रत्यक्षलक्षणं दूषयति[5]। अनुमानस्य प्रत्यक्षात् वैलक्षण्यम्, स्मृत्यनुगृहीतो लिङ्गपरामर्शोऽनुमानमिति च प्रसाध्य बौद्धानां सिद्धान्तं

1. Ptd. K. S. S. 33, 1916.
2. p. 2.
3. p. 23.
4. pp. 40 - 42.
5. p. 43.

खण्डयति[1] । उपमाननिरूपणावसरे उपमानफले विवदन् दिङ्नागः दूषितः[2] । शब्दप्रामाण्यनिरूपणावसरे दिङ्नागीयं शब्दलक्षणं खण्डितम्[3] । वादविधिनामक-बौद्धग्रन्थे वर्णितं साध्याभिधानं प्रतिज्ञेति प्रतिज्ञालक्षणं प्रदूष्य[4], अक्षपादप्रोक्ते प्रतिज्ञालक्षणे सुबन्धुप्रोक्तानि दूषणानि प्रदूष्य[5] साध्यनिर्देशः प्रतिज्ञेति लक्षणं साधितम्, नागार्जुनप्रोक्ते दृष्टान्तलक्षणे दोषश्चापादितः[6] । सत्त्वरजस्तमसां सर्वापकृष्टसंघातः परमाणुरिति वादिनां साङ्ख्यानां मतं दूषितम्[7] । शब्दशक्तिनिरूपणावसरे वैयाकरणानां स्फोटवादः[8], विज्ञानवादिबौद्धानां अतद्व्यावृत्ति-रूपश्शब्दानामपोहवादश्च खण्डितः[9] । आत्मपरीक्षप्रकरणे आत्मानङ्गीकर्तॄणां शून्यवादिनां मतं उपन्यस्य 'स्वभ्या हितं = शून्य'मिति [10]व्युत्पत्तिप्रदर्शनपूर्वकं शून्यस्याविद्यमानतां प्रदर्शयति ।

सुघ्ननगरम्[11], पाण्ड्यदेशम्[12], मथुरानगरम्[13], तक्षशिलाम्[14], नारिकेल-द्वीपम्[15], सर्वाभिसमयसूत्राणि च[16] निर्दिशति । अस्य वार्तिकस्य निर्माता अतिप्रति-भावान् मेधावी कुशाग्रबुद्धिः तार्किकशिरोमणिः उद्योतकरः भारद्वाजापरनामधेयः । न्यायसंगतिमिवोद्योतकरस्वरूपामिति [17]संस्कृतसाहित्ये उद्योतकरस्य यशः प्रथितं

---

1. p. 45.
2. p. 58.
3. p. 60.
4. p. 117.
5. p. 136.
6. p. 137.
7. p. 250.
8. pp. 310 - 11.
9. p. 320.
10. p. 338.
11. p. 110.
12. p. 220.
13. p. 220.
14. p 220.
15. p. 273.
16. p. 339.
17. p. See वसुबन्धोर्वासवदत्ता p. 235, Halls Edn.

विद्यते । दिङ्नागीयप्रबलाक्रमोपप्लवैर्नष्टप्रभायाः न्यायविद्यायाः पुनरप्युद्योतकरत्वात् अयं भारद्वाज उद्योतकर इत्यन्वर्थनामा सञ्जातः । विमर्शकाणां दृष्ट्या अस्य जीवनकालः 600 D. A.

न्यायवार्तिकतात्पर्यटीका[1] (न्यायनिबन्धनम्)

न्यायवार्तिकस्य व्याख्यात्मकोऽयं ग्रन्थः महता पाण्डित्येन गम्भीरेण विचारेण च सम्पन्नः निर्तुस्सर्वतोमुखीं प्रतिभां वाचस्पतेः ज्ञानगाम्भीर्यञ्च स्फुटीकरोति । अत्र दिङ्नाग - वसुबन्धु - धर्मकीर्ति - वैभाषिक - सौत्रान्तिक - आर्हत शाक्य - भिक्षुक - दिगम्बर - संसारमोचक - बौद्धादिप्रभृतीनां नास्तिकानां मतमुपन्यस्य निरस्तम् । कापालिकानां प्रस्तावे (p. 31) "अविगीता हि व्यवहारपरम्परा अस्माकं कापालिकानां नरशिरःकपालस्पर्शतदवस्थितान्नपानोपयोगलक्षणा दक्षिणात्यानामिवाह्नैबुकादिलक्षणा क्रिया श्रेयस्करी, तस्मादस्माकमप्रत्यवायकरतया शुचि नरशिरः कपालम्" इति निर्दिशति शास्त्रारम्भसमर्थनप्रकरणे p. 2) दिङ्नागाक्षेपः, प्रत्यक्षलक्षणविचारावसरे वसुबन्धुप्रोक्त प्रत्यक्षलक्षणम् (p. 99), आत्मपरीक्षावसरे (p. 848) विज्ञानवादिबौद्धमतम्, संशयलक्षणविचारे (p. 173), हेत्वाभासविभागवर्णने (p. 228), विषयमिथ्यात्वनिरासप्रसङ्गे च (p. 468) सौत्रान्तिकानाम्, सर्वनित्यत्वनिरासावसरे (p 429) सौत्रान्तिकानां वैभाषिकाणाम्, तत्त्वज्ञानोपायकथनप्रसङ्गे माध्यमिकशून्यवादिनश्चेति बौद्धानां मतं खण्डितम् । अनुमानलक्षणवर्णने (p. 131) सांख्यीयानुमानलक्षणम्, सर्वनित्यत्वनिरासावसरे (p, 429) सर्वास्तित्ववादिनां वात्सीपुत्रीयाणां मतम्, विषयमिथ्यात्वनिरासावसरे (p. 467) प्रमाणवार्तिकोक्त "सहोपलम्भनियमादभेदो नीलतद्धियो"रिति वाक्यमनूद्य खण्डितम् । एवं कार्यसमनिरूपणावसरे (p 448) "कार्यत्वान्यत्वलेशेन यत्साध्यासिद्धिदर्शनम्, कार्यसममिति" वसुबन्धुप्रोक्तं, धर्मकीर्तिनानुमोदितञ्च लक्षणं खण्डितम् । एवं निग्रहस्थानविभागावसरे धर्मकीर्तिना स्वीकृतानां द्वाविंशतिविधानां प्रधानतया असाधनाङ्गवचनमदोषोद्भावनमिति द्वेधा विभक्तानां निग्रहस्थानानां न्यायभाष्योक्तयोः विप्रतिपत्त्यप्रतिपत्त्योरन्तर्भावं वर्णयति । एवं प्रतिज्ञासंन्यासवर्णनावसरे (p. 499) प्रतिज्ञासंन्यासमनङ्गीकुर्वतो धर्मकीर्तिनो मतं खण्डितम् । इतरव्यातिनिरसनपूर्वकं भ्रमस्थलेऽन्यथाख्यातिस्साधिता (pp. 54-57). । भाष्य-

1. ptd, V. S. S. 15, 1898.

वार्तिककाराभ्यां निर्विकल्पकसविकल्पकप्रत्यक्षानिरूपणे हेतुं उक्त्वा (p. 87) त्रिलोचनाचार्यमतेन निर्विकल्पकसविकल्पकप्रत्यक्षनिरूपणं कृतम्। एवं क्वचित् क्वचित् वार्तिकाशय उपेक्षितश्च दृश्यते—न्यायदर्शनप्रथमसूत्रघटकनिःश्रेयस-शब्दस्तु दृष्टादृष्टभेदेन द्विविधनिःश्रेयसपर इति वार्तिकाशयं, तत्रोपपादितं जीवन्मुक्तिकमुक्तिभेदञ्च उपवर्ण्य सूत्रकाराभिप्रेता चरममुक्तिरेवेति साधयति (p. 51)।

अस्य रचयिता सुप्रसिद्धस्सर्वतन्त्रस्वतन्त्रः महादार्शनिकः षड्दर्शनीटीका-कारः त्रिलोचनाचार्यशिष्यः मिथिलावास्तव्यः वाचस्पतिमिश्रः प्रथमः। पूर्वमीमांसायां मण्डनमिश्रविरचितविधिविवेकव्याख्या—न्यायकणिका, भाट्टगुरुमतानुसारेण भर्तृमिश्रमण्डनमिश्रयोः स्फोटवादविवेकखण्डनरूपः—तत्वबिन्दुः, उत्तरमीमांसायां ब्रह्मतत्वसमीक्षा, शङ्करब्रह्मसूत्रभाष्यव्याख्या—भामती, न्यायशास्त्रे न्यायसूचीनिबन्धः, सांख्यशास्त्रे सांख्यकारिकाव्याख्या—सांख्यतत्वकौमुदी, योगशास्त्रे योगसूत्रव्यासभाष्यव्याख्या-तत्ववैशारदी च वाचस्पतेः कृतय इति प्रसिद्धिः। अस्य जीवनकालः 841 A. D. इति विमर्शकसरणिः।

तात्पर्यपरिशुद्धिः[1] (न्यायनिबन्धनव्याख्या)

ग्रन्थोऽयं तात्पर्यटीकाया व्याख्यारूपः। ग्रन्थेऽस्मिन् तात्पर्यटीकाव्याख्या-प्रसङ्गात् तत्र तत्र बहूनि न्यायतत्त्वानि प्रतिपादितानि। तात्पर्यटीकाया मङ्गलश्लोकव्याख्यावसरे शरीरादिविविक्तात्मसाक्षात्कार एव विज्ञानमिति प्रतिपाद्य अविशुद्धेः कारणानि भेदाश्च प्रतिपादिताः (p. 7)। प्रयोजनभेदानुपवर्ण्य (p. 13) प्रयोजनकथनं न्यायशास्त्रस्यैव न तु भाष्यस्येति साधयति। वार्तिककारेण ग्रन्थारम्भे मङ्गलं कृतं नवेति विचारमुपक्षिप्य मङ्गलवादस्य बीजावापः कृतः (p. 24)। षोडशपदार्थानां तत्त्वज्ञानान्निःश्रेयसाप्तिप्रकार उपवर्णितः (pp. 81-82)। वैराग्यं नाम भोगवैमुख्यमात्रम्, न तु रागाभावः (p. 89), ऐहिकामुष्मिकभेदेन प्रवृत्तेर्द्वैविध्यम् (p. 97), तत्तदुपाधिविशिष्टतत्तदनुभवत्वमेव तत्तज्जातीयत्वमिति जातीयत्वलक्षणम् (pp. 102-106), संशयस्य न्यायाङ्गत्वसमर्थनम्, (pp. 242-46)

---

1. ptd. B. I. 205, 1911, Indian Thought Series 7. Calcutta—S. S. 22, 1938.

प्रत्यक्षागमाविरुद्धन्यायवर्णनम् (p. 288), वादजल्पवितण्डानां सप्रयोजनत्वम् (pp. 288-293), हेत्वाभासानां पृथगुपदेशे हेतुकथनम् (pp. 343-346), परापरनिःश्रेयसोः श्रवणमननयोश्च साक्षात्परम्परया च तत्त्वज्ञाने हेतुत्ववर्णनम् (pp. 370-83), भ्रमस्थलेषु सारूप्यस्य नियतत्वस्थापनम् (pp. 390-398), नैरात्म्यज्ञानस्य मिथ्याज्ञानत्वानुपादेयत्ववर्णनम् (pp. 398-405), ख्यातिभेद-वर्णनपूर्वकमन्यथाख्यातिस्थापनम् (pp. 409-421), अभावस्यातिरिक्तपदार्थत्व-स्थापनम् (pp. 533-35), इत्यादयो विषया प्रसङ्गात् वर्णिताः। एवं दुःखहानिर्वा दुःखनिवृत्तिर्वा पुरुषार्थ इति मतम् (p. 87), प्रमाणलक्षणभेदनिरूपणावसरे सौत्रान्तिकानां निराकारवादिनां वैभाषिकबौद्धानां लक्षणम् (pp. 152-55), प्रमाण-अर्थ-पद-कृत्यविचारे एकदेशिव्याख्यानम् (pp. 197-202) अनुपलब्धिलिङ्गकानु-मानसाध्योऽभाव इति सौगतमतम् (p. 331), अनुपलब्धेः प्रमाणान्तरत्वम् (pp. 494-98), प्रत्यक्षलक्षणविचारावसरे वसुबन्धु—दिङ्नाग-जैमिनि वार्षगण्य प्रत्यक्षलक्षणानि अनूद्य खण्डितानि। क्वचित् भाष्यवार्तिकतात्पर्यटीकार्था-स्सङ्गृहीताः श्लोकरूपेण निर्दिष्टाश्च (p. 194) विद्यन्ते।

यद्यप्यं व्याख्या पञ्चानामेव सूत्राणां मुद्रिता तथापि व्याख्यायामस्यां न्यायशास्त्रतत्त्वानि सर्वाणि प्रतिपादितानि विद्यन्ते। व्याख्यायामस्यां तात्पर्य-टीकाव्याख्या—टीकाव्याख्यानमिति ग्रन्थः (p. 74) निर्दिष्टः खण्डितश्च। यदुक्तं ज्ञानश्रिया इति (p. 713) सौगतमतावलम्बिनः आचार्यज्ञानश्रीमित्रस्य वचनमनूद्य खण्डितम्। त्रिलोचनगुरुरिति वाचस्पतिमिश्रस्य विद्यागुरुर्न्यायमञ्जरीकारः निर्दिष्टः (p. 9)। सौगतमतावलम्बी प्रज्ञाकरः, तस्य वार्तिकालङ्कारग्रन्थश्च अनूद्य खण्डितः (pp. 667-8, 730)। अमुद्रितायां मिथिलास्थप्राचीनहस्तलिखित पुस्तक-रक्षणशालायां संरक्षितायां परिशुद्धिमातृकायां अन्ये श्रीवत्स-सनातनि-ज्ञानश्रीः राजकुलपाद-शङ्कराचार्याद्याः आचार्या निर्दिष्टा विद्यन्ते।

अस्य रचयिता तर्कधुरन्धरः न्यायप्रतिष्ठापनगौरवान्वितो मिथिलावास्तव्यो बौद्धसिद्धान्तखण्डनधुरीण उदयनाचार्यः। अस्याचार्यः श्रीवत्स इति केचित्[1]। एनमधिकृत्य कथेयं प्रसिद्धा। एकदा बौद्धाचार्यः कश्चन उदयनाचार्येण शास्त्रार्थ-

1. See Mss. No. 6002 T. S. M. L.

विचारं कुर्वन् वादे स्वपराजय माशङ्क्य मायया जिगीषुरेवमुवाच—स्वमतवर्णनेन शालग्रामशिलां जलमयीं कृत्वा द्रावयित्वा अदृश्य मदं करिष्यामि, यदि उदयनाचार्ये-स्स्वमतवर्णनेन तां जलमयीं कृत्वा पुनरपि शालग्रामशिलारूपमानेष्यति तदा न्याय मतं सत्यमिति स्त्री रिष्यामि। अन्यथा बौद्धमतमेव सत्यमिति स्वीकर्तव्यमिति। तदा उदयनाचार्येणापि तदीयां प्रतिज्ञां स्वीकृत्य एवमुक्तम्—उभावपि पुरःस्थित तुङ्गतात् तालद्रुमात् स्वं स्वं मतं वदन्तौ युगपद् निपतिष्यावः। त्वं तु वेदा अप्रमाणमिति वदन् निपत, अहं तु वेदाः प्रमाणामिति वदन् पतामि। यो जीविष्यत्यक्षतस्तस्य वाक्यं मतं च सत्यमिति सर्वे स्वीकरिष्यन्ति इति। तथा कृते उदयनाचार्यो जयं लेभे तस्यैव मतं सत्यमभूत्। एवं बौद्धानां पराजयात् परतः कदाचित् उदयनः पुरुषोत्तमक्षेत्रं गतवान्। तत्र श्रीमन्दिरं प्रविश्य भगवन्मूर्तिं न दृष्टवान्। यदा स्तवादिभिराराध्यापि भगवद्दर्शनं नालभत तदा अतिनिर्विण्ण एवमुवाच—

ऐश्वर्यमदमत्तोऽसि मामवज्ञाय वर्तसे।
उपस्थितेषु बौद्धेषु मदधीना तव स्थितिः॥

इत्युक्त्वा यदा निर्गन्तुमैच्छत् तदा भगवानपि दर्शनदानेन उदयनाचार्यमकृतार्थयत्। इति।

न्यायपरिशिष्टरूपा न्यायसूत्रवृत्तिः, न्यायकुसुमाञ्जलिः, आत्मतत्त्वविवेकः, इत्यपरं ग्रन्थत्रयं न्यायशास्त्रीयम्, किरणावली, लक्षणावली चेति ग्रन्थद्वयं वैशेषिकानुगतञ्चेति अस्य कृतयः। अस्य जीवनकालः 984 A. D. इति कालनिर्णयपराणां निश्चयः॥

परिशुद्धि प्रकाशः[1] (न्यायनिबन्धप्रकाशः)

ग्रन्थोऽयं उदयनाचार्यकृतस्य परिशुद्धिग्रन्थस्य व्याख्यात्मकः। व्याख्यायामस्यामेव नव्यन्यायस्य प्रमाणविचारसम्बद्धानां तत्त्वानां तत्र तत्र प्राचीनन्यायग्रन्थव्याख्यानिर्माणव्याजेन स्थानं लब्धम्। प्राचीननव्यन्याययोरुपकार्योपकारकभावश्च दृष्टिपथमायाति। मङ्गलस्य विघ्नध्वंसः फलमिति मणिकारमतं

1. ptd. B. I, 205 Calcutta, 1911. Calcutta. S. S. 22, 1938.

(p. 27) वर्णितम् । "निःश्रेयसाधिगम" इति न्यायसूत्रगतवाक्यांशस्य व्याख्यान्तराणि दूषितानि (pp. 35—38) । तर्कतर्काभाससंशयानां स्वरूपो विचारितः (p. 326) । सांख्यकारिकाकार ईश्वरकृष्णः (p. 27), कुमारिलभट्टः (pp. 194, 2(4) तन्त्रवार्तिकम् (p. 194) श्लोकवार्तिकम् (p. 311) ख्यातिविचारे प्राभाकरमतम् (p. 421) खण्डनकारस्य श्रीहर्षस्य मतम् (pp. 185, 700) गङ्गेशोपाध्यायस्य तत्त्वचिन्तामणिः (pp. 57, 164) स्मृतिकारणताविचारावसरे स्मृतिरयथार्थेति तत्त्वचिन्तामणितम् (p. 164), प्रमा-अप्रमा-लक्षणविचारे (p. 169) अन्यथाख्यातिस्थापनावसरे (p. 428) शक्तिनिरासावसरे (p. 439) समवायसाधनावसरे (p. 468) निर्विकल्पकज्ञानसाधनावसरे (p. 535) प्रत्यक्षलक्षणगत—अव्यपदेश्य पदार्थविचारे (p. 563) अनुमानलक्षणविचारे (p. 663) व्याप्तिलक्षणविचारावसरे (p. 682) उपाधिलक्षणविचारे (p. 689) एवमन्यत्र बहुत्र स्थले (pp. 27, 56, 113, 164, 229, 259, 272, 503, 699, 759) च पितृचरणा इति तत्त्वचिन्तामणिकारः गङ्गेशोपाध्यायः निर्दिष्टः । रत्नकोशकृतां मतमुपवर्ण्य (pp. 163, 194) खण्डितम् । साम्प्रदायिकशब्देन प्राचीना अन्ये केचन व्याख्याकारा निर्दिष्टाः । शिवादित्यमिश्रस्सगौरवं (p. 185) निर्दिष्टः । केचन सूत्रवृत्तिकाराः (pp. 228, 638) निर्दिष्टाः । एवं दिङ्नाग—दिगम्बराश्च (pp.28, 213, 214) निर्दिष्टाः ।

अस्याः कर्ता महामहोपाध्यायबिरुभूषितो मैथिलो नव्यन्यायप्रवर्तकस्य गङ्गेशोपाध्यायस्य पुत्रो बहूनां व्याख्याग्रन्थानां निर्माता वर्धमानोपाध्यायः । अस्य जीवनकालः 1250—1350 A. D. इति विमर्शकाः । अनेन अन्वीक्षानयतत्त्वबोधः, किरणावलीप्रकाशः[1], कुसुमाञ्जलिप्रकाशः[2], खण्डनखण्डखाद्यप्रकाशः, तत्त्वचिन्तामणिप्रकाशः, तर्कभाषाप्रकाशः, न्यायपरिशिष्टप्रकाशः[3], न्यायलीलावतीप्रकाशश्चेति[4] ग्रन्थाः विरचिता विद्यन्ते ।

न्यायनिबन्धप्रकाशटीका (वर्धमानेन्दुः)

वर्धमानेन्दुरित्यपरनामायं ग्रन्थः वर्धमानोपाध्यायकृतायाः परिशुद्धिप्रकाशाख्यायाः टीकाया व्याख्यारूप इति न्यायवार्तिकतात्पर्यपरिशुद्धिभूमिकायाम्

1. Ptd. B. I. 200. S. B. T. 45
2. Ptd. K. S. S. 30, 1956.
3. Ptd. C. S. S. 22, 1938.
4. Ptd. Ch. S. S. 64, 1927.

(p. 2), सर्वदर्शनसङ्ग्रहे[1] (p. 215) च दृश्यते। परं अडयार पुस्तकालयस्थ-मातृकापरिशीलनेन ज्ञायते यत्—नायं ग्रन्थः परिशुद्धिप्रकाशस्य व्याख्यारूपः, परं वर्धमानोपाध्यायकृतस्य किरणावलीप्रकाशस्यैव व्याख्यारूप इति।

अस्य कर्ता बलभद्रविजयश्रियोः पुत्रः न्यायबोधिनीकर्तुर्गोवर्धनमिश्रस्य ज्येष्ठभ्राता पद्मनाभमिश्रः। अस्य जीवनकालः 1600 A. D. इति निश्चयः। अनेन काणादरहस्यम, किरणावलीभास्करः[2], न्यायकन्दलीसारः, न्यायलीलावती-व्याख्यानुनयः[3], पदार्थधर्मसंग्रहसेतुः[4], तत्त्वचिन्तामणिपरीक्षा, तत्त्वचिन्तामण्यालोकपक्षधरोद्धारः, तत्त्वप्रकाशिकाटीका, इत्यादयो न्यायवैशेषिकग्रन्थाः कृता विद्यन्ते।

न्यायतात्पर्यमण्डनम्

ग्रन्थोऽयं वर्धमानोपाध्यायकृतस्य न्यायनिबन्धप्रकाशस्य व्याख्यारूप इति प्रतिभाति। ग्रन्थोऽयं सर्वदर्शनसंग्रहे p. 521 केवलं निर्दिष्टः। अन्यत्र कुत्रापि मातृकारूपेणापि न लभ्यते। अस्य कर्ता शङ्करमिश्रः बहूनां न्यायवैशेषिकग्रन्थानां कर्ता पञ्चदशशतकीयः। अनेनैव त्रिसूत्रीनिबन्धव्याख्या कृता तस्या एवेदं नामान्तरं स्यादित्यत्र न निश्चयः।

न्यायपरिशुद्धिव्याख्या—उद्योतः।

न्यायपरिशुद्धिव्याख्यात्मकोऽयं उद्योतनामा ग्रन्थः खण्डित अमुद्रितश्च आसियाटिक् सोसाइटि पुस्तकालये No. 4770 विद्यते। वाचस्पतिद्वितीयेन न्यायसूत्रवृत्तिभूते तत्त्वालोके (1-1-10 fol. 53. a) लन्दननगरस्थभारतीय-पुस्तकालयस्थे आदर्शपुस्तके, पुण्डरीकाक्षविद्यासागरकृते मुद्रिते कातन्त्रप्रदीपे (p. 715), एवं अमुद्रितायां शङ्करमिश्रेण कृतायां त्रिसूत्रीनिबन्धनव्याख्यायाम्—

प्रकाशदर्पणोद्योतकृद्भिर्व्याख्या कृतोज्ज्वला।
तथापि योजनामात्रं उद्दिश्यायं ममोद्यमः॥ इति च निर्दिष्टोऽस्ति।

---

1. G. O. S. I. Poona. 1924.
2. Ptd. S. B. T. 1, 1920.
3. Ptd. A. L. B. 8, 1944.
4. Ptd. Ch. S. S. 61, 1924.

अस्य कर्ता उद्योतकार इति प्रसिद्धः मैथिलः, जगदीशभट्टाचार्येण शब्दशक्तिप्रकाशिकायां (p. 171) कारकप्रकरणे, सरस्वतीभवनस्थपुस्तकालयस्थायां (fol. 190 a) एवं बम्बई रायल आसियटिक् सोसाइटि संरक्षितायां (fol. 160a) च प्रगल्भोपाध्यायेन कृतायां ईश्वरवादव्याख्यायाञ्च निर्दिष्टः दिवाकरोपाध्यायः। अनेन कुसुमाञ्जलिपरिमलः, किरणावलीविलासश्चेति ग्रन्थौ कृताविति ज्ञायते। अस्य कालः 1300 A. D. इति स्वीकर्तव्यम् ॥

न्यायपरिशुद्धिव्याख्या—न्यायनिबन्धदर्पणम्

ग्रन्थोऽयं न्यायपरिशुद्धि व्याख्यारूप अज्ञातप्राप्तिस्थानः ग्रन्थान्तरोपलब्धप्रमाणः हरप्रसादसूच्यास्तृतीये भागे (pp. 88, 89) निर्दिष्टः त्रिसूत्रीनिबन्धव्याख्यायां शङ्करमिश्रेण (H. P. R. No. 136) निर्दिष्टश्च विद्यते।

अस्य कर्ता जगन्नाथोपाध्यायपुत्रः दर्पणकार इति प्रसिद्धो मैथिलो वटेश्वरोपाध्यायः। अनेन न्यायलीलावतीदर्पणम्, उपाधिदर्पणश्चेति ग्रन्थद्वयं लिखितमिति श्रूयते परं न कुत्रापि लभ्यते, केवलं व्याख्यान्तरेषु निर्दिष्टं विद्यते। अस्य जीवनकालः (1400 A. D.) इति सिद्धान्तः।

त्रिसूत्रीनिबन्धव्याख्या

ग्रन्थोऽयं शिथिलो गलितश्च बङ्गालीलिप्यां दिनजपुरे वर्तत इति हरप्रसादशास्त्रिसूच्यां (III No. 136) दृश्यते। ग्रन्थोऽयं उदयनाचार्यकृतस्य न्यायनिबन्धस्य (परिशुद्धेः) साक्षादेव व्याख्यारूपः। ग्रन्थेऽस्मिन् परिशुद्धेर्व्याख्यान्तराणि प्रकाश-उद्योत-दर्पणानि निर्दिष्टानि।

अस्य कर्ता भवनाथमिश्र-भवान्योः पुत्रः जीवनाथस्य भ्रातृव्यः कणादापरनामको मैथिल रघुदेवोपाध्यायस्य शिष्यः शङ्करमिश्रः। न्यायवैशेषिकग्रन्थानां कर्तायं तत्त्वचिन्तामणिमयूखस्य, किरणावलीनिरुक्तिप्रकाशस्य, भेदप्रकाशस्य, खण्डनटीका—आनन्दवर्धनायाः, काणादरहस्यस्य, वादिविनोदस्य, वैशेषिकसूत्रोपस्कारस्य, लीलावतीकण्ठाभरणस्य, आत्मतत्त्वविवेककल्पलतायाः, बौद्धधिक्कारटीकायाः, अभेदधिक्कारस्य च कर्ता दृश्यते। अस्य जीवनकालः (1500 A, D.) इति कालनिर्णेतारः।

न्यायसूत्रभाष्यव्याख्या—न्यायमञ्जरी

अज्ञातप्राप्तिस्थानः ग्रन्थान्तरेषु केवलं निर्दिष्टोऽयं न्यायमञ्जरीनामा ग्रन्थः वात्स्यायनभाष्यस्य व्याख्यारूप इति प्रतिभाति। वाचस्पतिमिश्रेण न्यायकणिकायां (Benaras Edn. Verse. No. 3)

अज्ञानतिमिरशमनीं परदमनीं न्यायमञ्जरीं रुचिराम्।
प्रसवित्रे प्रभवित्रे विद्यातरवे नमो गुरवे ॥ इति,

एवं तात्पर्यटीकायाम् (p. 87)

त्रिलोचनगुरून्नीतमार्गानुगमनोन्मुखैः।
यथामानं यथावस्तु व्याख्यातमिदमीदृशम् ॥ इति निर्दिष्टम्।

अनिरुद्धाचार्येण त्रिलोचनाचार्यस्य न्यायमञ्जरी बहुवारं निर्दिष्टा (See J. O. I. Baroda Dec. 1954 - March - 55 pp. 241 – 44)। सरस्वतीभवनस्थे अमुद्रिते भट्टराघवेण कृते न्यायसारविचारे (Fol. 39 a, Mss. No. 65) त्रिलोचनाचार्यसम्मतिमाह इति निर्दिष्टम्। बौद्धेन ज्ञानश्रीमित्रेण ईश्वरवाददूषणे "मञ्जर्यां त्रिलोचनः पुनराह" इति, एवं

"दुर्नीताश्रमवेदिकाद्दृढतरस्तम्भानमून् शङ्कर-
न्यायालंकरण - त्रिलोचन - वाचस्पत्याह्वयान् हेलया।
उन्मील्य क्षणभङ्ग एष विहितो" इति निर्दिष्टम्।

एवं बौद्धेन रत्नकीर्तिना क्षणभङ्गाध्याये (B. I. Edn. p. 58) "यद्यपि न्यायमञ्जरीकारः प्राह"—यथा तर्हि त्रिलोचनाचार्यश्चर्वयति तथानयोरपि नीयतामभिप्रायः— तथा च न्यायमञ्जरी इति। एवं सर्वज्ञसिद्धिग्रन्थे च (p. 18) निर्दिशति। दुर्वेकमिश्रेण धर्मोत्तरप्रदीपे (Patna Edn. 1955 pp. 173-74) त्रिलोचनस्य न्यायभाष्यटीकाया उद्धरणानि उद्धृतानि। प्रमाणैरेतैर्न्यायमञ्जरीति वात्स्यायनभाष्यव्याख्यायास्सत्ता अनुमीयते।

अस्य <u>कर्ता</u> वाचस्पतिमिश्रगुरुः त्रिलोचनाचार्य इति न्यायकणिकायाः (verse. 3), तात्पर्यटीकायाः (p. 87) वाचस्पतिमिश्रवाक्यात्, परिशुद्धिप्रकाशे वर्धमानोपाध्यायवाक्यात् (p. 9) च ज्ञायते। अस्य जीवनकालः (900 A. D.) इति स्वीकर्तव्यम्।

न्यायभाष्य-वार्तिक-तात्पर्यटीकाव्याख्या — विवरणपञ्जिका

ग्रन्थोऽयं भाष्यस्य वार्तिकस्य तात्पर्यटीकायाश्च व्याख्यारूपः। नैयायिकं त्रिलोचनाचार्यम्, बौद्धं धर्मोत्तराचार्यञ्च निर्दिशन्नमुद्रितोऽयं जेसलमेरपुस्तकसूच्यां (p. 10) दृश्यते। अस्य रचयिता अनिरुद्धाचार्य इति भवनाथसिद्धान्तवागीशपौत्रेण रुद्रतर्कवागीशेन कृतायां अमुद्रितायां दीधितिटीकायां (Fol. 21. b & 22a) निर्दिष्टः। अस्य जीवनकाल 900—1000 A. D. इति विमर्शकाः (See JOI. Baroda Vol. 4, 1954—55, pp. 240—44)।

न्यायभाष्यव्याख्या — सिद्धान्तदीपः

ग्रन्थोऽयं न्यायभाष्यव्याख्यारूप इति सर्वदर्शनसंग्रहे (p. 521) निर्दिष्टः। अस्य प्राप्तिस्थानादिकं न ज्ञातुं पार्यते। बरोडापुस्तकालयेऽपि एतन्नामा कश्चन ग्रन्थ उपलभ्यते, परं ग्रन्थकर्तुर्नाम न दृश्यते। अस्य कर्ता मित्रमिश्र 1580 A.D. इति सर्वदर्शनसंग्रहे एव निर्दिश्यते।

न्यायभाष्यटीका

विश्वनाथेन कृतेयं टीकेति सर्वदर्शनसंग्रहे (p. 521) निर्दिष्टा। परं नान्यत्र दृश्यते। विश्वनाथपञ्चाननभट्टाचार्येण विरचिता तु न्यायसूत्रवृत्तिरेव न तु भाष्यटीका। विश्वनाथकालश्च 1634 A. D. इति निर्दिष्टम्।

न्यायभाष्यव्याख्या — अनुव्याख्या

अमुद्रितोऽयं न्यायभाष्यव्याख्यारूपो ग्रन्थः वाराणसीहस्तलिखितपुस्तकालये लभ्यते। H. P. R. सूच्यां (Vol. IV p. 263) दृश्यते च। अस्य कर्ता गङ्गाधरकविरत्नकविराजः बंगालवास्तव्यः चत्वारिंशतां ग्रन्थानां कर्ता न्यायकुसुमाञ्जलिसुबोधिन्याः तत्त्वचिन्तामणिव्याख्यायाः वैशेषिक-योग-सांख्य-ब्रह्मसूत्राणां च व्याख्याता इति ज्ञायते। अस्य जीवनकालः 1798-1885 A. D. इति निश्चयः।

न्यायभाष्यव्याख्या — चन्द्रः

भाष्यव्याख्यारूपोऽयं ग्रन्थः रघूत्तमपण्डितेन कृतो मुद्रितश्च (C.S.S. 55)।

न्यायभाष्यव्याख्या —

व्याख्येयं रामचन्द्रभट्टेन कृत इति Oppert सूच्यां दृश्यते, नातोऽधिकं ज्ञायते।

न्यायभाष्यव्याख्या — न्यायदीपिका

व्याख्येयं मिसरुकेण कृतेति राजेन्द्रलालसूच्यां दृश्यते।

## न्यायसूत्र - भाष्य प्रस्थान परम्परा




1. Ptd. K. S. S. No. 43, 1920.
2. Ptd. K. S. No. 43, 1920.
3. Ptd. K. S. S. No. 33, 1916.
4. Ptd. V. S. S. No. 15, 1898.
5. a. Ptd. Indian thought series No. 7.
   b. B. I. No. 205, 1911.
   c. Cal. S S. No. 22, 1938.
6. a. Ptd. B. I. No. 205. Calcutta 1911.
   b. Cal. S. S. No. 22, 1938.
7. Ptd. Ch. S. S. 55, 1920.

# न्यायसूत्रवृत्ति प्रस्थानम्

## न्यायसूचीनिबन्धः[1]

न्यायसूत्राणि द्विविधपाठयुक्तानि दृश्यन्ते—भाष्यकारसम्मतपाठः वृत्तिकार-सम्मतपाठश्चेति। सूत्राणां लघुतया स्वल्पाक्षरतया च भाष्यसहितानामेव सूत्राणां पठनपाठनसम्प्रदायः प्राचीने काले आसीत्। एवञ्च यत्र यत्र सूत्रकारेण ग्रन्थ-संकोचः कृतस्तत्र ग्रन्थवैशद्याय भाष्यकारेण सूत्रत्वेन भासमानानि बहूनि वाक्यानि रचितानि। तेषां मिश्रणात् भाष्यग्रन्थेन सूत्रपाठनिर्णयः दुर्लभस्सञ्जातः। बुद्धमतानुयायिभिः तार्किकैः कुहेतूत्थापनादिना भाष्यसहितपठनपाठनप्रचारः लुप्तप्रायश्चासीत्। तस्मात् एष सूत्रभाग एष भाष्यभाग इति निर्णयः पश्चात्तनानां दुर्लभस्सञ्जातः। तादृशीं दुरवगाहतां दूरीकर्तुं प्रवृत्तोयं ग्रन्थः न्यायसूचीनिबन्धः। ग्रन्थोऽयं न्यायदर्शनसारार्थबोधकः न केवलं न्यायदर्शनस्य अध्यायानां आह्निकानां प्रकरणसूत्राणां च संख्यां निर्धारयति परन्तु पदानामक्षराणामपि संख्यां निर्धारयति। अत एव—

यदलम्भि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम्।<br>
श्रीगोतमसुगवीनां अतिजरतीनां समुद्धरणात्॥ इति वदति।

अस्य कर्ता षड्दर्शनीटीकाकारः वाचस्पतिमिश्रः ग्रन्थमेनं वस्वङ्कवसुवत्सरे 898 = 841 A. D. विरचितवानिति ग्रन्थादेव ज्ञायते।

## न्यायपरिशिष्टम्[2]

न्यायसूत्राणां पञ्चमाध्यायस्यैव व्याख्यारूपोऽयं ग्रन्थः। अस्य प्रबोधसिद्धिः, बोधसिद्धिः, बोधशुद्धिरिति नामान्तराणि विद्यन्ते। तार्किकरक्षायां बहुवारं प्रमाणी-कृतोऽयं ग्रन्थः। ग्रन्थेऽस्मिन् शङ्कराचार्याः तेषां मतञ्च निर्दिष्टं खण्डितञ्च (p. 17)। अस्य निर्माता न्यायकुसुमाञ्जलि—आत्मतत्त्वविवेक लक्षणावल्यादीनां कर्ता उदयनाचार्यः। लक्षणावल्याः तर्काम्बराङ्कमितो 906 = 984 A. D. अस्य काल इति ज्ञायते।

---

1. Ptd, K. S. S. 43. 1920.
2. Ptd. Calcutta. 1938.

न्यायपरिशिष्टव्याख्या — प्रकाश[1]

गङ्गेशोपाध्यायपुत्रेण कुसुमाञ्जलिप्रकाशादीनां बहूनां प्रकाशाख्यानां व्याख्यानां कर्त्रा त्रयोदशशतकीयेन (1250-1350) A. D. वर्धमानोपाध्यायेन कृतो मुद्रितश्च ॥

न्यायमञ्जरी[2]

न्यायभाष्यानुगतसूत्रपाठानुसारि व्याख्यानमिदम्। अत्र सर्वाणि न्याय सूत्राणि उद्धृत्य न व्याख्यातानि, परं न्यायदर्शनसिद्धान्तप्रतिपादनाय लक्षण-सूत्राणि आवश्यकसूत्राणि च व्याख्यातानि। द्वादशभिराह्निकैः पूर्णोऽयं ग्रन्थः। तत्र प्रथमषट्के प्रमाणविचारः, त्रिषु आह्निकेषु प्रमेयविचारः, अनन्तरं द्वादशान्तेषु संशयादिपदर्थानां विचारश्च कृतः। पराभिमतप्रमाणलक्षणविभागखण्डनपूर्वकं नैयायिकाभिमतप्रमाणलक्षणं तद्विभागः, अर्थापत्त्यनुपलब्ध्योः सम्भवैतिह्ययोः प्रमाणा-न्तरत्वखण्डनम्, अभावस्यावस्तुत्वनिराकरणम्, विविधाक्षेपपरिहारपूर्वकं प्रत्यक्ष-लक्षणसूत्रव्याख्यानम्, शक्तेः क्लृप्तपदार्थेषु अन्तर्भावम्, सन्निकर्षसाधनम्, प्रत्यक्ष-लक्षणगतपदार्थनिरूपणप्रसंगात् वैयाकरणबौद्धादिमतखण्डनं सविकल्पज्ञानप्रामाण्य-साधनम्, अनुमानलक्षणसूत्रव्याख्यापूर्वकमनुमानत्रैविध्यवर्णनम्, प्रसङ्गात् मीमांसका-भिमतोपमानलक्षणखण्डनपूर्वकं साक्षेपसमाधनमुपमाननिरूपणम्, अनुमानेऽन्तर्भाव-वादं परिहृत्य शब्दप्रामाण्यसमर्थनम्, स्वतःप्रामाण्यवादखण्डनम्, प्रसंगात् ख्यातिविचारः, ईश्वरसाधकानुमानकथनम्, वेदानां पौरुषेयत्वसाधनम्, तेषामीश्व-रैककर्तृकत्वम्, वेदप्रामाण्यावगमोपायः अथर्ववेदप्रामाण्यसमर्थनम्, कर्मत्रैविध्यम्, पदार्थनिरूपणप्रसंगात् जातिसाधनम्, अपोहवादखण्डनम्, भावनास्वरूपभेद वर्णनपूर्वकं शब्दभावनानिराकरणम्, स्फोटनिराकरणम्, अभिहितान्वयवाद-अन्विताभिधानवादस्वरूपप्रदर्शनम्, साधुशब्दज्ञानाय व्याकरणाध्ययनावश्यकता, प्रमेयपदार्थनिरूपणप्रसगात् चार्वाकबौद्ध-साङ्ख्यादिमतनिरासपूर्वक आत्मतत्त्वप्रति-पादनम्, शरीरेन्द्रियादिनिरूपणम्, इन्द्रियाणां प्राप्यकारित्वम्, बुद्धेरात्मगुणत्व-साधनम्, ज्ञानायौगपद्यञ्चेति, अपवर्गस्वरूपनिरूपणप्रसंगेन अद्वैतमतखण्डनम्, दुःखाभावतास्थापनञ्च, संशयादिनिगमान्ताः पदार्थाः तर्कप्रभृतिछलान्ताश्च पदार्थाः जातिनिग्रहस्थानानि चेति इमे विषयाः वर्णिताः।

---

1. Ptd. Culcatta. 1938.
2. Ptd. V. S. S. 10.

अस्य ग्रन्थस्य रचयिता गौडदेशोद्भवः भारद्वाजकुलीनः कल्याणस्वामिनः पौत्रश्चन्द्रपण्डितस्य पुत्रः कादम्बरीकथासारनिर्मातुरभिनन्दस्य पिता सर्वशास्त्रार्थवादी जयन्तभट्टः। अनेन न्यायकलिकानाम्नी सूत्रवृत्तिरपि कृता। अस्य जीवनकालः 900—1000 A. D. इति विमर्शशैली।

न्यायकलिका[1] —

न्यायदर्शनप्रथमसूत्रव्याख्याव्याजेन प्रमाणानि प्रमेयान् समग्रनैयायिकसिद्धान्तांश्च सविभागं सग्रहेण स्वतन्त्ररूपेण च प्रतिपादयत्ययं ग्रन्थः। अस्य कर्ता न्यायमञ्जरीकारः चन्द्रपण्डितपुत्रः अभिनन्दपिता च जयन्तभट्टः दशमशतकीयः।

न्यायालङ्कारः —

पञ्चप्रस्थानन्यायतर्कापराभिधानोऽयं ग्रन्थः न्यायसूत्रभाष्य-वार्तिक-तात्पर्यटीका-परिशुद्धिगतान् अर्थान् सूत्रव्याख्यामुखेन प्रतिपादयति। ग्रन्थोऽयं षड्दर्शनसमुच्चयवृत्त्यां (Chap. II-p 94 B. I. Edn.) निर्दिष्टः। अमुद्रितोऽयं ग्रन्थः जेसलमेरपुस्तकालये वर्तत इति श्रूयते। अस्य कर्ता श्रीकण्ठचार्यः द्वादशशतकीय इति (1200 A. D.) प्रसिद्धिः।

न्यायालङ्कारटिप्पणम् —

श्रीकण्ठाचार्यकृतस्य न्यायालंकारस्य दुर्बोधतया न्यायालंकारव्याख्याव्याजेन न्यायसूत्र - भाष्य - वार्तिक - तात्पर्यटीका - परिशुद्धि - गतानर्थान् प्रतिपादयन्नयं ग्रन्थः पञ्चप्रस्थानन्यायतर्कव्याख्येति नामान्तरमपि लभते। ग्रन्थोऽयं षड्दर्शनसमुच्चयवृत्याम्—"एषां तर्कग्रन्थाः न्यायसूत्र-भाष्य-वार्तिक-तात्पर्यटीका-तात्पर्यपरिशुद्धि-न्यायालंकार-वृत्तयः, क्रमेण अक्षपाद-वात्स्यायन-उद्योतकर-वाचस्पतिमिश्र-श्रीउदयन श्रीकण्ठ-अभयतिलकोपाध्यायविरचिताः।" (Chap. II p 94. B. I. Edn.) निर्दिष्टः। अमुद्रितोऽयं जेसलमेर-पुस्तकालये लभ्यते। अस्य कर्ता लक्ष्मीतिलकजिनेश्वरयोः शिष्यस्त्रयोदशशतकीयः (1256—A. D.) अभयतिलकोपाध्याय इति विमर्शः (J. O. I. Baroda Vol. 8. 1958)।

---

1. Ptd. Princes of Wales S. B. T. No. 17

**तत्त्वबोधः —**

प्रमाणतत्त्वबोधः, प्रमेयतत्त्वबोधः, अन्वीक्षानयतत्त्वबोध इति नामान्तरैः प्रथितोऽयं वृत्तिग्रन्थः न्यायसूत्राणां पञ्चमाध्यायस्य व्याख्यात्मकः। जातिनिग्रह-स्थानवर्णनप्रधानस्य पञ्चमाध्यायस्य व्याख्याकरणव्याजेन प्रमाणानां प्रमेयाणाञ्च वर्णनं कुर्वन्नयं ग्रन्थ अमुद्रितः वाराणसीराजकीयपुस्तकालये लभ्यते। ग्रन्थोऽयं रुचिदत्तेन स्वीये न्यायकुसुमाञ्जलिमकरन्दे तृतीयस्तबके निर्दिष्टः[1]। अस्य कर्ता वर्धमानोपाध्यायः गङ्गेशोपाध्यायपुत्रः कुसुमाञ्जलिप्रकाशादीनां कर्ता त्रयोदशशतकीयः (1250—1380 A. D.)।

**तत्त्वालोकः —**

न्यायतत्त्वालोक इत्यपरनामायं ग्रन्थः न्यायसूत्राणां वृत्तिरूपः बहून् प्राचीनान् तरणिमिश्र—सनातनि वटेश्वरप्रभृतीन् नैयायिकान् निर्दिशति। गङ्गेशोपाध्यायस्य तत्त्वचिन्तामणिग्रन्थं बहुषु स्थलेषु प्रमाणीकुर्वन् तत्त्वचिन्तामण्युक्तान् मङ्गलवाद-मुक्तिवाद-विधिवादादीन् वादांश्च सूत्रव्याख्यानव्याजेन तत्र तत्र प्रतिपादयन् प्राचीननव्यन्यायसिद्धान्तौ सङ्गमयति। ग्रन्थोऽयं विश्वनाथीयन्यायसूत्रटीकायां p. 113 निर्दिष्टः। अपूर्ण अमुद्रितश्चायं ग्रन्थः लन्दननगरस्थभारतकार्यालयपुस्तकालये (I. 0. 205) लभ्यते।

अस्य कर्ता अभिनववाचस्पतिमिश्र इति प्रसिद्धः कर्ममीमांसकानां वंशे जातश्शास्त्रे दशकृतीनां स्मृतौ च त्रिंशन्निबन्धानां कर्ता भैरवेन्द्र—रामभद्रदेवयोरास्थानपण्डितः न्यायसूत्रोद्धार-न्यायरत्नप्रकाश-प्रत्यक्षनिर्णय-खण्डनोद्धार-अनुमाननिर्णय-शाब्दनिर्णय-चिन्तामणिप्रकाशादीनां कर्ता वाचस्पतिद्वितीयः पञ्चदशशतकवासी 1410—1490 A. D.।

**न्यायसूत्रोद्धारः —**

यथा च वाचस्पतिप्रथमेन न्यायसूचीनिबन्धे न्यायसूत्रगतानां अध्यायानां आह्निकानाञ्च परिगणनं कृतम्, तथैव वाचस्पतिद्वितीयेनापि (1410–1490 A. D.) सूत्राणामध्यायानामाह्निकानाञ्च परिगणनं कृतम्। परं न्यायसूत्रोद्धारे वाचस्पतिप्रथमस्येव सूत्रसंख्या 528 न विद्यते, नापि विश्वनाथीयवृत्तिग्रन्थस्येव सूत्रसंख्या

---

1. 3rd Chapter, p-5. Benaras Edn. 1912.

532 विद्यते, परन्तु वार्तिककारपाठमनुसृत्य 531 सूत्राणि परिगणितानि। ग्रन्थोऽयं हरप्रसादशास्त्रिसूच्यां दृश्यते। विजयनगरग्रन्थमालायां मुद्रितश्च।

**प्रकाशः —**

न्यायसूत्राणां वृत्तिरूपोऽयं ग्रन्थः दर्भङ्गापुस्तकालये, कलकत्ता आसियाटिकपुस्तकालये च लभ्यते। ग्रन्थेऽस्मिन् 522 सूत्राण्येव व्याख्यातानि। ग्रन्थोऽयं ग्रन्थकारस्य तर्कताण्डवनामानं ग्रन्थान्तरं निर्दिशति। अस्य कर्ता विश्वधरपुत्रः उमापतिभ्राता काशीवासी केशवमिश्रतर्काचार्यः। अस्य कालः 1525 A. D.।

**आन्वीक्षकीनयतत्त्वविवरणम् —**

पञ्चमाध्यायगतानामेव न्यायसूत्राणां व्याख्यारूपोऽयं ग्रन्थः वाराणसीसरस्वतीभवनपुस्तकालये अमुद्रितो लभ्यते। अस्य कर्ता रामभद्रसार्वभौमगुरुजगदीशभट्टाचार्यपिता भट्टाचार्यचूडामणिरिति प्रसिद्धः न्यायसिद्धान्तमञ्जरी-मणिमरीचिनिबन्ध-तात्पर्यदीपकादीनां कर्ता जानकीनाथभट्टाचार्यः। अस्य जीवनकालः (1529 A. D.)।

**न्यायरहस्यम् —**

अमुद्रितोऽयं न्यायसूत्राणां चतुर्थाध्यायपर्यन्तानां व्याख्याग्रन्थः वाराणसीसंस्कृतकलाशालासरस्वतीभवनपुस्तकालये लभ्यते। ग्रन्थोऽयं शब्दशक्तिप्रकाशिकाकर्त्रा जगदीशभट्टाचार्येण निर्दिष्टश्शब्दशक्तिप्रकाशिकायाम् (p. 150)। अस्य कर्ता जगदीशभट्टाचार्यगुरुः तार्किकचूडामणिभवनाथपुत्रः कुसुमाञ्जलि-गुणकिरणावलि-पदार्थतत्त्वविवेचनादिग्रन्थानां व्याख्याता सिद्धान्तरहस्य-सुवर्णतैजसत्ववादयोः कर्ता रामभद्रसार्वभौमः। अस्य कालः 1580—1650 A. D.।

**न्यायालोकः —**

न्यायसूत्राणां स्वपाठानुसारिणां सिद्धान्तान् अनुसृत्य रचितेयं व्याख्या "लघुटीका" इति नाम्ना च प्रसिद्धा। अस्य प्राप्तिस्थानादिकं न ज्ञायते, परन्तु न्यायवार्तिक भूमिकायां (p. 132. K. S. S. 33) सम्पादयित्रा निर्दिष्टम्। अस्य कर्ता भाषापरिच्छेदकर्ता विश्वनाथन्यायसिद्धान्तपञ्चाननः। अस्य कालः 1634 A. D.।

**न्यायसूत्रटीका[1]—**

न्यायसूत्राणां संक्षिप्तवृत्तिरूपोऽयं ग्रन्थः वृत्तिनिर्माणव्याजेन तत्र तत्र तत्त्वचिन्तामण्युक्तानप्यर्थान् अत्र नव्या इत्यादिग्रन्थेन समावेशं करोति। तात्पर्य-टीका—आत्मतत्त्वविवेक-दीधिति-तत्त्वालोकग्रन्थांस्तत्र तत्र निर्दिशति। परे तु, केचित्तु, कश्चितु इत्यादिना अन्येषां सूत्रव्याख्यामनूद्य खण्डयति।

नवद्वीपवासिनः वासुदेवसार्वभौमभ्रातुः रत्नाकरविद्यावाचस्पतेः पौत्रः विद्या-निवासस्य पुत्रः रुद्रवाचस्पतिभट्टाचार्यस्य भ्राता भाषापरिच्छेद-सिद्धान्तमुक्तावली-न्यायालोककर्ता विश्वनाथन्यायसिद्धान्तपञ्चानन अस्याः कर्ता। अनेन न्यायसूत्रटीका रसबाणतिथौ शकेन्द्रकाले 1559–1637 A. D. रचितेति ज्ञायते।

**मितभाषिणी—**

न्यायसूत्राणां वृत्तिरूपोऽयं ग्रन्थ अमुद्रितो वाराणसीराजकीयपुस्तकालये लक्ष्यते। अस्य कर्ता सांख्यवृत्तिसारस्य विष्णुसहस्रनामव्याख्यायाश्च कर्ता वागीश्वरभागीरथ्योः पुत्रः स्वयंप्रकाशतीर्थशिष्यः वेदान्तीत्युपाधिधारी महादेव-भट्टाचार्यः। अस्य विष्णुसहस्रनामव्याख्यानिर्माणकालः खबाणमुनिभूमितसंवत्सरः 1750-1694 A. D. इति ज्ञायते। अनेनैव तत्त्वानुसन्धानम्, अद्वैतचिन्ता कौस्तुभमिति तत्त्वानुसन्धानव्याख्या, अमरकोषटीका, अद्वैतसिद्धान्तपरः तत्त्व-चन्द्रिका, रामसहस्रनामस्तोत्रव्याख्या उणादिकोषश्च कृता विद्यन्ते।

**न्यायसिद्धान्तमाला[2]—**

प्रमेय-न्यायपूर्वाङ्ग-न्यायाश्रितसिद्धान्त-न्याय-न्यायोत्तराङ्ग-कथा-हेत्वा भास-छल-जातिप्रकरणानीति नवभिः प्रकरणैर्विभक्तोऽयं ग्रन्थः प्रमेयादिलक्षण-प्रतिपादकानि भाष्यपाठसम्मतानि केवलं 63 सूत्राणि विशदयति। गुरुमतम्, प्राभाकरमतम्, चार्वाक-बौद्ध-जैनमतम्, पाशुपतमतम्, भास्करमतम्, वेदान्ति-मतञ्च प्रसङ्गात् तत्र तत्र दूषयति। मणिकारदीधितिकाराशयञ्च विशदं वर्णयति। ज्ञानश्रि-सानातनि-रत्नकोषकार-शङ्करमिश्र-वर्धमानादयः नाम्ना निर्दिष्टाः। ग्रन्थेऽ-स्मिन् उपाधिवादः, पदार्थमाला चेति ग्रन्थकारस्य कृत्यन्तराणि निर्दिष्टानि।

---

1. Ptd. K. S. S. 43, 1920.
2. Ptd. S. B. T. 21, 1927.

अस्य रचयिता रामभद्रशिष्यः, पदार्थमालाप्रकाशकर्तुर्लौगाक्षिभास्करस्य, जनार्दनव्यासस्य च गुरुः, वाराणसीवासी जयरामन्यायपञ्चाननः। अनेन तत्त्वचिन्तामण्यालोकविवेक - न्यायकुसुमाञ्जलिकारिकाव्याख्या — गुणकिरणावलिप्रकाशदीधितिविवृति - तत्त्वचिन्तामणिदीधितिगूढार्थविद्योतन - काव्यप्रकाशव्याख्यातिलक - पदार्थमालादीनि कृत्यन्तराणि रचितानि। अन्यानि लघुप्रकरणानि क्रोडपत्राणि च अन्यथाख्यातितत्त्व-आकांक्षावाद-आख्यातवाद-कारकवाद-जातिपक्षतावाद-विशिष्ट - वैशिष्ट्यवाद - विषयतावाद - समासवाद - सामग्रीवाद - जयरामीयन्याय - नञर्थविवृतीत्यादीनि अमुद्रितानि मुद्रितानि च तत्र तत्र ग्रन्थालयेषु लभ्यन्ते। अस्य जीवनकालः 1600-1700 A. D. इति निश्चयः।

## न्यायसिद्धान्तचन्द्रिका—

अमुद्रितोऽयं न्यायसूत्राणां भाष्यगतानाञ्चार्थानां संग्राहकः ग्रन्थः लन्दननगरस्थभारतकार्यालयपुस्तकालयेऽन्यत्र च लभ्यते। अस्य कर्ता वाधूलगोत्रजः देवसिंहसुमतिपुत्रः विश्वरूपयतिशिष्यः मध्यार्जुनग्रामवासी दक्षिणदेशीयः नीलकण्ठदीक्षितसामयिकः कुवलयानन्दव्याख्या रसिकरञ्जिनी—वैशेषिकसूत्रवृत्तिरूपसव्याख्य काणादसिद्धान्तचन्द्रिका—अवैदिकदर्शनसंग्रहाणां कर्ता गङ्गाधरवाजपेयीति ज्ञायते। अस्य जीवनकालः 1625-1702 A.D. इति निश्चयः॥

## न्यायसूत्रवृत्तिः —

नास्य सत्तायां निर्णयः। परन्तु न्यायवार्तिकभूमिकायां (P. 132) एवं सर्वदर्शनसंग्रहे (P. 522) च निर्दिष्टा। अस्य कर्ता वैयाकरणः परिभाषेन्दुशेखरादिकर्ता शिवभट्टसतीदेव्योः पुत्रः हरिदीक्षितशिष्यः वैद्यनाथपायुगुण्डे—गङ्गारामयोर्गुरुर्नागोजीभट्टः (1714 A. D.) इति ज्ञायते।

## तत्त्वपरीक्षा—

न्यायसूत्रवृत्तिरूपोऽयं ग्रन्थः अमुद्रितः दर्भङ्गापुस्तकालये लभ्यते। अस्याः कर्ता वंशीधर अष्टादशशतकीय इति परं ज्ञायते नातोऽधिकम्।

## आधुनिकयः न्यायसूत्रवृत्तयः —

अमुद्रिता काचन न्यायसूत्रवृत्तिर्नाम्नी कृतिः पण्डितराधाकृष्णशास्त्रिसूच्यां दृश्यते। अस्य कर्ता आधुनिकनव्यनैयायिकः गादाधरी - जागदीशी - न्याय-

कुसुमाञ्जलीनां व्याख्यायाः, तत्त्वचिन्तामणिटिप्पण्याः बहूनां क्रोडपत्राणां रचयिता चन्द्रनारायण इति ज्ञायते । अस्य जीवनकाल एकोनविंशतिशतकम् । **न्यायसूत्रटीकाख्या** काचन वृत्तिराधुनिकेन (20th Cent. A. D.) आशुतोषतर्कभूषणेन कृता कलकत्तायां मुद्रिता च । राधामोहन-विद्यावाचस्पतिपण्डितेन विरचितं **न्यायसूत्रविवरणम्** वाराणस्यां (Pandit New Series 23) मुद्रितम् । नवीनशैल्या निर्मितेऽत्र ग्रन्थे सूत्राणां पाठभेदोऽपि दृश्यते । "तत्त्वं तु बादरायणात्" इति सूत्रं न्यायदर्शनस्य चतुर्थाध्यायस्य अन्तिमं सूत्रमिति ग्रन्थादस्माज्ज्ञायते । सूत्रमिदं सावतरणं निर्दिष्टञ्च । लघुचन्द्रिकाव्याख्याने विट्ठलेशीये चास्य प्रामाण्यमुपलभ्यते । **प्रसन्नपदाभिधा** न्यायसूत्रवृत्तिः काचन न्यायपूर्वोत्तरमीमांसाशास्त्रेषु विदुषा अद्वैतचन्द्रिकाकर्त्रा सुदर्शनाचार्येण (1900 A. D.) कृता मुद्रिता च (Bombay 1922) । आधुनिकेन हरिप्रसादस्वामिना कृता काचन वृत्तिः मुद्रिता (Bombay 1909) **वैदिकवृत्तिरिति** तस्या नाम । **तत्त्वसुधालहरीति** प्रसिद्धा अपरा व्याख्या हरिदत्तशर्मणा कृता मुद्रिता (Lahore 1913) । बालकृष्णमिश्रनामकेनापरेणाधुनिकेन निर्मिता **तात्पर्यविवृतिरिति** काचन सूत्रवृत्तिश्चतुस्सूत्रीपर्यन्तमेव वाराणस्यां मुद्रिता (1919) । निम्बार्कमतानुयायिना मुकुन्ददासेन कृता काचन **न्यायसूत्रवृत्तिः** औधसूच्यां दृश्यते । प्रवादकनाम्ना कृता काचन **न्यायसूत्रटीका** पूर्णा अमुद्रिता च तिरुवनन्तपुरपुस्तकालये लभ्यते । अम्बाप्रसादशास्त्रिणाधुनिकेन कृता काचन **न्यायसूत्रटिप्पणी** चौखाम्बासंस्कृतग्रन्थमालायां (No. 55) मुद्रिता (1920) । प्रसन्नराघवव्याख्या-प्रभाकरप्रदीपिकादिग्रन्थकर्त्राधुनिकेन (1871-1941 A. D.) गङ्गानाथझामहाशयेन कृता **खद्योतनाम्नी** न्यायसूत्रवृत्तिः चौखाम्बासंस्कृतमालायां (No. 55) मुद्रिता । **भाष्यच्छायानाम्नी** न्यायसूत्राणां वात्स्यायनभाष्यस्य च अर्थसंग्राहिका काचन सूत्रवृत्तिः पञ्चमाध्यायस्य द्वितीयाह्निकपञ्चमसूत्रपर्यन्तमेव लिखिता आधुनिकेन कैलासचन्द्रभट्टाचार्येणेति ज्ञायते (Ref. P.133) न्यायावार्तिकभूमिकायाः । प्राप्तिस्थानं तु नोपलभ्यते । यादवानन्देन कृता **रत्नमालाख्या** काचन न्यायसूत्रवृत्तिरमुद्रिता बरोडापुस्तकालये रक्षिता विद्यते ।

न्यायसूत्राणि

वृत्तयः

- न्यायसूची निबन्धः
- न्यायपरिशिष्ट — प्रकाश
- न्यायमञ्जरी
- न्यायकलिका
- न्यायालङ्कारः
- न्यायालङ्कारटिप्पणम्
- तत्त्वबोधः
- न्यायसूत्रोद्धारः
- प्रकाशः
- अन्वीक्षकीनयतत्त्वविवरणम्
- न्यायरहस्यम्

- टीका
- वृत्तिः
- तत्त्वपरीक्षा
- वृत्तिः
- न्यायसिद्धान्ताचन्द्रिका
- न्यायसिद्धान्तमाला
- मितभाषिणी
- न्यायालोकः
- वृत्तिः
- तत्त्वालोकः

- विवरणम्
- प्रसन्नपदा
- वैदिकवृत्तिः
- तत्त्वसुधालहरी
- तात्पर्यवृत्तिः
- वृत्तिः
- टीका
- टिप्पणी
- खद्योतः
- भाष्यच्छाया
- रत्नमाला

एवं क्रैस्तवीयद्वादशशतकान्तं न्यायशास्त्रसाहित्यं सूत्र-भाष्य-व्याख्यान-पद्धत्यां विकसितमासीत्। परं त्रयोदशशतकादारभ्य न्यायशास्त्रे काचन नूतना सरणिराविरभूत्। तस्यां सरण्यां सूत्रव्याख्यानपद्धतेरप्राधान्यं सूत्रभाष्याभिमतविषयाणां विचारस्यैव प्राधान्यं दृश्यते। तत्रापि प्रमेयविचारस्य गौणत्वं, प्रमाणविचारस्यैव मुख्यत्वञ्च दृश्यते। विषयविवेचनावसरे प्राक्तनमार्गे परिष्कारं आधातुं सम्भावितानां सर्वेषां आशङ्कानां विध्वंसनाय च या विवेचनसरणिस्समादृता सा प्राचीनग्रन्थेभ्योऽपि नवीना दृश्यते। प्राचीनग्रन्थेषु विस्तरेणोपपादितस्य विषयस्य सपरिष्कारं मितेन वचसा प्रतिपादनमपि नवीनं दृश्यते। अत एव त्रयोदशकालादारब्धानां न्यायग्रन्थानां नव्यन्यायग्रन्थव्यपदेशोऽपि युज्यते। तेषु नव्यन्यायग्रन्थेषु सर्वप्रथमं निर्देशार्हो ग्रन्थः—

### तत्त्वचिन्तामणिः[1]

मीमांसकादेः विशिष्य प्राभाकरमीमांसकस्य प्राचीननैय्यायिकानाञ्च मतविशेषनिरसनपूर्वकं प्रमाणचतुष्टयस्य तत्त्वं व्युत्पादयन् द्वादशसहस्रग्रन्थपरिमितोऽयं अन्वर्थनामा गङ्गेशोपाध्यायेन निर्मितश्च ग्रन्थः नव्यन्यायशास्त्रस्यादिमो राजते।

ग्रन्थस्यास्य प्रत्यक्षखण्डे प्रथमतो मङ्गलवादः प्रस्तुतः। मङ्गलाचरणस्य अविगीतशिष्टाचारानुमितां श्रुतिं प्रमाणम्, विघ्नध्वंसं फलञ्च सम्भावितपूर्वपक्षनिरासपूर्वकं प्रतिपादयन्नयं प्रथमो वादः न्यायशास्त्रस्य नवीनं विषयदानं करोति। प्रामाण्यज्ञप्तिवादे परतः प्रामाण्यं ज्ञायत इति सिद्धान्तस्य स्थापकः प्रामाण्यवादः, प्रमायाः परत उत्पत्तिश्च वर्णिता। अन्यथाख्यातिवादे गुरुमताभिमताख्यातिवादनिरसनपूर्वकं अन्यथाख्यातिपक्षस्साधितः। सामान्यतो निरूपितां प्रमां प्रत्यक्षादिभेदेन चतुर्धा विभज्य प्रत्यक्षप्रमायास्सूत्रोक्तलक्षणविवेचनव्याजेन इन्द्रियार्थसंनिकर्षवाद उपक्षिप्तः तत्प्रसंगात् उद्भूतरूपाभावादप्रत्यक्षो वायुः, समवायः, अनुपलब्धेः प्रामाणान्तरतानिरासः, सुवर्णं तैजसम्, इति विषयाश्च वर्णिताः। मीमांसकाभिमतं अभावस्य अधिकरणात्मकत्वं निरस्य अभाव अतिरिक्तः पदार्थ इति साधितः। मनसोऽणुत्वं इन्द्रियत्वं च प्रतिपादितम्। प्रत्यक्षलक्षणयोजनावसरे निर्विकल्पक–सविकल्पकप्रत्यक्षद्वयं तत्तच्चोद्यपरिहारपूर्वकं साधितम्।

1. Ptd. C. S. S. 42

ग्रन्थसंख्यया विस्तृते द्वितीयेऽनुमानखण्डे अनुमितिलक्षणकथनपूर्वकं अनुमानस्य प्रामाण्यं स्थापितम्। अनुमानोपयोगिव्याप्तिस्वरूपविचारमुखेन विभिन्नानि व्याप्तिलक्षणानि खण्डितानि। मीमांसकमतनिरसनपूर्वकं व्याप्तिग्रहोपायश्च साधितः। व्याप्तिज्ञानोपपत्तिप्रदर्शनाय सामान्यलक्षणा प्रत्यासत्तिर्निरूपिता। व्याप्तिनिर्णयप्रसङ्गात् उपाधिस्वरूपोऽपि विचारितः। हेतोः गमकतानियामकव्याप्तिस्वरूपनिरूपणानन्तरं गमकतौपयिकः पक्षधर्मताविचारः प्रस्तुतः। ज्ञानद्वयादनुमानवादिमीमांसकमतनिरासपूर्वकं व्याप्तिविशिष्टपक्षधर्मताज्ञानरूपस्य परामर्शस्य अनुमितिहेतुत्वं साधितम्। अर्थापत्तेरतिरिक्तप्रमाणाभावतां केवलव्यतिरेक्यनुमानेऽन्तर्भावं च उपवर्ण्य केवलान्वयि - केवलव्यतिरेक्यनुमानप्रभेद उपवर्णितः। न्यायसाध्यस्य परार्थानुमानस्य अवयवाः प्रतिज्ञाहेतूदाहरणोपनयनिगमनात्मकाः पञ्च वर्णिताः। अवान्तरभेदभिन्ना हेत्वाभासाः पञ्च सलक्षणं विचारिताः। अनुमानेन जगत्कर्ता ईश्वरः पक्षादिनिष्कर्षपूर्वकं सविस्तरं साधितः। अपवर्गस्तस्य परमपुरुषार्थता च साधिता।

उपमाननिरूपणावसरे मीमांसकजरन्नैयायिकपक्षानाक्षिप्य उपमानस्य प्रामाण्यता साधिता। शब्दखण्डे वैदिकशब्दानामेव प्रामाण्यमिति वदतां मीमांसकानां मतं व्युदस्य बौद्ध वैशेषिकमतनिरासपूर्वकं शब्दप्रामाण्यं निर्णीतम्। संसर्गबोधसहकारीणि आकांक्षा - योग्यता - आसत्ति - तात्पर्याणि प्रतिपादितानि। तत्प्रसङ्गात् वेदपौरुषेयत्वम्, शब्दानित्यत्वम् वेदस्य प्रवाहनित्यत्वम्, कार्यान्वयवादखण्डनपूर्वकं इष्टसाधनताज्ञानस्य प्रवर्तकत्वम्, लिङर्थश्चेति विषयाः प्रतिपादिताः। पदानां जात्याकृतिविशिष्टव्यक्तौ शक्तिरिति वादः जातिशक्तिवादनिरसनपूर्वकं वर्णितः। तत्प्रसंगात् शक्तिलक्षणे, आख्यातार्थः, धात्वर्थः, उपसर्गाणां द्योतकत्वमित्यादयोऽपि विषयाः विशदीकृताः।

प्रमाणतत्त्वस्य इतरमतनिरसनपूर्वकं विवेचनाय प्रवृत्तेऽप्यस्मिन् ग्रन्थे पूर्वपक्षीयाणां ग्रन्थानां ग्रन्थप्रणेतॄणां वा नाम नाधिकं निर्दिश्यते। तेषां सिद्धान्ता एव निर्दिष्टाः। ग्रन्थेऽस्मिन् वाचस्पतिमिश्रः जयन्तभट्टः रत्नकोशकारः, नवीनपदेन सौन्दडोपाध्यायः शिवादित्यमिश्रश्च निर्दिष्टाः।

अस्य कर्ता मैथिलो दर्भङ्गामण्डलान्तर्गतकमलानदीतटवर्तिकोरियावनामकग्रामाभिजनो विप्रकुलोत्पन्नस्सिद्धान्तदीक्षागुरुरिति प्रख्यातो वर्धमानोपाध्यायपिता

यज्ञपत्युपाध्यायपितामहः नरहरि - उपाध्यायप्रपितामहश्च गङ्गेशोपाध्यायः। अस्य जीवनकालस्त्रयोदशशतकमिति 1300 A. D. इति निर्णयः।

अथ तत्त्वचिन्तामणिव्याख्याः —

त्रयोदशशतकान्तकालादारब्धे अष्टादशशतकान्तकाले (1300 — 1800 A. D.) तत्त्वचिन्तामणिग्रन्थस्य व्याख्याः बहुरूपास्सर्वशः भागशश्चेति विविधैः पण्डितोत्तमैर्विरचिता लभ्यन्ते। तस्मिन् काले पण्डिताः विद्वांसश्च तत्त्वचिन्तामणिग्रन्थस्य व्याख्यानिर्माणमेव स्वपाण्डित्यस्य वैदुष्यस्य च निकषग्रावाणं मन्यन्ते स्म। अत एव चिन्तामणिग्रन्थस्य कस्यापि वादस्य भागस्य वा स्वाभिमतस्य व्याख्यानिर्माणेनात्मानं कृतार्थीचक्रुः।

1300 — 1600 A. D. काले सञ्जाता मणिव्याख्याः —

गङ्गेशोपाध्यायपुत्रेण विदुषा न्यायनिबन्धप्रकाशादिकर्त्रा वर्धमानोपाध्यायेन प्रकाशाख्या तत्त्वचिन्तामणिव्याख्या रचिता या विद्यानिवासभट्टाचार्येण कृते तत्त्वचिन्तामणिविवेचने निर्दिष्टा काशीसरस्वतीभवनपुस्तकालयसूच्यामेव दृश्यते नान्यत्र कुत्रापि लभ्यते दृश्यते वा। तस्मादत्र विषये विवदन्ते विमर्शकाः। महादेवमिश्रपुत्रेण हरिमिश्रादधिगतन्यायशास्त्रेण मैथिलेन वासुदेवमिश्र - रुचिदत्तोपाध्याय - भगीरथठक्कुरादीनां गुरुणा प्रसन्नराघवव्याख्यात्रा चन्द्रालोकप्रणेत्रा पीयूषवर्षजयदेवापरनाम्ना पक्षधरमिश्रेण कृता काचन व्याख्या आलोकनाम्नी प्रसिद्धा या प्रत्यक्षखण्डान्ता अन्ये केचन भागाश्च मुद्रिताः (B. I. 98)। अन्या काचन तत्त्वचिन्तामणिसंग्रहरूपा टिप्पणी नाम्नी कृतिरनेन रचिता या अमुद्रिता काशीसरस्वतीभवनपुस्तकालये लभ्यते। गङ्गादित्यनाम्ना पण्डितेन कृता काचन मणि टीका विद्यानिवासीये विवेचने निर्दिष्टा या नेदानीं लभ्यते। वङ्गदेशजेन नवद्वीपवासिमहेश्वरविशारदपुत्रेण पक्षधरसहपाठिना रघुनाथशिरोमणिगुरुणा वासुदेवसार्वभौमेन रचिता काचन तत्त्वचिन्तामणिसारावलीनाम्नी व्याख्या परीक्षापराख्या अमुद्रिता सरस्वतीभवनपुस्तकालये वाराणस्यां लभ्यते यस्यां व्याख्यायां यज्ञपति - प्रगल्भ - विशारद - चक्रवर्तिप्रभृतीनां लक्षणानि विमृष्टानि दृश्यन्ते। मैथिलेन घटेशोपाध्यायेनापि काचन चिन्तामणिव्याख्या कृता स्यादिति विद्यानिवासभट्टीयाद् विवेचनात् ज्ञायते, यस्य सिद्धान्ताः विवेचनेऽस्मिन् निर्दिष्टा विद्यन्ते। पक्षधरोद्धारकर्त्रा पद्मनाभमिश्रेण व्याप्तिसिद्धान्तलक्षणव्याख्यायाम्, आलोक–प्रसारिणी

कर्त्रा कृष्णदाससार्वभौमेन च प्रमाणत्वेन उद्धृत्य विचारिता काचन चिन्तामणि व्याख्या त्वन्तोपाध्यायकृता आसीदिति ज्ञायते या तु नाद्यापि लभ्यते। त्वन्तोपाध्यायेन मकरन्दनाम्नी कुसुमाञ्जलिव्याख्यापि रचिता स्यादिति च ज्ञायते। नरहर्युपाध्यायवृद्धप्रपितामहः यज्ञपत्युपाध्यायपितामहः पशुपति - रघुपति - पक्षधराणां पिता मैथिलः गङ्गेशोपाध्यायसामयिकः त्रिसूत्रीनिबन्धनव्याख्यायां शङ्करमिश्रेण तत्त्वनिर्णये पक्षधरमिश्रेण च निर्दिष्टः दर्पणकार इति प्रसिद्धः वटेश्वरोपाध्यायः मणिदर्पणमिति किञ्चिद् ग्रन्थरत्नं चकार, तत्तु नेदानीं लभ्यते। केचित्तु वासुदेवसार्वभौमकृते परीक्षापरनामके सारावलीग्रन्थे विशेषव्याप्तिनिरूपणावसरे यानि दर्पणवाक्यानि निर्दिष्टानि तानि प्रमाणानि कृत्वा वटेश्वरोपाध्यायकृतं दर्पणाख्यं ग्रन्थरत्नं न तत्त्वचिन्तामणिव्याख्यानभूतम्, परन्तु स्वतन्त्रम्, यत्तु गङ्गेशेन नाम अनिर्दिश्य खण्डितमिति नव्यन्यायप्रवर्तकेषु वटेश्वरोऽपि गङ्गेशसम इति वदन्ति। वासुदेवसार्वभौमपुत्रेण तच्छिष्येण च वाहिनीपतिरित्युपनाम्ना ज्ञानेश्वरेण कृता काचन चिन्तामणिव्याख्या उद्योतनाम्नी अमुद्रिता सरस्वतीभवनपुस्तकालये लभ्यते। सारावल्यां वासुदेवसार्वभौमेन जागदीश्यां जगदीशभट्टाचार्येण एवं बहुषु ग्रन्थेषु अनूदितं खण्डितं च चक्रवर्तिलक्षणम्। तस्मात् चक्रवर्तिकृता काचन चिन्तामणिव्याख्या आसीदिति ज्ञायते। न्यायसूत्रवृत्तिकारविश्वनाथभट्टाचार्यपित्रा विद्यानिवासभट्टाचार्येण कृता विवेचनी नाम्नी काचन व्याख्या अमुद्रिता सरस्वतीभवनपुस्तकालये लभ्यते यस्यां शशधराचार्य-मुरारिवर्धमान-गङ्गादित्याः निर्दिष्टाः।

वङ्गदेशीयो वासुदेवसार्वभौमान्तेवासी रघुनाथतार्किकशिरोमणिभट्टाचार्यः दीधितिनाम्नीं तत्त्वचिन्तामणिटीकां वितेने। रघुनाथशिरोमणिरयं मैथिलब्राह्मणः नडियाशान्तिपुरवास्तव्यः गोविन्दचक्रवर्ति - सीतादेव्योः पुत्र आसीत्। अस्य पुत्रो रामकृष्णभट्टाचार्यचक्रवर्ती गुणशिरोमणि परीक्षा - न्यायदीपिकयोः कर्तेति केचन विमर्शकाः। बाल्य एव पितृविहीनोऽयं जनन्या महता कृच्छ्रेण पोषित आसीत्। प्रकृत्या बुद्धिमानयं कदाचित् मात्रा प्रेरितो वासुदेवसार्वभौमगृहं अग्निकणानयनाय गतः, रिक्तहस्तं तं दृष्ट्वा कथं अग्निं नेष्यसि इति सार्वभौमेन पृष्टः सपदि वालुकापुञ्जं करे संस्थाप्य नेष्यामि इति प्रत्युक्तवन्तं तं तस्य मतिकौशलञ्च दृष्ट्वा तुष्टः सार्वभौमस्तं स्वशिष्यमकरोत् सर्वाणि शास्त्राणि अध्यापयामास च। अथ च गुरौ सार्वभौमे स्वदेशं गते गुरोराज्ञया मिथिलां गत्वा पक्षधरस्य शिष्यो भूत्वा

न्यायशास्त्रं सम्पूर्णं अधिजगे। अध्येतुं रघुनाथे समागते जन्मत एकाक्षं तं दृष्ट्वा पक्षधर अपृच्छत्—

आखण्डलस्सहस्राक्षः विरूपाक्षस्त्रिलोचनः।
अन्ये द्विलोचनास्सर्वे को भवानेकलोचनः॥ इति।

सपदि सधैर्यं—

योऽन्यं करोत्यक्षिमन्तं यश्च बालं प्रबोधयेत्।
तमेवाध्यापकं मन्ये तदन्ये नाममात्रकाः॥ इति

प्रत्युवाच। तस्य बुध्या धैर्येण च तुष्टः पक्षधरः तं न्यायं पाठयामास। अल्पेनैव कालेन कक्ष्यायां पाठश्रवणकाल एव सामान्यलक्षणाप्रत्यासत्तिं खण्डयन्तं रघुनाथं पक्षधरः —

वक्षोजपानकृत् काण संशये जाग्रति स्फुटम्।
सामान्यलक्षणा कस्मादकस्मादवलुप्यते॥

इत्युवाचेत्यादिकाः किंवदन्त्यः श्रूयन्ते। अनन्यसाधारणतर्कचातुर्या तोषिता पण्डितमण्डली इमं शिरोमणि - उपाधिना अलञ्चकार। अस्य श्रेष्ठतमा कृतिः दीधितिश्चिन्तामणेर्विवरणात्मिका विवेचनात्मिका प्रगाढपाण्डित्यपूर्णा व्याख्या या कालान्तरे मूलग्रन्थवत् पाण्डित्यस्य निकषग्रावतां प्राप्ता। प्राचीनानां व्याख्याभेदास्तत्र तत्र पराक्रियन्ते। विषयशोधनपरोऽयं स्वगुरूणामपि मतं दूषयति। स्पष्टञ्चेदं व्याप्तिपक्षधर्मतादिप्रकरणेषु। परं न कुत्रापि नामनिर्देशः। व्याख्येयं न सम्पूर्णं मणिं विवृणोति। केवलव्यतिरेकि-अर्थापत्ति-हेत्वाभासानामसाधकता - शक्तिमोक्षादीनां प्रकरणानां व्याख्या न दृश्यते। अनुमितिलक्षणव्याप्त्यादिप्रकरणेषु कतिपयानि मणिवाक्यान्युपादाय या परिष्कारशैली समादृता सा दार्शनिकानां मार्गदायिनी नैय्यायिकलोकानन्ददायिनी च दृश्यते। बहुषु स्थलेषु मूलग्रन्थेन विसंवदते। अत एव व्याख्याव्यपदेशेन प्रवृत्तोऽयं मूलग्रन्थ इत्यपि प्रसिद्धिः। मुद्रितेयं व्याख्योपव्याख्यासहिता बहुत्र विशेषतस्सम्पूर्णा वाराणस्यां (Ch. S. S. 42. 1927)। प्रत्यक्षखण्डे प्रामाण्यवादस्य अनुमानखण्डस्य च व्याख्या उपलभ्यते। शब्दखण्डस्य तु नोपलभ्यते। एवं दीधितिग्रन्थे पूर्वपक्षव्याप्तिवादावसरे (p. 337. Ch. S. S. 259) प्रगल्भमिश्रकृतः ग्रन्थः निर्दिष्टोऽस्ति। एवञ्च दीधिति-

कारात् प्राचीनस्सामयिको प्रगल्भमिश्राख्यस्तत्त्वचिन्तामणिव्याख्याकार आसीदिति विज्ञायते । अस्य लक्षणं वासुदेवेन सारावल्यां निर्दिष्टञ्च । प्रगल्भोऽयं मैथिलः नरपतिमिश्रपुत्रः जाह्नवीगर्भसम्भवः रुक्मिणीभर्ता हरिहरचरणभक्तः शुभङ्करनामासीत् । स्ववैदुष्येण प्रागल्भ्येन च शक्तिवादखण्डनमनेन कृतमिति कारणात् प्रगल्भमिश्र इति प्रसिद्धोऽयमिति ज्ञायते । अनेन स्वकृतिषु विलासकार दिवाकरभट्टः रत्नकोषकारः वर्धमानोपाध्यायः जगद्गुरुकृता कुसुमाञ्जलिटीका मणिकारात् पूर्वतनः रवीश्वरः न्यायभास्करकारश्चेतीमे निर्दिष्टा विद्यन्ते । अदसीयः खण्डनोद्धाराख्यः कश्चन ग्रन्थः (1436 A.D लिखित) अमुद्रितःवाराणस्यां लभ्यते । अनेन कृता मणिव्याख्या **प्रागल्भीति** प्रसिद्धा प्रत्यक्षभागान्ता वारणस्यां सरस्वतीभवनपुस्तकमालायां (S B T, 1939) मुद्रिता । अनुमानोपमानचिन्तामणिव्याख्या प्रागल्भी अमुद्रिता आसियाटिक्सोसाइटिपुस्तकालये मुम्बय्यां, नवद्वीपजनतापुस्तकालये, वाराणसीसरस्वतीभवनपुस्तकालये बरोडापुस्तकालये च लभ्यते । बरोडासूच्यां अस्या नाम **बालबोधिनीति** दृश्यते ।

एवं यज्ञपत्युपाध्यायपुत्रेण स्वपितुः पक्षधरमिश्राच्च अधीतन्यायशास्त्रेण नरहरिमिश्रेण **दूषणोद्धारनामा** कोपि चिन्तामणिव्याख्याग्रन्थ आरचितः, यस्मिन् पक्षधरमिश्रेण आलोके यज्ञपत्युपाध्यायलक्षणोपरि उद्भावितानां दूषणानां उद्धारः कृतः । स्वपितृमतं रक्षितञ्च । अमुद्रितोऽयं लन्दननगरभारतपुस्तकालये तञ्जपुरपुस्तकालये च लभ्यते । पक्षधरभ्रातुष्पुत्रेण पक्षधरस्यैव शिष्येण वासुदेवमिश्रेण कृता काचन **न्यायसिद्धान्तसाराख्या** चिन्तामणिव्याख्या वाराणसीविश्वविद्यालयपुस्तकालये मद्रासराजकीयपुस्तकालये अनन्तशयनपुस्तकालये चामुद्रिता विद्यते, यस्यां चिन्तामणि व्याख्याव्याजेन जयदेवोपरि (आलोकोपरि) उद्भावितानां दूषणानां खण्डनं कृतम् ।

खण्डनोद्धारादिबहुग्रन्थकर्त्रा वत्सगोत्रजेन गिरिपतिपुत्रेण कर्ममीमांसककुलावतंसेन मैथिलेन शङ्करमिश्रसामयिकेन द्वितीयवाचस्पतिमिश्रेण कृता चिन्तामणिव्याख्या **प्रकाशाभिधा** प्रत्यक्षान्ता लन्दनपुस्तकालये वारणसीपुस्तकालये चामुद्रिता लभ्यते । वङ्गीयेन वासुदेवसार्वभौमशिष्येण हरिदासन्यायालङ्कारेण कृता काचन **मणिप्रकाशाख्या** व्याख्या अमुद्रिता नवद्वीपवाराणसीपुस्तकालययोर्लभ्यते यस्यां न्यायालोचनकारो निर्दिष्टः । बटेश्वरोपाध्यायप्रपौत्रेण पशुपत्युपाध्यायपौत्रेण शिव-

पत्युपाध्यायपुत्रेण मैथिलेन काश्यपगोत्रजेन यज्ञपत्युपाध्यायेन रचिता प्रभानाम्नी चिन्तामणिव्याख्या दर्भङ्गापुस्तकालये बङ्गीयासियाटिक् संघपुस्तकालये च अमुद्रिता भागशो रक्षिता, सारावल्यां लक्षणान्यस्या निर्दिष्टानि च। मैथिलेन भवनाथभवान्योः पुत्रेण जीवनाथभ्रात्रा वैशेषिकोपस्कारकर्त्रा शङ्करमिश्रेण कृता चिन्तामणिमयूखाख्या व्याख्या जम्मुकाश्मीरपुस्तकालयसूच्यां दृश्यते निर्दिष्टश्चोपस्करे। वेदान्तिना सर्वदर्शनकौमुदी (T. S. S. 135) कारेण माधवसरस्वत्या रचिता काचन मयूखमालाख्या चिन्तामणिव्याख्या सर्वदर्शनकौमुद्यां निर्दिष्टा या च कौमुदी भूषणं नरेन्द्रगिरिम्, आनन्दगिरिम् चित्सुखाचार्यमित्यादीन् न्यायवेदान्तग्रन्थकारान् निर्दिशति। महेश्वरविशारदेन कृता माहेश्वरीति व्यवहृता चिन्तामणिव्याख्या प्रत्यक्षान्ता वाराणसीसर्वकारपुस्तकालये लभ्यते परमियं आलोकव्याख्येत्येव नो भाति।

श्रीरामतर्कालङ्कारपुत्रेण रघुनाथशिरोमणिशिष्येण पितुश्चाधीतशास्त्रेण मथुरानाथतर्कवागीशेन कृता काचन तत्त्वचिन्तामणिव्याख्या रहस्याख्या या प्रत्यक्षखण्डस्य अनुमाने बाधान्तस्य शब्दखण्डस्य च मुद्रिता (B. I 98, K. S. S. 140)। माथुरीति प्रसिद्धाया अस्या व्याख्यायाः फक्किकेति नामान्तरमपि दृश्यते बह्वीषु मातृकासु। मण्यर्थावबोधने बहूपकरोतीयं व्याख्या। मूलग्रन्थोपर्युद्भावितानां शङ्कानां समाधानवर्णनापेक्षया सुलभशैल्या मूलार्थप्रकाशन एव व्याख्याया अस्या ऐदम्पर्यं दरीदृश्यते। सौन्दलोपाध्यायं हरिनाथोपाध्यायं च तत्र तत्र निर्दिशति। विशारदनाम्ना केनचित् भट्टाचार्येण कृता काचन तत्त्वचिन्तामणिव्याख्या आसीदिति सारावल्यां नामनिर्देशादेव ज्ञायते। देवदत्तरेणुकादेव्योः पुत्रेण पक्षधरशिष्येण शक्तिधरमतिदत्तयोः भ्रात्रा मैथिलेन रुचिदत्तमिश्रेण कृता काचन प्रकाशाख्या तत्त्वचिन्तामणिव्याख्या अमुद्रिता मद्रपुरीराजकीय—लन्दननगरस्थ भारतीयकार्यालय - वाराणसीसरस्वतीभवन - कलकत्ताराजकीयपुस्तकालयेषु लभ्यते। शब्दखण्डव्याख्या परं पण्डितग्रन्थमालायां वाराणस्यां मुद्रिता। एव जयदेवापरनामकपक्षधरपौत्रेण गुणमिश्रपुत्रेण शाण्डिल्यगोत्रजेन मैथिलेन माधवमिश्रेण काचन तत्त्वचिन्तामणिव्याख्या कृता, यस्यां यज्ञपत्युपाध्यायपुत्रेण नरहरिणा स्वपितृमतरक्षणाय जयदेवोपरि उद्भावितानि दूषणानि खण्डितानीति विद्वत्परम्परया एव ज्ञायते न तु कुत्रापि ग्रन्थस्योपलम्भः। परन्तु वासुदेवेन केवलान्वयिप्रकरणे मणिटीकायां निर्दिष्टश्च। बङ्गदेशजेन वासुदेवसार्वभौमशिष्येण

रघुनाथशिरोमणिसहाध्यायिना अपशब्दखण्डन-भाषारत्न-वायुवादादिकर्त्रा कणाद-तर्कवागीशेन कृता काचन तत्त्वचिन्तामणिव्याख्या अमुद्रिता बंगालपुस्तकालये मिथिलानवद्वीपसूच्योश्च दृश्यते । रघुनाथशिरोमणिपुत्रेण उदयनकिरणावली-व्याख्यात्रा रामकृष्णभट्टाचार्यचक्रवर्तिना कृता काचन प्रकाशाख्या तत्त्वचिन्ता-मणिव्याख्या लन्दननगरस्थभारतकार्यालयपुस्तकालये लभ्यते । बलभद्रपुत्रेण पद्मनाभमिश्रेण कृता परीक्षाख्या मणिव्याख्या वाराणसीसरस्वतीभवने अमुद्रिता संरक्षिता । रुचिदत्तमिश्रपुत्रेण रघुपतिमिश्रेण कृता परीक्षाख्या अपरा काचन मणिव्याख्या अनुमानशब्दखण्डयोः परं वाराणसीसरस्वतीभवने अमुद्रिता लभ्यते । न्यायसिद्धान्तमञ्जरीकर्त्रा वङ्गीयनवद्वीपवासिना कुसुमाञ्जलिव्याख्याकाररामभद्र-सार्वभौमपित्रा जानकीनाथभट्टाचार्येण कृता काचन मणिमरीचिनाम्नी तत्त्वचिन्ता-मणिव्याख्या आसीदिति ज्ञायते या न्यायसिद्धान्तमञ्जर्यां वाराणसीमुद्रितायां (p. No. 18) निर्दिष्टा । परं प्राप्तिस्थानं न ज्ञायते । गङ्गेशोपाध्यायदौहित्रेण रत्नाकरविद्यावाचस्पतिना कृता काचन मणिव्याख्या वाराणसीसंस्कृतकलाशालायां अमुद्रिता विद्यते ।

1600—1900 A. D. काले लिखितास्तत्वचिन्तामणिव्याख्याः

सनातनमिश्रप्रपौत्रेण माधवमिश्रपौत्रेण यादवविद्यावागीशद्वितीयपुत्रेण रामचन्द्र-षष्ठीदास-लक्ष्मण-वाणीनाथानां भ्रात्रा रघुनाथरुद्रेश्वरयोः पित्रा शब्दशक्ति-प्रकाशिका व्याख्यातृ रामभद्रसिद्धान्तवागीशस्य पितामहेन मैथिलेन काश्यपगोत्रजेन रामभद्रसार्वभौम—भवानन्दसिद्धान्तवागीशयोश्शिष्येण जगदीशभट्टाचार्येण तत्त्व-चिन्तामणिव्याख्या मयूखनाम्नी कृतेति तत्पुरस्थमातृकातः ज्ञायते—

इतरैरनुचितविविधक्षोदैः कलुषीकृतोऽप्यधुना ।
मणिरयमनुपमसरणिः श्रीजगदीशप्रकाशितः स्फुरतु ॥

इति तत्र दृश्यते । व्याख्येयं अनुमानहेत्वाभासभागयोरेव लभ्यते । रघुदेव-न्यायालङ्कार गदाधरभट्टाचार्ययोर्गुरुणा रत्नकोशविचारादिकर्त्रा नवद्वीपवासिना हरि-रामतर्कवागीशेन कृता चिन्तमणिगतानां बहूनां भागानां विचाराख्या काचन व्याख्या कृतेति (Hall सूच्या) ज्ञायते । पीताम्बरविद्यानिधेः पुत्रेण उमागर्भ-जनुषा मैथिलेन नवद्वीपवासिना तान्त्रिकविद्वत्कुलावतंसेन शक्त्युपासकेन न्याय-

वैशेषिकसाहित्यमीमांसाधर्मशास्त्रविदुषा रघुनाथलक्ष्मीनाथयोः पित्रा वत्सगोत्रजेन अमृतोदयनाटककर्त्रा दीधितिविद्योतकुसुमाञ्जलिटिप्पण खण्डनकुठारादिकर्त्रा गोकुलनाथोपाध्यायेन कृता काचन चिन्तामणिव्याख्या चक्ररश्मिनाम्नी अमुद्रिता दर्भङ्गापुस्तकालये लभ्यते ।

हरिराम तर्कवागीश-चिरञ्जीवि भट्टाचार्ययोश्शिष्येण कुसुमाञ्जलि-पदार्थतत्त्वनिरूपण-आलोकादीनां व्याख्याता आख्यातवाद - नञ्वादटीका - विषयता- विशिष्टवैशिष्ट्यबोध - अनुमितिप्रामाण्य - प्रतियोगिज्ञानकारणतादि विचारकर्त्रा द्रव्यसंग्रहस्य सामग्रीवादस्य च कर्त्रा रघुदेवन्यायालङ्कारेण कृता गूढार्थदीपिकाख्या काचन मणिव्याख्या अमुद्रिता मद्रपुरीराजकीयबरोडा - तञ्जपुर - वाराणसीपुस्तकालयेषु लभ्यते । क्वचित् क्वचित् तत्त्वदीपिका, नवीननिर्माणम् रघुदेवीया इति नामान्तराणि दृश्यन्ते । सत्यमङ्गलापराभिध शूरसमुद्रग्रामाभिजनस्य रत्नखेट - श्रीनिवासदीक्षितस्य कामक्ष्याश्च पुत्रेण लक्ष्मीवल्लभपौत्रेण विश्वामित्रगोत्रजेन वेङ्कटेश्वरार्धनारीश्वरदीक्षितयोश्शिष्येण चोलदेशवासिना रघुनाथनायकसभापण्डितेन शास्त्रारम्भ नामकाद्वैतग्रन्थस्य मीमांसायां तन्त्रशिखामणिशास्त्रदीपिकाव्याख्याकर्पूरवर्त्योः कर्त्रा राजचूडामणिदीक्षितेन कृता काचन चिन्तामणिव्याख्या दर्पणाख्या मद्रपुरी-तिरुवनन्तपुर - बरोडा - विश्वभारती पुस्तकालयेषु लभ्यते । शब्दखण्डस्य परं अनन्तशयने (T. S. S. 34) मुद्रिता ।

गदाधर भट्टाचार्यकृता च काचन चिन्तामणिव्याख्या अनुमानशब्दखण्डयोः परमपूर्णा मद्रपुरीतञ्जपुरपुस्तकालययोर्लभ्यते । गदाधरभट्टाचार्यश्च हरिरामतर्कवागीशशिष्यः जीवाचार्यपुत्रो वङ्गदेशीयः । पूर्ववङ्गदेशजोऽयम्, प्रथितबुधवंशानुत्पन्नोऽयमिति च तात्कालिकानामाशयः । अत एव स्वोत्तमशिष्याय गदाधरभट्टाय पाण्डित्यलक्षकं शिरोमणिबिरुदं अवितीर्यैव कालवशं गते हरिराम तर्कवागीशे तत्रत्याः छात्राः अप्राप्तबिरुदाद् गदाधरभट्टात् शास्त्राध्ययनाय साशङ्का अभवन् । गदाधरभट्टाचार्यस्तु स्वयमेव गङ्गातीरे कञ्चन उपवनं स्थापयित्वा तत्रस्थः तत्रस्थान् वृक्षान् पाठयितुं आरेभे । कदाचित् कुसुमावचयाय आगताः केचन जिज्ञासवः छात्राः तदीयां अनितरसाधारणीं परिशीलन परिशोधन परिपाटीं श्रुत्वा वृक्षमेवोद्दिश्य पूर्वपक्षसमाधाने कुर्वन्तञ्च दृष्ट्वा विस्मिताः । क्रमेण च बहवश्छात्रा अहमहमिकया विनेयतां प्रापुरिति च साम्प्रदायिकी कथा श्रूयते । तत्त्वचिन्तामण्यनु-

मानभागस्य संग्रहरूपः कश्चन मणिसाराख्यः ग्रन्थ अनन्तशयने (T. S. S. 35) मुद्रितः। तञ्जपुरमद्रपुरीपुस्तकालययोर्लभ्यते च। अस्य निर्माता भवनाथठक्कुरपुत्रो मैथिलस्तर्कभाषाव्याख्याता गोपीनाथठक्कुर इति ज्ञायते। वेङ्कटाचार्यपुत्रेण आत्रेयगोत्रजेन वेदान्तिश्रीनिवासाचार्येण कृतः कश्चन गोपीनाथकृतमणिसारखण्डनात्मकमणिसारखण्डननामा ग्रन्थ अमुद्रितः प्रत्यक्षखण्डान्त अडयार-मद्रासराजकीयतञ्जपुरपुस्तकालयेषु लभ्यते। लक्ष्मणार्यकृतो मणिसारमण्डनाख्यः कश्चन ग्रन्थः तिरुपतिपुस्तकालये लभ्यते।

श्रीकण्ठदीक्षितकृता काचन मणिटीका Oppert सूच्यां दृश्यते, नातोऽधिकं ज्ञातुं पार्यते। वङ्गदेशजेन विद्यानिवासभट्टाचार्यस्य ज्येष्ठपुत्रेण रुद्रन्यायवाचस्पतिना काचन चिन्तामणिव्याख्या कृतेति वाराणसीबम्बईविश्वविद्यालयसूचीतो ज्ञायते। कालीचरणन्यायालङ्कारतारिणीदेव्योः पुत्रेण रामकृष्णभट्टाचार्यपौत्रेण रामनारायणतर्कवागीशशिष्येण शब्दशक्तिप्रकाशिकाव्याख्यात्रा वादसमुच्चयरूपायास्सव्याख्याया रत्नावल्याः, न्यायसूत्रवृत्तिरूपसौत्रसन्दीपन्याः तर्कामृततरङ्गिणीपदार्थखण्डन-व्याख्यादीनाञ्च कर्त्रा कृष्णकान्तविद्यावागीशेन कृता काचन तत्त्वचिन्तामण्युपमानखण्डव्याख्या तृतीयमणिदीपनीनाम्नी मुद्रिता (B. I. 98)। मैथिलेन गोकुलनाथवागीशशिष्येण कविरत्नपण्डितेन कृता काचन चिन्तामणिप्रत्यक्षखण्डव्याख्या अमुद्रिता दर्भङ्गापुस्तकालये संरक्षिता।

महामहोपाध्यायरामपतिपुत्रेण वङ्गीयेन विष्णुपतिपण्डितेन रचिता चिन्तामणिशब्दखण्डव्याख्या तत्त्वदीपननाम्नी राजेन्द्रलालसूच्यां दृश्यते। चिन्तामणिव्याप्तिपञ्चलक्षणीटीका काचन भवदेवकृता वाराणस्यां अमुद्रिता दृश्यते। कौण्डिन्यगोत्रजेन उमापतिपुत्रेण अय्यालुदीक्षितपौत्रेण काशीपतिकविराजेन कृता काचन चिन्तामणिव्याख्या न्यायकल्पतर्वाख्या इति न्यू इण्डिया आण्डिक्वैरि पत्रिकायाः (N. I. A. Vol. IV. p. 158) ज्ञायते।

तिम्माम्बिकानृसिम्हयोः पुत्रेण तिम्मणभूपालेन कृतः कश्चन चिन्तामणिसाररूपः ग्रन्थः प्रकाशाख्यः अमुद्रित अडयारमद्रपुरीराजकीयतञ्जपुरपुस्तकालयेषु

लभ्यते । तर्कवार्तिक - मणिसार - पूर्वमणिसार इति नामान्तराण्यपि दृश्यन्ते । अज्ञातकर्तृनामा मणिकणाख्यः कश्चन ग्रन्थ अडयार पुस्तकालये मुद्रितः (A. L. S. 88) यस्मिन् गोपालसिंहाख्यस्य स्वशिष्यस्य सुलभबोधनाय ग्रन्थकर्त्रा तत्त्वचिन्तामणिमङ्गलवादादारब्धाः शक्तिवादपर्यन्ताः विषयाः संक्षिप्ता विद्यन्ते । तातदेशिकशिष्येण रामानुजाचार्येण कृतः कश्चन मणिदर्पणनामा ग्रन्थ अमुद्रित अडयारबरोडामद्रपुरीराजकीयतञ्जपुरपुस्तकालयेषु लभ्यते । क्वचिन्मणिसार इति नामान्तरं दृश्यते । कर्णाटकदेशजेन व्यासरायपुत्रेण आधुनिकेन तर्कसंग्रहदीपिकाव्याख्यात्रा हनूमद्भट्टेन कृता काचन मणिव्याख्या वाक्यार्थदीपिकाख्या हनूमदीया इति प्रसिद्धा अमुद्रिता नाक्पूरपूनाभण्डारगारपुस्तकालययोर्लभ्यते । हरिनामकेन पण्डितेन कृतः कश्चन मणिमतखण्डनाख्यः ग्रन्थस्तत्त्वचिन्तामण्युक्तानि प्रत्यक्ष - अनुमान - हेत्वाभास लक्षणानि खण्डयन्नपूर्ण अमुद्रितश्च तञ्जपुरीपुस्तकालये लभ्यते ॥

तत्वचिन्तामणिव्याख्या:

- आलोक:
- उद्योग:
- चक्ररश्मि:
- टिप्पणी
- टीका
  - गङ्गादित्यकृता
  - श्रीकण्ठकृता
  - भवदेवकृता
- तत्त्वदीपनम्
- दर्पणम्
- दीधिति:
- दीपनी
- दूषणोद्धार:
- न्यायकल्पतरु:
- मणिमत-खण्डनम्
- मणिमरीचि:
- मणिदर्पणम्
  - वटेश्वर कृतम्
  - रामानुज कृतम्
- मणिकण:
- प्रागल्भी
- प्रभा
- प्रकाश:
  - वर्धमान-कृत:
  - वाचस्पति कृत:
  - हरिदास कृत:
  - रुचिदत्त कृत:
  - तिम्मणकृत:
  - रामकृष्णकृत:
- परीक्षा
  - पद्मनाभीया
  - रघुपतीया
- न्याय-सिद्धान्तसार:
- मणिसार:
  - मणिसार खण्डनम्
  - मणिसार मण्डनम्
- मयूख:
  - शङ्करमिश्र कृत:
  - जगदीश कृत:
- मयूखमाला
- माथुरी
- माहेश्वरी
- रघुदेवीया
- वाक्यार्थ दीपिका
- विचार:
- विवेचनी
- व्याख्या
  - घटेशोपाध्यायकृता
  - त्वन्तोपाध्यायकृता
  - चक्रवर्ति कृता
  - विशारद कृता
  - माधव मिश्रकृता
  - कणादतर्क वागीशकृता
  - रत्नाकर कृता
  - गदाधर कृता
  - रुद्रन्यायवाचस्पतिकृता
  - कविरत्नकृता
- सारावली

तत्त्वचिन्तामण्यालोकव्याख्याः —

स्वेनैव कृतस्य चिन्तामणिगतप्रामाण्यवादव्याख्यानस्य आलोकस्य टिप्पणी नाम्नी काचन व्याख्या पक्षधरमिश्रेणैव कृता अमुद्रिता पूनास्थभाण्डारगारपुस्तकालये मैसूर–पुस्तकालये च लभ्यते वासुदेवसार्वभौमपुत्रेण पितुरेवाधीतशास्त्रेण ज्ञानेश्वरवाहिनीपतिना (1500 A. D.) लिखिता काचन उद्योतनाम्नी आलोकव्याख्याऽमुद्रिता सरस्वतीभवनपुस्तकालये वाराणस्यां लभ्यते। मैथिलेन महामहोपाध्यायमाधवमिश्रेण (1557 A. D.) रचिता काचन आलोकव्याख्या दीपिकाख्या तञ्जपुरमद्रपुरीसरस्वतीभवनदर्भङ्गापुस्तकालयेषु विद्यते, क्वचित् प्रकाश इति नामान्तरं दृश्यते। श्रीरामतर्कालङ्कारपुत्रेण रघुनाथशिरोमणिशिष्येण मथुरानाथतर्कवागीशेन (1570 A. D.) कृता रहस्याख्या आलोकव्याख्या भागशो मुद्रिता (B. I. S.)। अमुद्रितास्तु भागा अडयार–तिरुवनन्तपुर-मद्रपुरी लन्दननगरपुस्तकालयेषु लभ्यन्ते। वङ्गदेशजेन भवानन्दसिद्धान्तवागीशगुरुणा कृष्णदाससार्वभौमेन (1575 A. D.) रचिता काचन आलोकव्याख्या प्रसारिणीनाम्नीति तञ्जपुर–सरस्वतीभवन–लन्दननगरभारतकार्यालय–काष्मीर पुस्तकालयेषु रक्षितादर्दीयादनुमानदीधितिप्रसारिण्याख्यात् ग्रन्थाज्ज्ञायते[1]।

दर्भङ्गाराजकुलावतंसेन चन्द्रपतिपुत्रेण भगीरथठक्कुरानुजेन शुचिकरशिष्येण महेशठक्कुरेण (1600 A. D.) कृता काचन आलोकव्याख्या दर्पणनाम्नी सरस्वतीभवनपुस्तकालयमालायां (S. B. T. 78) मुद्रिता यस्यां आलोकोपरि उद्भावितानि दूषणानि पराकृतानि। अमुद्रिताश्च भागा भाण्डारगार - मद्रपुरी - मैसूर - लन्दन - पुस्तकालयेषु लभ्यन्ते। अस्या अपि खण्डनपरा काचन कृतिः दर्पणनिरोधिनीनाम्नी आत्रेयगोत्रजेन वेङ्कटाध्वरिशिष्येण रघुनाथदीक्षितेन कृता अडयार पुस्तकालये लभ्यते। वासुदेवसार्वभौमशिष्येण कुसुमाञ्जलिव्याख्या[2]कर्त्रा हरिदास न्यायालङ्कारेण (1600 A. D.) कृता काचन आलोकटिप्पणी अमुद्रिता पूरीशङ्करमठपुस्तकालये लभ्यते[3]।

1. Ref. J. A. S. B. Vol XI 1915 p. 279.
2. Ptd. in culcutta & Benarus
3. Ref. S. B. S. Val. V. p. 130.

मैथिलेन वत्सगोत्रजेन काव्यप्रकाशव्याख्यातुर्गोविन्दठक्कुरस्य पुत्रेण देवनाथठक्कुरानुजेन मधुसूदनठक्कुरेण (1600 A. D.) कृता काचन कण्टकोद्धारनाम्नी आलोकव्याख्या मङ्गलवादप्रामाण्यवादयोः परं सरस्वतीभवनपुस्तकालयमालायां (S.B.T 78) मुद्रिता । अमुद्रिताः केचन भागास्तञ्जपुरपुस्तकालये लभ्यन्ते, यस्यां आलोकोपर्युद्भाविताः पूर्वपक्षा निराकृता दृश्यन्ते । अस्यापि काचन व्याख्या रूपनाथठक्कुरतर्करत्नेन (1800 A. D.) कृता दर्भङ्गापुस्तकालये विद्यते । बलभद्रमिश्रपुत्रेण पद्मनाभमिश्रेण (1600 A. D.) कृता काचन भावप्रकाशाख्या आलोकव्याख्याऽमुद्रिता बरोडाभाण्डारगारपुस्तकालययोर्लभ्यते, यस्या इतरशङ्कानिरसनपूर्वकं पक्षधरपक्षस्य स्थापनात् पक्षधरोद्धार इति नामान्तरं प्रसिद्धं विद्यते । रघुपतिमिश्रकृता (1600 A.D.) काचन आलोकव्याख्या संग्रहाख्याऽमुद्रिता बरोडापुस्तकालये लभ्यते । मैथिलेन श्रीकण्ठरामयोः पित्रा अनुमानदीधितिव्याख्यातू रुद्रभट्टस्य प्रपितामहेन रघुनाथशिरोमणि - कृष्णदास सार्वभौमयोश्शिष्येण जगदीशभट्टाचार्यगुरुणा भवानन्दसिद्धान्तवागीशेन (1600 A. D.) कृता काचन आलोकप्रत्यक्षखण्डस्य सारमञ्जर्याख्या व्याख्या अमुद्रिता सरस्वतीभवन - आसियाटिकसोसाईटिबेंगाल - मद्रपुरी-तञ्जपुर-काश्मीर-तिरुवनन्तपुर - लन्दननगर - पुस्तकालयेषु लभ्यते । दाक्षिणात्येन रामान्वयप्रसूतेन शब्दकौमुदीव्याख्यातुर्द्वादशाहयज्वनःभवान्याश्च पुत्रेण चोक्कनाथशास्त्रिणः पौत्रेण मीमांसान्यायवेदान्तेषु निष्णातेन ज्ञानेन्द्रसरस्वती - गण्डनृसिंहसूरि - कालहस्तीशयज्वनां शिष्येण अद्वैतरत्नकोशपूरणी - तर्कभाषातर्कोज्जीविन्याश्च कर्त्रा अग्निहोत्रभट्टेन (1675 A. D.) कृता काचन आलोकव्याख्या स्फूर्तिरिति ख्याता अमुद्रिता तञ्जपुरमैसूरपुस्तकालययोर्लभ्यते ।

मैथिलेन केशवमिश्रपौत्रेण काव्यप्रदीपकर्तृगोविन्दठक्कुरपुत्रेण मधुसूदनठक्कुर ज्येष्ठभ्रात्रा पितुस्सोमभट्टाच्चाधीतशास्त्रेण काव्यकौमुद्यादिग्रन्थकर्त्रा देवनाथठक्कुरेण (1600 A.D.) कृता आलोकव्याख्या परिशिष्टाख्या अमुद्रिता भण्डारगारपुस्तकालये लभ्यते । राघवसोमयाजिवंशजेन तिरुमलाचार्यपुत्रेण सर्वशास्त्रविशारदेन तर्कसंग्रहदीपिकादिकर्त्रा अन्नम्भट्टेन (1600 A. D.) कृता आलोकव्याख्या सिद्धाञ्जनाख्या अमुद्रिता कल्कत्तारायलआसियाटिकपुस्तकालये लभ्यते । रत्नाकर विद्यावाचस्पतिना (1600 A. D) कृता काचन आलोकव्याख्या अमुद्रिता वाराणसीसंस्कृतकलाशालापुस्तकालये दृश्यते । भवनाथ-लक्ष्म्योः पुत्रेण काशी-

वासिना तर्कभाषाटीका - मणिसारकारेण गोपीनाथठक्कुरेण (1650 A. D.) कृता रहस्याख्या आलोकानुमानशब्दभागयोर्व्याख्या अमुद्रिता तञ्जपुरमैसूरवाराणसी-पुस्तकालयेषु लभ्यते । दीधितिव्याख्यागादाधरीकर्त्रा प्रसिद्धेन गदाधरभट्टाचार्येण (1650 A. D. ) कृता काचन आलोकटीका टिप्पणीनाम्नी तञ्जपुर भण्डारगार-मैसूर - तिरुवनन्तपुर - पुस्तकालयेष्वमुद्रिता विद्यते ।

रघुनाथविद्यालङ्कारेण (1700 A. D.) रामभद्रसार्वभौमशिष्येण जयरामन्याय पञ्चाननेन (1700A. D.) च कृतं विवेकाख्यं आलोकव्याख्याद्वयं गोपीनाथसूच्यां वाराणसीसरस्वतीभवनपुस्तकालये च लभ्यते । विद्यानिवासभट्टाचार्यज्येष्ठपुत्रेण काशीवासिना किरणावली - कुसुमाञ्जलि - नव्यवादटीका - पदार्थखण्डनटीका - दीधिति व्याख्यादिकर्त्रा रुद्रन्यायवाचस्पतिना (1700 A. D.) कृता आलोकसंग्रहनामा ग्रन्थः अमुद्रितश्शब्दखण्डस्यैव बीकानेरपुस्तकसूच्यां दृश्यते । मधुसूदनठक्कुर शिष्येण गुणानन्दविद्यावागीशेन[1] (1700 A.D.) कृता आलोकशब्दखण्डव्याख्या विवेकाख्या सरस्वतीभवनपुस्तकालये बरोडापुस्तकालये च रक्षिता विद्यते । मैथिलेन वत्सगोत्रजेन अमृतोदयनाटकादिकर्त्रा गोकुलनाथोपाध्यायेन (1700 A. D.) कृता आलोकव्याख्या विवरणाख्या मिथिलासूच्यां दृश्यते । क्वचित् विद्योत इति नाम श्रूयते । दीधितेरपि विद्योतनाम्नी व्याख्या अदसीया लभ्यते । हरिरामतर्कवागीश-शिष्येण चिन्तामणिव्याख्यातत्त्वदीपिकाकर्त्रा रघुदेवन्यायालङ्कारेण (1700 A. D.) कृता आलोकव्याख्या सरस्वतीभवनपुस्तकालये तञ्जपुरपुस्तकालये च रक्षिता । क्वचित् निरुक्तिप्रकाश इति नामान्तरं दृश्यते । तर्कसिम्हनामकपण्डितकृता काचन दीपिकाख्या आलोकव्याख्या बम्बई विश्वविद्यालयपुस्तकसूच्यां दृश्यते । परं केवलं प्रत्यक्षखण्डस्यैव विद्यते ।

---

1, J. A. S. B. Vol. IX.p. 280.


तत्त्वचिन्तामणि-
आलोकपरम्परा
आलोककण्टकोद्धारः
आलोकसंग्रहः
उद्योतः
टिप्पणी
दर्पणम्
दर्पणनिरोधिनी
दीपिका
पक्षधरोद्धारः
रघुपतिकृतः
रुद्रन्यायकृतः
तर्कसिंहकृता
माधवमिश्रकृता
गोपीनाथकृता
गदाधरकृता
जयदेवकृता
हरिदासकृता
स्फूर्तिः
सिद्धाञ्जन
व्याख्याः
विवेकः
विद्योतनम्
रहस्यम्
मञ्जरी
प्रसारिणी
परिशिष्टः
रघुदेवकृता
रत्नाकरकृता
मथुरानाथीयम्
गोपीनाथीयम्
रघुनाथीयः
जयरामीयः
गुणानन्दवागीशीयः

**दीधितिव्याख्या निर्दिश्यन्ते—**

रघुनाथशिरोमणिकृतस्य दीधितिग्रन्थस्यान्यूनाः मांकिं त्रिंशद्भ्योऽप्यधिकाः व्याख्याः लभ्यन्ते। तासु भवानन्दगुरुणा कृष्णदाससार्वभौमभट्टाचार्येण (1600 A.D.) कृता काचन दीधित्यनुमानखण्डव्याख्या प्रसारिण्याख्या बरोडा - तञ्जपुर - लन्दन - जम्मुकाश्मीररघुनाथमन्दिर - पुस्तकालयेषु लभ्यते। व्याप्तिग्रहोपायपर्यन्तं मुद्रितश्च (B. I. 196)। सनातनमिश्रवटेश्वरमिश्रप्रपौत्रेण माधवमिश्रपौत्रेण यादव-विद्यावागीशद्वितीयपुत्रेण रघुनाथरुद्रेश्वरयोः पित्रा रामभद्रसिद्धान्तवागीशपितामहेन यजुर्वेदिना काश्यपगोत्रजेन मैथिलेन भवानन्दरामभद्रसार्वभौमयोश्शिष्येण काव्य-प्रकाशरहस्य - शब्दशक्तिप्रकाशिका-तर्कामृतादिकर्त्रा जगदीशभट्टाचार्येण (1600 A. D) कृता दीधितिव्याख्या प्रकाशिकाख्या जागदीशीति प्रसिद्धा मुद्रिता Ch.S S. 29, B. I. 194)। रघुनाथ-कृष्णदास-मथुरानाथानां शिष्येण श्रीकण्ठ-रामविद्यावागीशयोः पित्रा मधुसूदन-रुद्रतर्क-वागीशयोः पितामहेन आलोकसारमञ्जर्या-दिकर्त्रा जगदीशभट्टाचार्य-राघवेन्द्रयोर्गुरुणा भवानन्दसिद्धान्तवागीशेन (1600 A.D) कृता काचन दीधितिव्याख्या गूढार्थप्रकाशाख्या भवानन्दीति प्रसिद्धा मुद्रिता (B. I. 194)। दीधितिव्याख्यास्वस्यास्स्थानम्—

गुणोपरि गुणानन्दी भवानन्दी च दीधितौ।
सर्वत्र मथुरानाथी जागदीशी क्वचित् क्वचित्॥

इति पद्येन सम्प्रदायप्रसिद्धम्।

सन्यासस्वीकारात्पूर्वं गोविन्दशास्त्रीति प्रसिद्धेन नीलकण्ठसूरिपुत्रेण वाराणसीवासिना सन्यासस्वीकारादनन्तरं नारायणतीर्थ इति प्रसिद्धेन बासुदेवतीर्थ-शिवराम-तीर्थयोश्शिष्येण अद्वैतिनो लघुचन्द्रिकाकर्तुर्ब्रह्मानन्दसरस्वत्याः गुरुणा भाषापरिच्छेदव्याख्या-भाट्टभाषाप्रकाशिकयोः कर्त्रा नारायणतीर्थेन (1650 A. D.) कृता काचन दीधितिव्याख्या सामान्यलक्षणान्ता वाराणसीसंस्कृतकालाशालापुस्तकालये, Stern सूच्यां च दृश्यते। अमृतोदयनाटककर्त्रा (K. M. 59) न्यायवेदान्त-साहित्यज्योतिषकर्मकाण्डेषु विदुषा मैथिलेन वत्सगोत्रजेन विद्यानिधिपीताम्बरो-पाध्यायपुत्रेण उमागर्भजेन गोकुलनाथोपाध्यायेन (1650-1750 A. D) कृता काचन दीधितिव्याख्या विद्यातनाम्नी काव्यमालासूच्यां दृश्यते।

काश्यपगोत्रजस्य आत्मतत्त्वविवेकदीधितिव्याख्यातृ रघुनाथशिरोमणि-वासुदेवसार्वभौमशिष्यस्य श्रीरामतर्कालङ्कारस्य पुत्रेण पितृ रघुनाथशिरोमणेश्च अधीतशास्त्रेण चिन्तामणि - आलोक - किरणावलीप्रकाश - न्यायलीलावतीप्रकाश - न्यायलीलावतीप्रकाशदीधिति - बौद्धाधिकार - सिद्धान्तरहस्यादीनां कर्त्रा मथुरानाथतर्कवागीशेन (1600 A. D.) कृता काचन माधुरीफक्किकेति नाम्ना प्रसिद्धा दीधितिव्याख्या अमुद्रिता अडयारमद्रपुरी मैसूर बरोडालन्डन पुस्तकालयेषु लभ्यते ।

जगद्गुरोः श्रीरामस्य चरणौ मूर्ध्नि धारयन् ।
तत्सुतो मथुरानाथो दीधितिं स्फुटयत्ययम् ॥

इति प्रतीकग्रहणपूर्वकं व्याख्याय दीधित्यर्थं विशदयति । सौन्दडोपाध्यायं हरिनाथोपाध्यायं च निर्दिशन्नयं ग्रन्थ अनुमानपरिच्छेदे अनुमितिप्रकरणत् आरभ्य अवच्छेदकतानिरुक्तिपर्यन्तमेवोपलभ्यते । गोविन्दतर्कालङ्कारभट्टाचार्यपुत्रेण जानकीनाथीयन्यायसिद्धान्तमञ्जरीव्याख्यात्रा नृसिम्हपञ्चाननभट्टाचार्येण (1675 A. D.) कृता काचन दीधितिव्याख्या सारिकाख्या अमुद्रिता बम्बईविश्वविद्यालयपुस्तकालये लभ्यते ।

शब्दपरिच्छेदे मण्युक्तस्य शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वं वेदत्वम् इति वेदलक्षणस्य तत्प्रतिपादकदीधितिग्रन्थस्य च व्याख्यात्मकोऽयं ग्रन्थः ।

देवीदासपुत्रेण कृष्णकान्तविद्यासागरस्य (1801 A. D.) पितामहेन रघुनाथशिष्येण न्यायलीलावतीदीधिति–गुणकिरणावली–न्यायदीपिका–तर्कामृतव्याख्यात्रा बहूनां वादानां कर्त्रा मैथिलेन सर्वतन्त्रस्वतन्त्रेण रामकृष्णभट्टाचार्येण (1700 A. D.) कृता काचन दीधितिव्याख्या लीलावत्यपराभिधा अमुद्रिता बर्नेलसूच्यां आसियाटिकसोसाइटि बंगालसूच्यां वाराणसीसंस्कृतकलाशालायां च दृश्यते ।

माधवदेवपौत्रेण लक्ष्मणदेवपुत्रेण वाराणसीवासिना पितुरेवाधीतशास्त्रेण तर्कभाषासारमञ्जरी (तर्कप्रकाशिका)—रामचन्द्रीयगुणकिरणावलीव्याख्या (गुणरहस्य) न्यायसारा (Ptd. Pandit.) दिकर्त्रा माधवभट्टाचार्येण (1700 A. D.) काचन दीधितिव्याख्या कृतेति गोपिनाथकविराजाभिप्रायः । परं Hultzsch सूच्याम् अस्य

एवकारदीधितिमञ्जरीति नाम दृश्यते । व्याख्येय दीधितिगतानां एवकाराणां आशयं विशदयति । अमुद्रितोऽयं ग्रन्थः लखनऊ—पञ्जापू—मिथिलापुस्तकालयेषु लभ्यते ।

मधुसूदनठक्कुरशिष्येण आलोक—न्यायलीलावती—गुणकिरणावलिप्रकाश—आत्मतत्त्वविवेकदीधितीनां व्याख्यात्रा गौडदेशजेन गुणानन्दविद्यावागीशेन (1700 A. D.) कृता काचन दीधित्यनुमानखण्डव्याख्या विवेकाख्या आलवार्सूच्यां दृश्यते, आत्मतत्त्वविवेकव्याख्यायां निर्दिष्टश्च ।

हरिरामतर्कवागीश—चिरञ्जीवभट्टाचार्ययोश्शिष्येण गदाधरसामयिकेन रघुदेवन्यायालङ्कारेण (1700 A. D.) कृता काचन दीधितिव्याख्या तत्त्वदीपिकाख्या मद्रपुरी-तञ्जपुरपुस्तकालययोर्लभ्यते । न केवल दीधितेरेवेयं व्याख्या परं मणिसहिताया एवेति ज्ञायते ।

विद्यानिवासभट्टाचार्यपुत्रेण वाचस्पतिभट्टाचार्यापराभिधेन विश्वनाथभट्टाचार्येण (1700 A. D.) कृता काचन मणिदीधितितात्पर्यानुसारिणी व्याख्या अमुद्रिता इच्छारामसूच्यां बम्बईविश्वविद्यालये च दृश्यते ।

विद्यावाचस्पति पौत्रेण विद्यानिवासभट्टाचार्यज्येष्ठपुत्रेण विश्वनाथसिद्धान्तपञ्चाननज्येष्ठभ्रात्रा गोविन्दभट्टाचार्यचक्रवर्तिनः पित्रा गौडेन आलोककिरणावली-कुसुमाञ्जलिकारिका-नञ्वाद-पदार्थखण्डन-लीलावतीप्रकाशादीनां टीकायाः वादपरिच्छेदस्य च कर्त्रा रुद्रन्यायवाचस्पतिना (1700 A. D.) कृता काचन दीधितिव्याख्या परीक्षाख्या अमुद्रिता मद्रपुरी-अडयार पुस्तकालययोर्लभ्यते ।

भवानन्दसिद्धान्तवागीशपौत्रेण रामेश्वरपुत्रेण मधुसूदनशिष्येण सिद्धान्तमुक्तावलीव्याख्यादिनकरीयव्युत्पत्तिवाद-कारकाद्यर्थनिर्णयादीनां व्याख्यात्रा रामरुद्रतर्कवागीशेन (1700 A. D) कृता काचन दीधितिव्याख्या रौद्रीत्यपराभिधा शब्दखण्डान्ता अपूर्णा बरोडासूच्यामेव दृश्यते मान्यत्र ।

रामभद्रभट्टाचार्यशिष्येण जनार्दनव्यासलौकाक्षिभास्करयोर्गुरुणा न्यायसिद्धान्तमाला - कुसुमाञ्जलिकारिकाव्याख्या-आलोकव्याख्या - गुणकिरणावलीप्रकाशव्याख्या - पदार्थमाला - आख्यातवादटीका अन्यथाख्यातिलघुसनिकर्षादिवादावलि,

काव्यप्रकाशव्याख्यादिकर्त्रेति सूत्रवृत्तिप्रस्थाने प्रतिपादितेन जयरामान्यायपञ्चाननेन (1700 A.D.) कृता काचन दीधितिव्याख्या **गूढार्थविद्योतनाख्या** अमुद्रिता तञ्जपुर-मैसूर-भाण्डारगार-बरोडा लन्दनपुस्तकालयेषु लभ्यते ।

**सुबुद्धिमनोरमाख्या** काचन दीधितिव्याख्या तर्कसंग्रह-दीपिका-आलोक-व्याख्यादिकर्त्रा आन्ध्रदेशजेन प्रसिद्धेन अन्नम्भट्टेन कृता अमुद्रिता अडयारमद्रपुरी-पुस्तकालययोर्लभ्यते ।

दुर्बलाचार्य इति प्रसिद्धेन देवीदत्तपौत्रेण रामसेवकपुत्रेण कृष्णमित्राचार्येण (1800 A.D.) कृता काचन दीधितिव्याख्या **प्रकाशनाम्नी** औधसूच्यां दृश्यते । कौण्डिन्यगोत्रजेन रामभट्टपुत्रेण नीलकण्ठीति प्रसिद्धायाः प्रकाशाख्यायाः तर्कसंग्रह-दीपिकाव्याख्यायाः कर्त्रा गादाधरी-जागदीशीनां व्याख्यात्रा नीलकण्ठभट्टेन (1800 A. D.) कृता अपरा दीधितिव्याख्या अप्रकाशिता हाल्सूच्यामेव दृश्यते । रघुनाथ विद्यालंकार (1900 A. D.) कृता काचन अनुमानदीधितिव्याख्या **प्रतिबिम्बाख्या** सरस्वती भवनपुस्तकालये वाराणस्यां लभ्यते । लक्ष्मीधरपुत्रेण विश्वेश्वरपण्डितेन कृता काचन दीधितिव्याख्या **प्रवेशाख्या** अप्रकाशिता वाराणसीपुस्तकालये लभ्यते । अस्या अपि व्याख्या **तत्त्वपरीक्षाख्या** वंशीधरपण्डितकृता मिथिलासूच्यां दृश्यते । आख्यातवाददीधितिव्याख्यात्रा रामचन्द्रसिद्धान्तवागीशेन कृता काचन तत्त्वचिन्ता-मणिदीधितिव्याख्या **विवेचनाख्या** प्रत्यक्षान्ता अप्रकाशिता वारणसीसरस्वती-भवन—अनन्तशयनपुस्तकालययोर्लभ्यते । एवं चतुर्भुजपण्डितरचिता काचन **विस्तराख्या** दीधितिव्याख्या लाहूरपुस्तकालये, यज्ञमूर्तिवंशजेन आन्ध्रदेशजेन काशीनाथेन कृता दीधित्यसिधिभागव्याख्या वाराणसीपुस्तकालये हाल्सूच्याञ्च, दृश्येते । रामचन्द्रसिद्धान्तवागीशेन (1900 A. D.) कृता काचन प्रत्यक्षदीधिति-व्याख्या सरस्वतीभवने वाराणस्यां लभ्यते ।

अवयवव्याख्याने कृष्णभट्टीये निर्देशात्—**गोपालनाथ** कृता काचन दीधि-तिव्याख्या आसीदिति च ज्ञायते । एवमेव **गोवर्धनाचार्य**कृता व्याख्या औध-सूच्याम्, **गोविन्दभट्ट**रचिता प्रामाण्यवादात्मिका व्याख्या बरोडासूच्याम्, **वज्र-टङ्कशास्त्रि**कृता काचन व्याख्या मद्रपुरीपुस्तकालये, **वेङ्कटाचार्य**कृतं दीधितिक्रोड-पत्रं Burnall सूच्याम्, **यतिवर्येण** केनचित् कृता काचन व्याख्या हाल्सूच्याञ्च अप्रकाशिता विद्यन्ते ।

## दीधितिव्याख्यापरम्परा I

तत्त्वचिन्तामणिः

दीधितिः

- असिद्धिभाग-व्याख्या
- एवकारदीधिति मञ्जरी
- गूढार्थप्रकाशः (भावानन्दी)
- गूढार्थ-विद्योतनम्
- तत्त्वदीपिका
- परीक्षा
- प्रकाशः
- प्रकाशिका (जागदीशी)
- प्रतिबिम्ब
- प्रवेशः — तत्त्वपरीक्षा
- प्रसारिणी
- रहस्यम् (मथुरानाथः)
- लीलावती

- क्रोडपत्रम्
- सुबुद्धिमनोरमा
- सारिका
- व्याख्याः
  - गोपालनाथ-कृता
  - गोवर्धनाचार्य-कृता
  - गोविन्द-भट्टकृता
  - नारायण-तीर्थकृता
  - नीलकण्ठ-कृता
  - यतिवर्य-कृता
  - रामचन्द्र-सिद्धान्त-वागीशकृता
  - रुद्रतर्कवागीश-कृता
  - वज्रटङ्ककृता
  - विश्वनाथकृता
- विवेचनम्
- विवेकः
- विस्तरः
- विद्योतः

**प्रकाशिका - गादाधरी**

हरिरामतर्कवागीशशिष्येण जीवाचार्यपुत्रेण वङ्गदेशीयेन व्युत्पत्तिवाद-शक्तिवाद - मुक्तिवाद - आत्मतत्त्वविवेक दीधितिटीकादिकर्त्रा देवीप्रसादलब्धबुद्धि कौशलेन कृष्णभक्तेन विद्वत्कुलचूडामणिना गदाधरभट्टाचार्येण (1700 A.D.) कृता काचन दीधितिव्याख्या **प्रकाशिकाख्या गादाधरीति** प्रसिद्धा, या चौखाम्बा-मैसूर-कलकत्ता-शास्त्रमुक्तावलीग्रन्थमालासु मुद्रिता।

दीधितिव्याख्यात्मकोऽयं ग्रन्थः विस्तृततरसरलश्चास्ति। नव्यन्यायशास्त्र-शैलीमर्मज्ञानां ग्रन्थार्थावगमे काठिन्यमेव न दृश्यते। दीधितिगतं प्रतिवाक्यं अव-तरणतत्तदर्थविषयविचार - पूर्वपक्ष - समाधाननिरूपणमुखेन सम्यक् परिशीलितम्। प्रतिवाक्यं शाब्दबोधविचारः पठितॄणां व्युत्पत्तिमुत्पादयति। हेत्वाभाससामान्य-लक्षणविचारावसरे मणिवाक्यं दीधितिवचनं आधारं कृत्वा गादाधर्या परिष्कृतः परिष्कारः ग्रन्थकर्तुरपारं बुद्धिपाटवं, अगाधं वैशारद्यञ्च प्रकाशयति। अनुमान-दीधितिव्याख्या गादाधरी इतरव्याख्यापेक्षया ग्रन्थसंख्यायां द्विगुणं अपरिमिता अस्ति। दक्षिणदेशे गादाधर्या एव प्रचार अधिकतर अस्ति। कालक्रमेण अति-विस्तृतायाः गादाधर्यास्सम्पूर्णमनुमानखण्डमध्येतुमध्यापयितुञ्च न शक्यते। ततश्च गदाधरभट्टाचार्यकृतान् अनुमानखण्डान्तर्गतान् सामान्यनिरुक्तिपञ्चलक्षणीचतुर्दश-लक्षणीसिद्धान्तलक्षण-अवयव-पक्षताख्यान् पञ्चवादानेव पठन्ति, पाठयन्ति च। तेषु च बहुस्थानानि ऊहापोहार्हाणि दुर्बोधानि च वाक्यानि सन्तीति ते वादाः। बहुभिर्व्याख्याता दृश्यन्ते।

तेषु शब्दशक्तिप्रकाशिका—तर्कामृतादिकर्ता दीधितिव्याख्यात्रा जगदीश-भट्टाचार्येण कृता काचन गादाधरीसिद्धान्तलक्षणभागस्य व्याख्या टिप्पण्याख्या अमुद्रिता बम्बईविश्वविद्यालयसूच्यां दृश्यते। परं मूलग्रन्थस्य आद्यन्तपंक्तिभासात् जगदीशकर्तृत्वे विश्वासः मन्थरं प्रवर्तते।

रङ्गनाथकमलाम्बयोः पुत्रेण महादेवपौत्रेण नारायणानुजेन हरिपण्डितशिष्येण कृष्णम्भट्ट इति प्रसिद्धेन कृष्णभट्टेन (1800 A. D.) कृता गादाधरीव्याख्या **कर्षिकाख्या कृष्णम्भट्टीति** प्रसिद्धा आन्ध्रलिप्यां मुद्रिता। पञ्चवादेषु पञ्चल-क्षणीगादाधरीव्याख्या निर्णयसागरमुद्रणालये, सिद्धान्तलक्षण—पक्षतागादाधरीव्या-

ख्या मैसूरनगरे, चतुर्दशलक्षणी गादाधरीव्याख्या अडयारपुस्तकालये, सव्यभिचार-सामान्यनिरुक्ति-सत्प्रतिपक्षगादाधरी-व्याख्या मद्रासनगरे (A.O.R. Vols. 16-17) च मुद्रिताः। कौण्डिन्यगोत्रजेन रामभट्टपुत्रेण तर्कसंग्रहदीपिकाव्याख्याप्रकाशिका-कर्त्रा नीलकण्ठभट्टेन (1800 A. D.) कृता काचन नीलकण्ठीयाख्या गादाधरी-व्याख्या लाहूर–राधाकृष्णसूच्यां दृश्यते। दुर्बलाचार्य इति प्रसिद्धेन देवीदत्तपौत्रेण रामसेवकपुत्रेण कृष्णमित्राचार्येण (1800 A. D.) कृता काचन गादाधरीटीका औधसूच्यां दृश्यते। हरनारायणीयेति प्रसिद्धा हरनारायणकृता गादाधरीव्याख्या वाराणसीपुस्तकालयेऽमुद्रिता लभ्यते। वेणीमाधवकृता (1800 A. D.) गादाधरी प्रामाण्यवादव्याख्या प्रभाख्या वाराणस्यां मुद्रिता। श्रीवत्सगोत्रजेन रामभद्रदी-क्षितपौत्रेण अण्णादीक्षित–लक्ष्म्योः पुत्रेण अश्वत्थनारायणदीक्षितेन (1800 A.D.) व्युत्पत्तिवादव्याख्यात्रा कृता काचन गादाधरीव्याख्या भावसंग्रहाख्या अमुद्रिता अडयारमद्रासपुस्तकालययोः मैसूरपुस्तकालये च लभ्यते।

मैसूरराजकीयविदुषा शतकोटि रामशास्त्रिणा (1850 A.D.) कृतं गादा-धरीसत्प्रतिपक्षविभाजककोडपत्रं काञ्चीनगरे मुद्रितम्। वासिष्ठगोत्रोत्पन्नेन बह्वृच-शाखाध्यायिना आश्वलायनसूत्रिणा रामचन्द्र सूरिपुत्रेण रामशास्त्रिपिता राघवाचार्य-शिष्येण महाराष्ट्रीयेण शङ्करपादभूषणकर्त्रा रघुनाथसूरिणा (1350 A. D.) कृता काचन गादाधरीपञ्चवादव्याख्य न्यायरत्नाख्या अमुद्रिता अडयार मद्रपुरी-पुस्तकालययोर्लभ्यते। चतुर्दशलक्षणीभाग अडयारपुस्तकालये मुद्रिता॥ सर्वतन्त्र-स्वतन्त्रेण मैथिलेनाधुनिकेन बालशास्त्रि-लोकनाथझा-विशुद्धानन्दसरस्वतीनां शिष्येण शाण्डिल्यगोत्रेजेन व्युत्पत्तिवादव्याख्यात्रा जागदीशीव्याप्तिपञ्चकसिद्धान्तलक्षणव्या-ख्याकर्त्रा धर्मदत्तबच्चाझाशर्मणा (1860 A.D.) कृता गादाधरी सामान्यनिरु-क्तिव्याख्या विवृत्याख्या वाराणस्यां मुद्रिता। गोपीनाथकविराजगुरुणा काशीस्थ-टीकामाणि संस्कृतकलाशालाध्यापकेन शिवदत्तमिश्रगुरुणा जागदीशीमाधुरीव्या-ख्यात्रा आधुनिकेन वामाचरणभट्टाचार्येण (1888 A.D.) कृता मनोरमाख्या गादाधरीसव्यभिचारभागव्याख्या वाराणस्यां मुद्रिता। वामाचरणभट्टाचार्यशिष्येण प्रभुदत्तशास्त्रि–श्रीनह्वीदेव्योः पुत्रेण विद्याधरशास्त्र्यनुजेन वाराणसीवासिना गौडेन जागदीशीमाधुरीव्याख्यात्रा शिवदत्तमिश्रेण (1939 A. D.) कृता काचन गादा-धरी–हेत्वाभास सामान्यनिरुक्तिव्याख्या गङ्गाख्या वाराणस्यां (K. S. S. 131) मुद्रिता। जयरामदासभगवत्पादशिष्येण हरिनामदासस्वामिना (1881-1950 A.D.)

कृता काचन सामान्यनिरुक्तिप्रकरणगादाधरीव्याख्या चन्द्रकलाख्या वाराणस्यां मुद्रिता यस्यां मूलग्रन्थस्थप्रतिपदव्यावृत्तिप्रदर्शनपूर्वकं गादाधरीतात्पर्यवर्णनं सरलशैल्यां दृश्यते ।

एवं श्रीरङ्गाचार्येण रचिता नक्षत्रमालिकाख्या गादाधरीव्याख्या मैसूरपुस्तकालये, शङ्करभट्टकृता काचन व्याख्या शङ्करभट्टीयेति मद्रासपुस्तकालये, विद्यते । गादाधरी-अवयवभागस्य विट्ठलभट्टेन त्र्यम्बकशास्त्रिणा कालीशङ्करेण च कृताः व्याख्याः क्रोडपत्ररूपाः मैसूरविश्वविद्यालये सन्ति । चतुर्दशलक्षणीगादाधर्याः जगन्नाथपट्टाभिरामकृते व्याख्ये मैसूरपुस्तकालये विद्येते । तयोः पट्टाभिरामीया मुद्रिता तत्रैव । गादाधरीपञ्चलक्षणीभागस्य नरसिम्हमूर्ति-पट्टाभिरामशङ्करभट्टकृताः व्याख्याः मैसूरतिरुवनन्तपुर - पुस्तकालययोर्लभ्यते । गादाधरी प्रत्यक्षखण्डस्य जातवेदाध्वरिकृता काचन व्याख्या मैसूर पुस्तकालये लभ्यते । गोलोकनारायणकृता मुक्तावल्याख्या गादाधरीमुक्तिवादव्याख्या अमुद्रिता अडयार मद्रपुरीपुस्तकालययोः, शङ्करभट्टकृता व्याप्तिवादव्याख्या मद्रपुरीतिरुवनन्तपुरपुस्तकालययोः, विजयराघव - कस्तूरीरङ्गाचार्यकृते सत्प्रतिपक्षगादाधरीव्याख्ये मैसूरपुस्तकालये, विजयराघव-त्र्यम्बकशास्त्रिकस्तूरीरङ्गाचार्य-वेङ्कटाचार्य-पुरुषोत्तमशास्त्रिकृतास्सामान्यनिरुक्तिगादाधरीव्याख्याः मैसूर पुस्तकालये लभ्यन्ते । तासु वेङ्कटाचार्यकृता व्याख्या झंझामारुतमित्याख्यायते । रायप्पेट्टै कृष्णाचार्यकृता सार्वभौमपरिष्काव्याख्या अडयारपुस्तकालये लभ्यते । गुरुप्रसादशास्त्रिकृता गादाधरीसिद्धान्तलक्षणव्याख्या दीपिकाख्या वाराणस्यां मुद्रिता ।

कालीशङ्करभट्ट-कृष्णताताचर्य - चन्द्रनारायण - चन्द्रमण्युपाध्याय - जगन्नाथरघुनाथभट्टादिभिः कृतानि गादाधरीक्रोडपत्राणि तञ्जपुर - मद्रास - मैसूर - लण्डन पुस्तकालयेषु लभ्यन्ते । तेषु कालीशङ्करीयं वाराणस्यां मुद्रितम् । जयरामदासस्वामिशिष्येण हरिनामदासस्वामिना कृतं कलाविलासाख्यं क्रोडपत्रमपि वाराणस्यां मुद्रितम् । कालीशङ्करेण तत्त्वचिन्तामण्यनुपानखण्डस्यापि व्याख्या कृतेति विन्ध्येश्वरी प्रसादो वदति । एवं बहवश्च वादा अमुद्रितास्सन्ति ।

## दीधितिव्याख्यापरम्परा II



एवं गादाधरीपञ्चलक्षणीव्याख्या बालबोधिन्याख्या चिन्तामणिदीधिति-गादाधर्युक्तानर्थान् सरसमधुरया शैल्या बोधयन्ती छात्राणां बहूपकरोति। व्याख्येयं आधुनिकेन विंशतिशतकीयेन चतुश्शास्त्रवेत्रा तिरुपतिकेन्द्रीयविद्यापीठप्राध्यापकेन रामानुजताताचार्येण रचिता तत्रैव मुद्रिता च।

## प्रकाशिका—जागदीशी

शब्दशक्तिप्रकाशिकादिकर्तृजगदीशभट्टाचार्यकृता (1600 A. D) जागदीशीति प्रसिद्धा प्रकाशिकाख्या दीधितिव्याख्या पूर्वमस्माभिः (P. No. 56) निर्दिष्टा, या दीधितिग्रन्थस्य यथाभूताशयप्रकाशनार्थमेव ग्रन्थकृता लिखिता दृश्यते।

कुर्वन्ति नित्यमनुमानमणेरनेके
प्रायः प्रयासमधिदीधिति नीतिभाजः।
एषा पुनस्तदपि नैव निजं निरूढम्
अर्थं प्रकाशयति तेन ममैष यत्नः॥ इति।

सार्वभौम—वाचस्पतिमिश्र-यज्ञपत्युपाध्याय - पक्षधरमिश्र-उदयनाचार्य-प्रगल्भ सौन्दडोपाध्याय - कुब्जशक्तिवादिश्रीकराश्चेत्याचार्याः अत्र निर्दिष्टाः। मुद्रिता चेयं व्याख्या चौखाम्बामुद्रणालये (Ch. S. S. 29 & B. I· 104)। अस्या व्याख्याः—

वाराणसीवासिना रङ्गनाथकमलाम्बयोः पुत्रेण नारायणानुजेन कृष्णभट्टेन (1800 A· D·) कृता जागदीशीव्यधिकरणधर्मावच्छिन्नाभावप्रकरण - सामान्य निरुक्तिप्रकरणयोर्व्याख्या मञ्जूषाख्या अमुद्रिता मैसूर लन्दनपुस्तकालययोर्लभ्यते। सिद्धान्तलक्षणभागव्याख्या तोषिण्याख्या तु पञ्चाबविश्वविद्यालयसूच्यां दृश्यते। अडयारपुस्तकमालायां तु भागशो मुद्रिता (A. L. S. 38)। शिरोमणि-नञ्वाद-व्याख्या - सिद्धान्तमुक्तावलिव्याख्या - तर्कसंग्रहव्याख्यानां कर्त्रा रामनाथपण्डितेन (1800 A· D.) कृता काचन जागदीशीव्याख्या अमुद्रिता वाराणसीसूच्यां दृश्यते। गादाधरीव्याख्यात्रा शङ्करमिश्रेण (1800 A.D.) कृता काचन जागदीशी-व्याख्या अमुद्रिता बम्बई विश्वविद्यालये लभ्यते। सङ्गमेश्वरपण्डितेन (1800 A. D) कृता काचन जागदीशीसिन्धान्तलक्षणभागव्याख्या आन्ध्रविश्वविद्यालय-

मालायां (No. 7) मुद्रिता । एवमष्टादशशकीयैः (1800 A. D.) हरनारायण-वीरेश्वर-चन्द्रनारायणैः कृताः जागदीशीव्याख्याः यथाक्रमं अलहाबाद मिरजापुर-काशीसूचीषु दृश्यन्ते । कौण्डिन्यवंशोत्पन्नेन रामभट्टपुत्रेन तर्कसंग्रहदीपिकाव्याख्याप्रकाश (नीलकण्ठी) व्याख्यायाः भास्करोदयस्य कर्तुर्लक्ष्मीनृसिम्हस्य पित्रा मणिप्रभानामकचिन्तामणिदीधितिव्याख्यायाः तर्कसंग्रहदीपिकाव्याख्याप्रकाशस्य च कर्त्रा नीलकण्ठेन (1816 A. D.) कृता काचन जागदीशीव्याख्या टीकाख्या अमुद्रिता राधाकृष्णसूच्यां दृश्यते । मैथिलेन व्युत्पत्तिवादव्याख्यात्रा धर्मदत्तबच्चाशर्मणा (1860 A. D.) लिखिता जागदीशी - अवच्छेदकतानिरुक्ति-व्याप्तिपञ्चक-सिद्धान्तलक्षणव्याख्या विवृत्याख्या वाराणस्यां मुद्रिता । आधुनिकेन वङ्गीयेन विदुषा जीवानन्दविद्यासागरेण (1900 A D.) कृता काचन जागदीशीव्याख्या वादार्थाख्या कलकत्तानगरे मुद्रिता । केशवद्विवेदिना (1949 A. D.) कृता जागदीशी सामान्यलक्षणव्याख्या नारायण्याख्या वाराणस्यां मुद्रिता । मधुसूदन-भट्टाचार्येण (1956 A. D.) कृता सुषमाख्या जागदीशीपक्षताव्याख्या कलकत्ता-नगरे मुद्रिता ।

एवमाधुनिकेन वामाचरणभट्टाचार्यशिष्येण शिवदत्तमिश्रेण कृता गङ्गाख्या जागदीशीव्याख्या यस्याः व्याप्तिपञ्चकसिम्हव्याघ्रलक्षणभागौ काशीसंस्कृतग्रन्थमालायां (K. S. S. 70) व्यधिकरणधर्मावच्छिन्नाभावप्रकरणव्याख्या (K. S. S. 89) अवच्छेदकतानिरुक्तिभागव्याख्या (K. S. S. 94) सिद्धान्तलक्षणभागव्याख्या (K. S. S. 101) मुद्रिता विद्यन्ते । काशिकानन्दस्वामिना कृता जागदीशीसामान्य-लक्षणव्याख्या वामाचरणभट्टाचार्यकृता मनोरमाख्या जागदीशीव्याप्तिपञ्चक-सिम्ह-व्याघ्रलक्षण सिद्धान्त-लक्षणव्याख्याश्च वाराणस्यां मुद्रिताः । रत्नमालाख्या अज्ञातकर्तृनामधेया काचन जागदीशी टिप्पणी अडयार पुस्तकालये लभ्यते ।

एवं कालीशङ्करेण वामाचरणभट्टाचार्येण च कृतानि क्रोडपत्राणि सन्ति । वाराणसी मैसूरपुस्तकालयेषु लभ्यन्ते । तेषु कालीशङ्करीयं क्रोडपत्रं क्रोडपत्रसङ्ग्रहे (Ch. S. S. 25 vol. I) मुद्रितम् ।

## दीधितिव्याख्यापरम्परा III

तत्वचिन्तामणिः

दीधिति

जगदीशी (प्रकाशिका) परम्परा



**गूढार्थप्रकाशः—भवानन्दी**

रघुनाथ कृष्णदास मथुरानाथशिष्येण आलोकसारमञ्जर्यादिकर्त्रा भवानन्देन कृता काचन दीधितिव्याख्या गूढार्थप्रकाशिकाख्या भवानन्दीति प्रसिद्धा मुद्रितेति पूर्वमस्माभिर्वर्णिता (P. 56)। व्याख्येयं मणिदीधिगतानां गूढार्थानां प्रकाशनार्थमेवेति—

नमस्कृत्य गुरून् सर्वान् निगूढं मणिदीधितौ
श्रीभवानन्दसिद्धान्तवागीशेन प्रकाश्यते ॥ इति ग्रन्थकृतैवोक्तम्।

अस्या व्याख्याः—

मुकुन्दपुत्रेण महाराष्ट्रजेन काशीवासिना शितिकण्ठशिष्येण शिवभक्तेन सिद्धेश्वर्युपासकेन षट्शास्त्रतत्त्वदर्शिना लौगाक्षिभास्करीयपदार्थप्रकाशिकाव्याख्या—न्यायकौस्तुभ–ईश्वरवाद–सादृश्यवादादिकर्त्रा महादेवपुतनङ्करेण (1750 A. D.) दीधितिग्रन्थस्य निर्दुष्टतासम्पादनार्थम्, संक्षेपेण दीधित्यर्थप्रतिपादनार्थञ्च कृता काचन व्याख्या सर्वोपकारिणीत्याख्या अमुद्रिता अडयार - मद्रास - तिरुवनन्तपुर लन्दन - महीशूर - बरोडा - गङ्गनाथझा - पुस्तकालयेषु लभ्यते। व्याख्येयं

अनालोच्य सिद्धान्तवागीशवाण्याम्
वृथासूयितैः पण्डितैर्गौडजातैः।
यदुद्भावितं दूषणाभासवृन्दम्
तदुद्धारणार्थो ममोद्योग एषः ॥ इति वदन्तीयं व्याख्या भवानन्दीं निर्दुष्टां साधयति।

वज्रटङ्कशास्त्रिणा (1800 A. D) कृता काचन प्रकाशिकाख्या व्याख्या अपूर्णा अमुद्रिता च बरोडा–मद्रास–अडयारपुस्तकालयेषु लभ्यते यस्यां—

सम्प्रदायानुसारेण विद्वद्धृदयरञ्जिनी।
क्रियते वज्रटङ्केन भवानन्दप्रकाशिका ॥ इति वदन् व्याख्याता स्वव्याख्यायास्सम्प्रदायानुसारितां प्रदर्शयन् क्वचित् क्वचित् भवानन्दीयव्याख्यामेव दूषयति। एवं भारद्वाजगोत्रजेन बालकृष्णभट्टपौत्रेण सिद्धान्तमुक्तावलीव्याख्यातुर्महादेवभट्टपुत्रेण दिनकरभट्टेन (1800 A. D.) कृता काचन भवानन्दीव्याख्या प्रकाशाख्या दिनकरीयेति प्रसिद्धा वाराणसी मद्रपुरी - अडयार - तञ्जपुर पुस्तकालयेष्वमुद्रिता

विद्यते । कृष्णमित्राचार्यकृता प्रदीपाख्या औधसूच्याम्, गुरुपण्डितीयेति प्रसिद्धा गुरुपण्डितकृता काचन व्याख्या तञ्जपुरपुस्तकालये च लभ्यते । एवं विश्वनाथपुत्रेण वीरेश्वरेण कृता न्यायसिद्धान्तज्योत्स्नाख्या काचन भवानन्दीव्याख्या बरोडा-पुस्तकालये अमुद्रिता दृश्यते ।




**माथुरीव्याख्याः**

श्रीरामतर्कालङ्कारपुत्रेण रघुनाथशिरोमणेः पितुश्च अधीतशास्त्रेण मथुरानाथ-तर्कवागीशेन कृता काचन रहस्याख्या माथुरी फक्किकेति प्रसिद्धा तत्त्वचिन्ता-मणिव्याख्या पूर्वमस्माभिरुपवर्णिता (P. No. 46) या मण्यर्थावबोधने बहूपकरो-तीति च । अस्या व्याख्या :—

विष्णुभट्टपुत्रेण पटवर्धनवंशजेन गदाधरभट्टाचार्यभ्रातुष्पुत्रेण शिष्येण च कृष्णभट्टेन कृता काचन माथुरीटीका अमुद्रिता बम्बई सूच्यां दृश्यते । आधु-निकेन वामाचरणभट्टाचार्येण (1881-1961 A. D) कृता विवृत्याख्या माथुरी-व्याख्या भागशो वाराणस्यां मुद्रिता । एवं वामाचरण भट्टाचार्यशिष्येण शिवदत्त-मिश्रेण (1800 A. D.) रचिता काचन व्याप्तिपञ्चकसिंहव्याघ्रलक्षणटीका गङ्गा-निर्झरिणी नाम्नी वाराणस्यां मुद्रिता (K. S. S. 64) । एवं उदयनाचार्यकृत-लक्षणावलीव्याख्याप्रकाशकर्तुर्विश्वनाथझापण्डितस्या गुरुणा मैथिलेन गोलोकनाथो-पाध्यायेन (1900 A. D.) कृता काचन माथुरीव्याख्या न्यायरत्नाभिधा अमु-द्रिता अलहाबाद-मद्रासपुस्तकालययोर्लभ्यते । एवमेव आधुनिकैः उमानाथपण्डित-जीवानन्दविद्यासागर-हरिरामशुक्लैः कृताः माथुरीपञ्चलक्षणीव्याख्या व्याप्तिचन्द्रिका

ख्या फक्किकाख्या व्याख्या सिंहव्याघ्रलक्षणव्याख्या च यथाक्रमं वाराणस्यां (K. S. S. 78) कलकत्तायाञ्च मुद्रिताः । कालीशङ्करभट्टकृतं माथुरीक्रोडपत्रञ्च वाराणस्यां मुद्रितम् (Ch. S. S 25) ।

**प्रकाशव्याख्याः**

पक्षधरशिष्येण देवदत्तरेणुकादेव्योः पुत्रेण रुचिदत्तमिश्रेण (1600 A. D.) कृता काचन तत्त्वचिन्तामणिव्याख्या प्रकाशाख्या पूर्वमस्माभिः (P. No. 46) निर्दिष्टा । व्याख्यैषा आत्मतत्त्वविवेक - किरणावली - तात्पर्यटीका - द्रव्यप्रकाश-लीलावतीप्रभृतीन् ग्रन्थान् वर्धमानोपाध्याय - भट्टभास्कर - मिश्र - जयदेवादीन् ग्रन्थ-कारांश्च निर्दिशति । पक्षधरशिष्योऽपि रुचिदत्तः स्वप्रकाशे आलोकमतं क्वचित् क्वचित् दूषयति । उपाध्यायादिमतविमर्शनपूर्वकं बहुषु स्थलेषु स्वतन्त्रविचारः विद्वत्तापूर्णैर्मितैर्वाक्यैः कृता विद्यन्ते । अस्य ग्रन्थस्य शब्दखण्डः पण्डितग्रन्थमालायां वाराणस्यां, प्रत्यक्षखण्डः तिरुपति केन्द्रीयविद्यालये च मुद्रितौ । अस्या व्याख्याः—

यदन्तेवासिपञ्चास्यैः निरस्ता भेदिवारणाः ।
तं नौमि नरसिम्हाख्यं यतीन्द्रं परमं गुरुम् ॥

श्रीमद्वेङ्कटनाथाख्यान् वेलङ्गुडिनिवासिनः । इति नृसिम्हाश्रमिण वेङ्कटनाथञ्च नमस्कुर्वता नृसिम्हाश्रमिप्रशिष्येण वेङ्कटनाथपुत्रेण रामकृष्णदीक्षितपित्रा त्रिवेदी-नारायणभ्रात्रा कौण्डिन्यगोत्रजेन ऋग्वेदिना चोलदेशस्थकण्डरमाणिक्यग्रामवासिना अद्वैतवेदान्तपरिभाषापाञ्चपादिकाव्याख्या - पदयोजनिकाकर्त्रा धर्मराजाध्वरिणा सप्त-दशशतकीयेन (1550–1650 A. D.) कृता काचन **तर्कचूडामणिर्नाम** तत्त्व-चिन्तामणिप्रकाशव्याख्या अनुमानादिशब्दान्तपरिच्छेदव्याख्या अमुद्रिता तञ्जपुर तिरुवनन्तपुर मद्रास - अडयार पुस्तकालयेषु लभ्यते ।

एवं वेङ्कटनाथपौत्रेण धर्मराजाध्वरिपुत्रेण त्रिवेदीनारायणस्य भ्रातुष्पुत्रेण कौण्डिन्यगोत्रजेन ऋग्वेदाध्यायिना चोलदेशीयकण्डरमाणिक्यग्रामवासिना पितुरधी-तशास्त्रेण वेदान्तपरिभाषाव्याख्या - शिखामणि ; विशिष्टाद्वैतभञ्जन - वेदान्तसार व्याख्या - मीमांसान्यायदर्पणकर्त्रा रामकृष्णदीक्षितेन (1625–1700 A. D.) कृता काचन रुचिदत्तीयप्रकाशव्याख्या न्यायशिखामण्याख्या प्रत्यक्षखण्डस्य व्याख्या तिरुपतिकेन्द्रीयविद्यालये मुद्रिता ।

एवं कौण्डिन्यगोत्रजेन त्रिवेदीनारायणदीक्षितपुत्रेण धर्मराजाध्वरिणः भ्रातृपुत्रेण ऋक्शाखाध्यायिना चोलदेशीयकण्डरमाणिक्कग्रामवासिना स्वपितृव्यात्प्राप्तविद्येन वेदान्तपरिभाषाव्याख्याप्रकाशिकाकर्त्रा पेत्तादीक्षितेन (1625–1725 A.D.) कृता काचन रुचिदत्तप्रकाशव्याख्या प्रकाशसाराख्या मद्रपुरी पुस्तकालये अमुद्रिता लभ्यते ।

वाघूलगोत्रजेन रामभद्रमखिशिष्येण रामभद्रमखिस्वसृपुत्रेण कण्डरमाणिक्कग्रामवासिना परिभाषासंग्रह–ब्रह्मसूत्रवृत्तिकर्त्रा वैद्यनाथदीक्षितेन कृता रुचिदत्तीय प्रत्यक्षानुमानप्रकाशव्याख्या काचन अमुद्रिता तञ्जपुर अडयार मद्रास तिरुवनन्तपुरपुस्तकालयेषु लभ्यते । एवमेव गौतमगोत्रजेन वैद्यनाथदीक्षितशिष्येण तार्क्ष्यनारायणेन वैद्यनाथदीक्षितेन अव्याख्यातस्य रुचिदत्तीयप्रकाशशब्दखण्डस्य व्याख्या कृता या अमुद्रिता तञ्जपुर पुस्तकालये लभ्यते । एवं आन्ध्रदेशजेन अक्कयसूरिमातुलेन यल्लयार्येणारब्धा यल्लायार्यपुत्रेण विश्वनाथेन समापिता च प्रकाशव्याख्या न्यायपारिजाताख्या बहूनां भागानां वादानाञ्च अमुद्रिता अडयार-मद्रास मैसूर लन्दनपुस्तकालयेषु लभ्यते ।




## न्यायकौस्तुभः

तत्त्वचिन्तामण्युपन्यस्तान् मङ्गलवादारब्धान् मिश्रदीधितिभवानन्दादिव्याख्यासारसहितान् विषयतावादान्तान् विस्तृतान् अर्थान् संगृह्य मतान्तरखण्डन-

मण्डनपूर्वकं विशदयत्ययं ग्रन्थः । केवलं प्रत्यक्षभागः प्रकाशितः (S. B. T. No. 33)। अन्ये भागा अमुद्रिता असम्पूर्णाश्च लभ्यन्ते । अनुमानभागस्तु नैव संक्षिप्त इति भाति। शब्दखण्डस्तु अडयारमद्रासतिरुवनन्तपुरबरोडा वाराणसी-पुस्तकालयेषु लभ्यते । अस्य कर्ता मुकुन्दपण्डितपुत्रः शितिकण्ठशिष्यः महादेव-पुणतामकर (1695 A. D.) इति ज्ञायते ।

न्यायशास्त्रमहासागरेऽवगाहनासमर्थानां व्युत्पन्नबुद्धीनां न्यायशास्त्रोक्तत-त्त्वानां सुखावगमाय शास्त्रार्थसङ्ग्राहकाः नूतनस्वतन्त्रविचारप्रधानाश्च संक्षिप्तशब्दा ये बहवो ग्रन्था उत्पन्नास्ते प्रकरणग्रन्था इति कथ्यन्ते । तेषु प्रथमपरिगणनार्ह—**न्यायसारः** ।

ग्रन्थेऽस्मिन् प्रमाणभेदनिरूपणा न्तरं प्रमाणेन प्रमातव्यं प्रमेयम्, प्रमेय-ज्ञानफलम्, निःश्रेयसमिति प्रतिपादितम् । प्रमाणभेदस्यानुमानस्य प्रस्तावे अवयवा हेत्वाभासाः, न्यायस्य कथाप्रवृत्तिहेतुत्वप्रसंगे कथाः, छलजातिनिग्रहस्थानानि च प्रतिपादितानि । न्यायसूत्रोक्तानि द्वादशविधानि प्रमेयाणि ग्रन्थेऽस्मिन् हेयम्, हेयनिर्वर्तकम्, हानम्, हानोपाय इति चतुर्धा वर्णितानि । न्यायसूत्रे प्रत्यक्षानु-मानोपमानशब्दाः प्रमाणानि इति चतुर्धा विभक्तनि प्रमाणानि न्यायसारे उपमानस्य शब्देऽन्तर्भावं व्यवस्थाप्य प्रत्यक्षानुमानशब्दा इति त्रीण्येव प्रमाणानि इति प्रति-पादितम् । नित्यसंवेद्येन सुखेन विशिष्टा आत्यन्तिकी दुःखनिवृत्तिरेव मोक्ष इति प्रतिपादितम् । आत्मज्ञानं ईश्वरनाश्च मिथ्याज्ञानोन्मूलनद्वारा मोक्षहेतुरिति प्राचीनो नैय्यायिकसिद्धान्तः । परं न्यायसारे अपरात्मतत्त्वज्ञानं परलोकसद्भावेन परलोकप्रवृत्युपयोगित्वात् अधर्मक्षयहेतुत्वाच्च निःश्रेयसाङ्गम्, परमात्मतत्त्वज्ञानं परमात्मात्मोपसनाङ्गत्वेन अपवर्गसाधनमिति प्रतिपादितम् । सव्यभिचार-विरुद्ध-प्रकरणसम-साध्यसम-कालातीत अनध्यवसिता इति षट् हेत्वाभासा वर्णिताः । न्याय-दर्शनप्रमेयैस्सह योगदर्शनप्रमेया केचन प्रकारान्तरेण निरूपिता विद्यन्ते । भूषण इति न्यायाचार्यः, भूषणमिति व्याख्या चात्र निर्दिष्टा । अस्य रचयिता सूत्रकार-कल्पः काश्मीराभिजनः शिवभक्तः भासर्वज्ञः नवमदशमशतकमध्यवर्ती (900—1000 A. D.) ति ज्ञायते । अस्य न्यायसारस्य अष्टादश व्याख्यानान्यासन्निति प्रसिद्धिः । परन्तु तेषु कानिचनैव विश्वासार्हाणि भवन्ति ।

न्यायसारव्याख्या — **न्यायभूषणम्**

न्यायसाराभिधे तर्के टीका अष्टादश स्फुटाः ।
न्यायभूषणनाम्नी तु टीका तासु प्रसिद्धिभाक् ॥ इति

सद्दर्शनसमुच्चये दर्शनात् न्यायभूषणप्रसिद्धिर्ज्ञातुं पार्यते । न्यायसारव्याख्यामिषेण न्यायसदर्थसंग्रहं कुर्वन्नयं व्याख्याकारः न केवलं परान् पराकरोति, परं सगोत्रानपि सूत्रकारान् विगणयति वदति च—"न खलु वै सूत्रकारनियोगभयात् पदार्थाः स्वधर्मं हातुमर्हन्ति । यदि चाविचारितं सूत्रकारवचः प्रमाणम्, परीक्षासूत्राणां तर्हि वैयर्थ्यं स्यात्" इति । बौद्धसिद्धान्तदूषणाय धृतावतारोऽयमित्यालक्ष्यते । बहुत्र स्थले बौद्धान् प्रकटं कटाक्षयति बहुधा परिहसति च । **विश्वरूपाचार्यः** तस्य **न्यायभाष्यटीकाः अध्ययनपादः** तस्य **न्यायवार्तिकटीका** इति प्राचीनान् नाममात्रावशिष्टान् न्यायाचार्यान् तेषां ग्रन्थांश्च निर्दिशति । **तमोऽरिशब्देन** उद्योतकराचार्यम्, अन्यं कञ्चन **तोसला**चार्यम्, सांख्याचार्यं **माधवञ्च** । निर्दिशति । वैशेषिक-मीमांसक - वेदान्ति - शैव - सौगत - जैन - चार्वाकानां सिद्धान्ताः परिशीलिताः खण्डिताश्च । मुद्रितेयं व्याख्या षड्दर्शन प्रकाशनग्रन्थमालायां (No. 1) वाराणस्याम् । अस्या अपि **भूषणभूषण**मिति व्याख्या वासुदेवसार्वभौमकृतेति ज्ञायते । परं न क्वापि लक्ष्यते ।

अस्य कर्ता न्यायसारकारः भासर्वज्ञ एव । भासर्वज्ञेन न्यायभूषणस्य संग्रहवार्तिकमिति नामान्तरं, न्यायसारस्य न्यायार्थसंग्रहः, न्यायसंग्रह, संग्रह इति नामान्तराणि निर्दिश्यन्ते ।

न्यायभूषणव्याख्या — **भूषणभूषणम्**

व्याख्याया अस्याः प्राप्तिस्थानादि न लक्ष्यते । परं न्यायसारव्याख्यायां पदपञ्चिकायां (P. 81 TSS 109) निर्दिष्टा । पदपञ्चिकाकारवासुदेवसार्वभौम एवास्य अपि कर्तेति ज्ञायते ।

न्यायभूषणव्याख्या — **भूषणप्रकाशः**

अस्या अपि प्राप्तिस्थानादि न दृश्यते । परन्तु न्यायरत्नव्याख्यायां नृसिम्हयज्वकृतायां द्युतिमालिकायां (P. No 54 MGOMLS. 104) निर्दिष्टा । अस्य कर्ता गदाधरमिश्रनामा इति ज्ञायते ।

न्यायसारव्याख्या — न्यायमुक्तावली

सौगतमतखण्डनपरा भूषणकारस्य भासर्वज्ञस्य सिद्धान्तस्थापनपरा चेयं व्याख्या मद्रासनगरे (MGOMLS. No. 167) मुद्रिता । व्याख्यायामस्यां विपर्ययप्रसङ्गे सर्वे ख्यातिवादाः विशदीकृताः दूषिताश्च । अन्यथाख्यातिवादः स्थापितः । महाव्रतः, तिमिरारिः, शालिकनाथ इत्येते निर्दिश्यन्ते ।

अस्या व्याख्यायाः कर्ता याज्ञवल्क्यस्मृतिव्याख्यानिबन्धकर्ता उत्तरकोङ्कणभूपतिरपरार्कदेव इति प्रसिद्धः अपरादित्य द्वादशशतकीय (1200 A.D) इति ज्ञायते ।

न्यायसारव्याख्या — विचारः

सारङ्गभट्टपुत्रेण वादीन्द्रशिष्येण राघवभट्टेन (1252 A.D.) कृतेयं व्याख्य अमुद्रिता वाराणसीपुस्तकालये लन्दननगरपुस्तकालये च लभ्यते ।

न्यायासारव्याख्या — व्याख्यारत्नम् ।

अमुद्रितेयं व्याख्या तिरुवनन्तपुर - अडयारपुस्तकालययोर्लभ्यते । अस्य रचयिता महादेवाश्रम–श्वेतगिरि — अभयानन्दशिष्यः अद्वैते न्यायकल्पलतिका-टीकारत्न-न्यायचन्द्रिकाग्रन्थानां कर्ता आनन्दपूर्णविद्यासागरमुनिस्त्रयोदशशतकीय (1275-1350 A.D) इति ज्ञायते ।

न्यायसारव्याख्या — न्यायकलानिधिः

महादेवाश्रमशिष्येण आनन्दानुभवेन त्रयोदशशतकीयेन (1280 A.D) कृतेयं व्याख्या मद्रपुर्यां (MGOMLS. No. 167) मुद्रिता । न्यायदीपावलि-इष्टसिद्धिविवरणपदार्थतत्वनिर्णयकर्ता अद्वैती आनन्दनुभवो वायमन्यो वेति न निश्चेतुं शक्यते ।

न्यायसारव्याख्या — न्यायतात्पर्यदीपिका

श्वेताम्बरसम्प्रदायागतेन महेन्द्रसूरिशिष्येण कुमारपालचरितकर्त्रा जैनेन जयसिंहसूरिणा कृतेयं व्याख्या आसियाटिक सोसाइटि कल्कत्तानगरे (B. I. 188) मुद्रिता ।

न्यायसारव्याख्या—पदमञ्चिका

न्यायभूषणमहाम्बुधौ बुधा येऽलमाविचरितुं न जानते ।
तत्कृते कृतिरियं मया कृता न्यायसारपदपञ्चिकाभिधा ॥ इति

वदन्नयं ग्रन्थः भूषणव्याख्याया विस्तृतत्वं स्वस्य तदर्थसंग्राहकत्वञ्च वदति । नव्यनैय्यायिकशैलीं अनास्वाद्य मधुरैश्शब्दैर्वाक्यविन्यासैश्च मूलोक्तमर्थं प्रतिपादयन्नयं ग्रन्थः तिरुवनन्तपुरे (TSS 109) पूनानगरे च मुद्रितः ।

अस्य कर्ता सूर्यसूरीन्द्रपुत्रः काष्मीरकः वासुदेवसूरी षोडशशतकीय (1510 A. D.) इति ज्ञायते । एवं जयतीर्थकृता न्यायसारटीकासीदिति किंवदन्ती श्रूयते । परं प्राप्तिस्थानादि न श्रूयते । रत्नपुरीभट्टारककृता शिशुहितैषिण्याख्या काचन न्यायसारव्याख्या भाण्डारागारे पूनानगरे तिरुवनन्तपुरे च लभ्यते । एवं विजयसिंहगणिना कृता काचन न्यायसाटीका किरहार्नसूच्यामेव दृश्यते नान्यत्र ।




## न्यायसिद्धान्तदीपः

न्यायनय-न्यायरत्न न्यायशास्त्रार्थेति नामान्तराणि दृश्यन्ते । सूत्रभाष्यटीकादिगतान् अर्थान् मङ्गलवादादारब्धान् ईश्वरवादान्तान् षड्विंशतिवादांश्च वर्णयत्ययं ग्रन्थः । प्रकरणग्रन्थेऽस्मिन् न्यायविषयास्सर्वे न वर्णिताः परन्तु केचन विशिष्टा उत्कृष्टाश्च विषया एव विशदीकृताः । ग्रन्थारम्भे 'ध्वंसित नरसिद्धान्तध्वान्तं गौतममतैकसिद्धान्तम् " इति वदन्नयं ग्रन्थकारः युक्तियुक्तेभ्यः नरसिद्धान्तेभ्योऽपि आर्षस्य गौतमसिद्धान्तस्यैव उत्कर्षं सूचयन् स्वस्य न्यायसूत्रानुसारि सूचयति । क्वचित् मुद्रितपुस्तके "ध्वंसित पर सिद्धान्त" इति पाठोऽपि दृश्यते ।

तत्र गौतमोपरि उद्भावितानां दूषणानां दुष्टत्वम्, गौतमसिद्धान्तस्य अदुष्टत्ववर्णनञ्च ग्रन्थस्य विषय इति सूचितं भवति। मुद्रितश्चायं ग्रन्थः पण्डितनूतनग्रन्थमालायां वाराणस्यां (P. N. S. 4) लालभाईदलपतभाईभारतीयसंस्कृतिविद्यामन्दिर ग्रन्थमालायां अहमदाबादनगरे (L. B. S. No. 56) च।

अस्य रचयिता धरणीधराचार्यपुत्रः महेश्वरपण्डितपौत्रः मणिधरभ्राता न्यायवैशेषिकप्रमाणप्रमेयविशेषज्ञः प्रकाण्डपण्डितः प्राप्तमहोपाध्यायबिरुदः मथिलश्शशधराचार्यः द्वादशशकीय (1125-1200 A.D.) इति ज्ञायते। अस्य भ्राता मणिधर अयमप्युभौ स्वीयया प्रतिभया वैदुष्येण पण्डितगोष्ठीषु पण्डितान् प्रतिवादिनश्च सिम्हव्याघ्राविव आक्रामत इति तौ सिम्हव्याघ्राविति प्रसिद्धौ। एतयोरेव व्याप्तिलक्षणे गङ्गेशोपाध्यायेन तत्त्वचिन्तामणौ खण्डित इति कर्णपरम्परागता प्रसिद्धिश्श्रूयते। अस्य व्याख्याः—

## न्यायसिद्धान्तदीपव्याख्या–गुणरत्नसूरिकृता

षड्दर्शनसमुच्चयटीकाकारेण तपागच्छपरम्परागतेन देवसुन्दरसूरिशिष्येण जैनाचार्येण गुणरत्नसूरिणा (1442 A. D.) कृतेयं व्याख्या विधिवादादारभ्य अर्थापत्तिवादपर्यन्तं मुद्रिता (L. D. S. 56)।

## न्यायसिद्धान्तदीपव्याख्या–पक्षधरमिश्रकृता

महादेवमिश्रपुत्रेण हरिमिश्रशिष्येण मैथिलेन तत्त्वचिन्तामण्यालोककर्त्रा पक्षधरमिश्रेण (1500 A. D.) कृता काचन व्याख्या अमुद्रिता वाराणसीसरस्वती भवनपुस्तकालये लभ्यते।

## न्यायसिद्धान्तदीपव्याख्या–दीपप्रभा

प्रतापराजाश्रितेन शार्ङ्गधरशिष्येण भिषग्राजइत्युपाधिधारिणा शेषानन्ताचार्येण (1500 A. D.) कृता व्याख्येयं पण्डितनवीनग्रन्थमालायां (P. N. S. 4) मुद्रिता।

## न्यायसिद्धान्तदीपव्याख्या न्यायरत्नप्रकाशः

अमुद्रितेयं व्याख्या मद्रास तञ्जपुरपुस्तकालययोर्लभ्यते। वेदान्तपरिभाषायां "टीकाशशधरस्यापि बालव्युत्पत्तिदायिनी"ति निर्दिष्टेयं व्याख्या कौण्डिन्यगात्रजेन

कण्डरमाणिक्यग्रामवासिना पेद्दादीक्षितगुरुणा नृसिम्हाश्रमप्रशिष्येण वेङ्कटनाथ-पुत्रेण वेङ्कटनाथशिष्येण त्रिवेदीनारायणानुजेन ऋग्वेदिना अद्वैतवेदान्तपरिभाषा-तत्वचिन्तामणिव्याख्यादिकर्त्रा रामकृष्णदीक्षितपित्रा धर्मराजाध्वरिणा (1550-1650 A.D.) कृतेति ज्ञायते ।

न्यायसिद्धान्तदीपव्याख्या चन्द्रिका

पूर्वाश्रमे कालहस्तीशयज्ञाम्बयोः पुत्रेण अद्वैतवेदान्तिना रङ्गनाथाभिधेन, स्वयम्प्रकाशानन्दसरस्वत्याः प्राप्तसंन्यासेन शिष्येण अद्वैतरत्नकोश व्याख्या-भावप्रकाशिका-तर्कभाषाव्याख्याकर्त्रा आन्ध्रदेशजेन अखण्डानन्दसरस्वत्या (1600-1700 A.D.) कृतेयं व्याख्या अमुद्रिता मैसूरपुस्तकालये लभ्यते ।

न्यायसिद्धान्तदीपव्याख्या — प्रकाशः

गोविन्ददीक्षितपुत्रेण यज्ञनारायणदीक्षितेन (1600–1700 A. D.) कृतेयं व्याख्या ज्ञानवादान्ता अमुद्रिता मैसूरसूच्यां दृश्यते ।

न्यायसिद्धान्तदीपव्याख्या—प्रभा

अनन्तार्यवंशजेन देवराजपण्डितेन रचितेयं व्याख्या न्यायशास्त्रार्थदीपप्रभा-नाम्नी अमुद्रिता मद्रासपुस्तकालये लभ्यते एवं अन्या काचन विश्वनाथपण्डितकृता व्याख्यापि बरोडापुस्तकालये अपूर्णा लभ्यते ।



न्यायदर्शनसाहित्ये तावत् न्यायसारात् न्यायसिद्धान्तदीपाच्च पूर्वं पश्चाच्च बहवः प्रकरणग्रन्था उद्भूताः। तेषु केचन न केवलं न्यादर्शनोक्तान् षोडशपदार्थान् वर्णयन्ति परन्तु न्यायायदर्शनोक्ते यस्मिन् कस्मिन् पदार्थे वैशेषिकोक्तान् षट् पदार्थान् अन्तर्भावयन्ति। अन्ये केचन ग्रन्थाः वैषिकोक्तान् षट् पदार्थानेव न केवलं वर्णयन्ति परन्तु न्यायदर्शनोक्तान् षोडश पदार्थान् वैशेषिकोक्ते पदार्थे यस्मिन् कस्मिन्नपि अन्तर्भावयन्ति। एते ग्रन्थाः न्यायवैशेषिकग्रन्था इति कथ्यन्ते। तस्मात् तेषां वर्णनात् पूर्वं वैशेषिकदर्शनपरिचय अवश्यकर्तव्यस्सञ्जातः।

## वैशेषिकदर्शनम्

दर्शनानि तावत् संसाराग्निना पच्यमानानां चेतनानां अनुग्रहकृते परमकारुणिकैः परमर्षिभिः प्रवर्तितानि अपुनरावृत्तिलक्षणनिःश्रेयसोपायप्रतिपादकानि इति विश्वासः। तेषु दर्शनेषु अन्यतमं वैशेषिकदर्शनमपि।

वेदान्तेषु निःश्रेयससाधनं आत्मतत्त्वज्ञानमिति "आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति वाक्यैः प्रतिपादितम्। ज्ञेयश्चात्मा जीवपरभेदभिन्नः। तद्विषयश्च ज्ञानं निःश्रेयससाधनं वैलक्षण्यविषयमिति "द्वे ब्रह्मणी वेदितव्ये" भोक्ता भोग्यं प्रेरितारञ्च मत्वा "पृथगात्मानं प्रेरितारञ्च मत्वा" "जुष्टस्ततस्तेनामृतत्वमेति" इत्यादिभिर्वचनैः प्रतिपादितम्। तथा च देहात्मभ्रमादिलक्षणमिथ्याज्ञानमूलबन्धात्यन्तिकनिवृत्तिरूपनिःश्रेयसाधनज्ञानविषयश्च ज्ञातृवैलक्षण्यं परमार्थ इति सिध्यति।

एवमपि तामसप्रकृतीनां असुराणां मोहनाय बृहस्पतिप्रभृतय आगमाप्रामाण्य शरीरचैतन्यादिवादान् प्रावर्तयन्। तेषु वादेषु निविष्टमानसाः वेदवैदिकविमतिशालिनो नास्तिका इति कथ्यन्ते स्म। सर्वेऽपि ते विलक्षणात्मविद्वेषिणः शरीरात्मचैतन्यादिवादान् आतिष्ठन्ते स्म।

तत्र शरीरात्मवादो यथा—यस्य सत्तया आहारनिद्राभयमैथुनादयो व्यवहाराः सिध्यन्ति यो हि इष्टानिष्टं जानाति तत्प्राप्तये परिहाराय च प्रयतते यस्मिंश्च सातिशया प्रीतिरुपलभ्यते यो हि सर्वदा सर्वैस्सर्वतः संरक्ष्यते यस्यास्तित्वमेव सुचिरं प्रार्थ्यते न नास्तित्वम्, यत्सुखाय तानाविधान्यप्यकार्याणि कर्माण्यनुष्ठीयन्ते, स

एव निःशेषाभिलाषास्पद आत्मा इत्यवश्यमूरीकर्तव्यम्। इत्थम्भूतश्च देह एवोपलभ्यते प्रत्यक्षेण, न तस्मादतिरिक्तः कोऽपि। कल्पनाधीनात्मसिद्धिवादेऽपि कल्पकाभिमतस्य ज्ञानादेः भूतपरिणतिभेदविश्रान्तस्य न विलक्षणात्मकल्पनापटुता इति भूतचैतन्यमेव समाश्रयणीयम्। विलक्षणात्मवादिभिरपि ज्ञानाद्युत्पत्त्यवच्छेदकदेशत्वं शरीरस्य स्वीकरणीयमेव। अन्यथा विलक्षणात्मनो नित्यत्वात् विभुत्वाच्च सर्वत्र ज्ञानादिकं जायतेति प्रश्ने निरुत्तरत्वापत्तिः। अतस्तस्यैव शरीरस्य सर्वमतसिद्धस्य ज्ञातृत्वम्। किञ्चाहं गौरः, स्थूलोऽहं गच्छामि इत्येवमासप्रयोगेषु गौरत्वादिधर्मोपेतो गमनादिक्रियायाः कर्ता च देह एवाहं प्रत्यये प्रथमतो भातीति सर्वप्रसिद्धम्। तस्मादहंप्रत्ययगम्यश्चातुर्भौतिको देह एवात्मा स एव च ज्ञानाश्रय इति।

एवं शरीरचैतन्यवादस्वीकारे सत्यपि देहे मृतशरीरेऽहंव्यवहाराभावात् चैतन्यादर्शनाच्च निद्रादिसमये लीनेष्विन्द्रियेषु तद्व्ययस्याप्यभावाच्च न देह इन्द्रियाणि वा आत्मा भवितुमर्हति। अपि तु देहादिभ्यो भिन्न एव। कः स इत्याकाङ्क्षायां यथा सत्यां मृदि घटस्योत्पत्तिरसत्यां च नेत्यन्वयव्यतिरेकाभ्यां मृत्तिका घटादेः कारणमिति निश्चीयते। तथा यस्य सत्तया जीवतीति व्यवहारो जायते नान्यथा स एव जीवनादिव्यवहारहेतुरात्मा इत्यास्थेयम्। एवमात्मा तु प्राण एवेति प्राणात्मवादः।

विद्यमानेष्वपि देहेन्द्रियप्राणेषु मनसः प्रणिधाने सत्येव ज्ञानसुखादेरुदयः प्रसिद्धः, अप्रणिधाने अप्रसिद्धः। विद्वदनुभवोऽप्येवं दृश्यते "अन्यत्रमना अभूवम्, नादर्शमन्यत्रमाना अभूवम् नाश्रौषमित्यादि। यः कर्ता स एव भोक्तेति प्रसिद्धिः। कर्ता च स एव यः क्रियायां स्वतन्त्रः तादृशं तु मन एव न देहादयः। ते तु मनोऽधीनाः मनसः इच्छायां प्रवर्तन्ते क्रियासु ते नान्यथा। एवं योऽहं घटमद्राक्षं सोऽहं इदानीं स्पृशामि इत्यबाधितप्रत्यभिज्ञाबलात् चाक्षुषस्पार्शनाश्रय एकोऽवगाह्यते। इन्द्रियात्मवादेऽपि चाक्षुषाश्रयत्वं चक्षुषः स्पार्शनाश्रयत्वं त्वच इत्येवमादि स्वक्रियते। अतस्तन्मते प्रत्यभिज्ञाविषयत्वमनुपपन्नमेव स्यादात्मनः अन्येनानुभूतस्यान्येन प्रत्यभिज्ञाप्यनुपपन्ना। चैत्रेणानुभूतस्य मैत्रेणानवमर्शनात्। अत एकमेव किञ्चित् नित्यमात्मवस्तु एषितव्यम्, येन प्रत्यभिज्ञोपपद्येत। अतस्सर्वग्रहणचतुरं किञ्चित् स्वीकर्तव्यम्। तदेव मनः इति मनआत्मवादः।

तत्र देहेन्द्रियप्राणमनआदीनां आत्मत्वाङ्गीकारे तेषां अनित्यतया कृतहान्यकृताभ्यागमादिदोषप्रसङ्गः। आत्मा तावन्मानसप्रत्यक्षगोचर इति सर्वानुभवसिद्धम्। मनआत्मवादस्वीकारे-मनसो नित्यत्वेऽपि ज्ञानाश्रयतया सिध्यतोऽपि मनसः परमाणुस्वरूपत्वेन देहव्यापिसुखाद्यनुपलब्धिप्रसङ्गात् न मनस आत्मत्वमिति दोषस्स्यात्। तदर्थं मनस देहसमपरिमाणत्वेऽङ्गीक्रियमाणेऽनित्यतया कृतहान्यादिदोषापत्तिः। ज्ञानमात्रस्य तु गुणत्वेन गुण्याश्रितत्वनियमात् अहं जानामीत्यनुभवाच्च नात्मत्वम् इति स्यात्। अतो देहादिविलक्षण आत्मा यावत् न स्वीक्रियते न तावत् आत्मतत्वं व्यवस्थितं भवति। श्रौतनिः श्रेयससाधनात्मत्वज्ञानं च निर्व्यूढं स्यादिति जानता **कणादमहर्षिणा** विलक्षणात्मप्रतिपादकं **वैशेषिकदर्शनं** द्रव्यादिपदार्थप्रस्थानं प्रवर्तितम्।

वैशेषिकमते च आत्मा ज्ञानाश्रयः स्वतो जडः सुखदुःखादिमत्वेन तद्धेतुविहितनिषिद्धक्रियाकर्तृत्वस्य अपरिहार्यत्वात् कर्ता च। स च नित्यः प्रतिशरीरं भिन्नः। स एवाहंप्रत्ययगोचरो, ज्ञानेच्छाप्रयत्नादयस्तु आत्मनो गुणाः। एवमचिद्रूपं कर्तारं भोक्तारञ्चात्मनं वैशेषिकाः कल्पयन्ति। वैशेषिकाणां मते आत्मन एव चैतन्यम् न शरीरस्य, शरीरकारणेषु परमाणुषु चैतन्ये मानाभावात्। द्रव्येषु आत्मानं अपि गणयन्ति। द्रव्येषु परिगणितात् आत्मशब्दात् परमात्मापि संगृह्यते। दर्शनान्तरवत् वैशेषिकाणामपि जीवात्मा ज्ञानस्वरूप एव न तु ज्ञानगुणकः। तथात्वेऽपि तस्य मनःसंयोगात् तत्तदर्थानुभावकं "गन्धमनुभवामि" "रसमनुभवामि" इत्याकारकं व्यवहारप्रयोजकं उत्पादविनाशशीलं यद् ज्ञानं तदपि गुणरूपेण तस्मिन्नभ्युपगम्यते। यथा च दर्शनान्तरेषु प्रत्यगात्मनः प्रकाशात्मकत्वे स्वीकृतेऽपि व्यवहाराय वृत्तिज्ञानस्वीकारः, तथैव वैशेषिका नैय्यायिकाश्च आत्मन्येव ज्ञानगुणमभ्युपगच्छन्ति। परमियान् भेदः—यथा च सांख्यादयः प्रत्यगात्मसन्निधानात् चेतनायमानायां बुद्धौ स्फटिकमणौ जपाकुसुमलौहित्यवत् ज्ञानोत्पादं स्वीकृत्य आत्मनि तदुपचारं वर्णयन्ति वैशेषिकाः पुनः न तथा वर्णयन्ति परन्तु आत्मसन्निधानेऽपि मनसस्तदाकारतापत्तिं अनङ्गीकृत्य तत्र तदुत्पत्तेरसम्भवात् मनस्संयोगविशिष्टे प्रत्यगात्मन्येव ज्ञानोत्पत्तिं वर्णयन्ति। मुक्तावस्थायान्तु मनसोऽभावात् तत्संयोगजानां गुणदोषाणामनुत्पत्तौ दुःखस्य अत्यन्तनिवृत्त्या शुद्धः स्वेनात्मना निःश्रेयसमधिगच्छति।

वैशेषिकमते परमात्मा ईश्वरापरसंज्ञः जीवात्मना सर्वथा भिन्नः। परमात्मा हि सर्वज्ञः विभुश्च। जीवात्मा तु पुनः संसारदशायां कायव्यूहादिबद्धः सुखदुःखाद्यनुभवोपेतो जन्मजरादिजटिलजाले पतितो भवति। परमार्थतस्तु आत्मा एक एव। सोऽयमात्मा अनादिमिथ्याज्ञानवासनया शरीरादिकम् एव आत्मानं मन्यमान अनुकूले रज्यति प्रवर्तते, प्रतिकूलं द्वेष्टि निवर्तते च। रज्यन् प्रवर्तमानश्शुभाशुभकर्माणि सञ्चिनोति सुखदुःखभाग् भवति च। परं यदा श्रवणमननादिभिः दृढभूमिं गतो भवति तदा तत्वज्ञानवासनया मिथ्याज्ञानवासना उपमृद्यते। उपमर्दितायाञ्च तस्यां रागद्वेषाद्यपायाददृष्टस्याभावे आत्मनः शरीरेण सह सम्बन्धो विच्छिन्नो भवति। एवञ्च जन्ममरणपरम्परायाः विच्छेदात् सकलदुःखेभ्यः सर्वदा मुक्तिर्भवति। अयमेव मोक्ष इति वैशेषिकदर्शने व्यपदिश्यते। "तदभावे संयोगाभावो अप्रादुर्भावश्चमोक्षः" वैशेषिकदर्शने (5-2-18 B. S. S.) दृश्यते। यावत् कर्मशेषो भवति तावत् तत्तत्कर्मफलानुभवाय जन्म आवश्यकं भवति। यदा सञ्चितस्य प्रारब्धस्य वा कर्मणः फलं अनुभूतं भवति, नूतनस्य कर्मणश्च उत्पत्तिर्न भवति तदा पुनर्जन्म नावश्यकं भवति। सम्यग्दर्शनात् प्रक्षीणे मोहे वीतरागः पुनर्भवहेतु कर्म कायवाङ्मनोभिर्न करोति इत्युत्तरस्यानुपचयः पूर्वोपचितस्य विपाक इति संवेदनक्षयः। एवं प्रसवहेतोरभावात् पतितेऽस्मिन् शरीरे पुनश्शरीरान्तरानुपपत्तेः प्रतिसन्धिरिति वात्स्यायनभाष्ये प्रतिपाद्यते। तथा च तत्वज्ञानानन्तरं मोहनाशः, मोहनाशे आसक्तिनाशः, अनासक्तत्वे कर्मण्यप्रवृत्तिः। एवञ्च पुनर्भवहेतूनां कायिकमानसिकवाचिककर्मणामभावः सिद्धः। कर्माभावे देहान्तरप्राप्तिरपि न भवति। तथा च आगामिशरीराद्यनुत्पातरूपदुःखध्वंस एव मोक्ष इति भवति। किञ्च न्यायमत इव वैशेषिकमतेऽपि मोक्षः सुखदुःखाभ्यां परः। अनयोर्मते सुखमपि एकप्रकारकं दुःखमेव। अतश्च दुःखस्यात्यन्तिकनिवृत्या साकं सुखस्यापि तादृशी निवृत्तिर्भवति। ततश्च मोक्षावस्थायां जीवस्य नापि सुखस्य नापि दुःखस्य वा अनुभवो विद्यते। अत एव तर्कभाषायां "एकविंशति भेदभिन्नस्य दुःखस्य आत्यन्तिकी निवृत्तिर्मोक्षः" शरीरम्, षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः, सुखं, दुखञ्च, एतेषां चरमो ध्वंसो मोक्ष इति वर्णितम्। अत्र "अशरीरं वावसन्तं न प्रियाप्रिये स्पृशत" इति छान्दोग्यश्रुतिमपि प्रमाणयन्ति। एवं सुखदुःखाभावात्मकस्य मोक्षस्य स्वीकारे मुक्ताः पाषाणसमाः जडाः चैतन्यशून्याश्च भवन्ति। तर्हि कथं तेषु दुःखनिवृत्तिव्यपदेश इति शङ्का भवति।

एतादृशः जडतुल्यो मोक्षो न प्रेक्षावत्प्रतिपिपित्सितो भवेत्। अत एवायं आभाणकः—

मुक्तये सर्वजीवानां यः शिलात्वं प्रयच्छति।
स एको गोतमः प्रोक्त उलूकश्च तथापरः॥

वरं वृन्दावनेऽरण्ये शृगालत्वं भजाम्यहम्।
न तु वैशेषिकीं मुक्तिं प्रार्थयामि कदाचन॥ इति

प्रसिद्धो भवति। तस्मादेव न्यायकन्दल्यां मोक्षस्वरूपमेवं वर्णितं दृश्यते–"विशेषगुणोच्छेदे हि सति आत्मनः स्वरूपेणावस्थानम" (p. 280 V. N. S. S. 7) इति। एवञ्च मोक्षो न संयोगात्मकः परन्तु वियोगात्मकः। बाधनालक्षणं दुःखम्। तदपवर्गो मोक्ष" इति न्यायसूत्रे "दग्धेन्धनानलवत् उपशमो मोक्ष" इति प्रशस्तपादभाष्ये (P. 144 B. S. S. 3.) च दृश्यते। तथा च मोक्षावस्थायां आत्मनो विशेषगुणैस्सह संयोगो नास्ति परन्तु वियोग एव। तथा च आत्मा स्वीयं शुद्धं स्वरूपं लभत इति यावत्। एतादृश शुद्धस्वरूपावस्थितिरेव मोक्ष इति वैशेषिकमतमिति वक्तव्यम्। अयं भावः। तरति शोकमात्मवित् इति श्रुत्या आत्मज्ञानस्य शोकनिवृत्तिलक्षणमोक्षोपयोगित्वं सिद्धम्। तच्चात्मज्ञानं साक्षात्काररूपम्, आत्मा-वाऽरे द्रष्टव्य इति वाक्यस्वारस्यात्। तच्च मननसाध्यम् मन्तव्य इति वाक्यात्। मननं च आत्मविशेष्यकेतरभिन्नप्रकारकानुमितिरूपं ज्ञानम्। इतरभिन्नत्वञ्च इतरप्रतियोगिकान्योन्याभावरूपं इतरलक्षणप्रतियोगिज्ञानाधीनम्। अभावज्ञानस्य प्रतियोगिज्ञानसाध्यत्वनियमात्। तथा च पृथिवीजलादीनां सर्वेषां प्रतियोगिकोटिप्रविष्टतया सकलपदार्थज्ञानं मोक्षोपयोगीति वक्तव्यम्। इयांस्तु विशेषः—आत्मज्ञानं साक्षादेव मोक्षोपयोगि, पृथिव्यादिज्ञानन्तु आत्मज्ञानद्वारेति।

एतादृशस्य सिद्धान्तस्य वैशेषिकसूत्राणाञ्च निर्माता काश्यप इति प्रसिद्धः। कश्यपमुनिपुत्रः काश्यपगोत्रजो वा इति वक्तुं शक्यते। उदयनाचार्येण किरणावल्यां विरुद्धासिद्धसन्दिग्धं अलिङ्गं काश्यपोऽब्रवीत् इति वैशेषिकसूत्राणां कर्ता काश्यप इति निर्दिश्यते। कणादः काश्यपगोत्रजः प्रभासक्षेत्रवासिनस्सोमशर्मणश्शिष्यः शिवस्यावतारभूत उलूकपुत्रश्चेति वायुपुराणे च निर्दिश्यते। अयं कणभक्षणेन तपश्चरणात् उञ्छेन वर्तनाच्च कणाद इति प्रसिद्ध इति कणान् अत्तीति कणादस्तमिति विशिष्टाहारनिमित्तसंज्ञोपदर्शनेन" इति व्योमशिवाचार्येण व्योम-

वत्याम्, कापोतीं वृत्तिमनुतिष्ठतः रथ्यानिपतितांस्तण्डुलकणानादाय प्रत्यहं कृताहारनिमित्ता संज्ञा इति न्यायकन्दल्याञ्च निर्देशाच्च ज्ञायते। अयमुलूक औलूक्य इति च प्रसिद्धः। तपस्विने कणादमुनये स्वयं परमेश्वर उलूकरूपधारी प्रत्यक्षीभूय पदार्थषट्कं उपपदिदेश। तदनु स महर्षिस्सूत्राणि वैशेषिकाणि चकार। तेन तद्दर्शनस्य औलूक्यदर्शनमिति नामन्तरमिति सम्प्रदायः। दिने ग्रन्थं लिखन् रात्रौ उलूकवत् जीविकोपापार्जनं कुर्वन्नयमेव उलूक इति प्रसिद्ध इति केचन।

सोऽयमुलूक महाभारते भीष्मस्तवराजे उल्लिखित इति महाभारतादपि प्राचीनः। वैशेषिकादिवत् न वयं षट्पदार्थवादिन इति सांख्यैः निर्देशात् सांख्यदर्शनात् प्राचीन एवं महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्यां इति ब्रह्मसूत्रपरिशीलने वेदान्तदर्शनादपि वैशेषिकदर्शनं प्राचीनम्। काणाददर्शनप्रसिद्धश्शब्दानामुत्पत्तिविनाशवत्त्वसिद्धान्तः जैमिनिना कर्मैके तत्रदर्शनात् इत्यादिसूत्रः खण्डित इति मीमांसादर्शनादपि काणादः प्राचीनः। वैशेषिकदर्शनोपरि रावणेन भाष्यं कृतमिति प्रसिध्या लङ्कापुरीस्थरावणादपि प्राचीनः। काणादेन संक्षेपतोऽनुमानकथनहेत्वाभासत्रैविध्यकथनरीतिरुपक्रान्ता, अनन्तरमेव अक्षपादेन सविस्तरं निबद्धा। एवं समानतन्त्रे वैशेषिके प्रतितन्त्रसिद्धान्तसिद्धमेव नैय्यायिकानां मनस इन्द्रियत्ववर्णनमपीति वैशेषिकदर्शनं न्यायदर्शनात् प्राचीनमिति केचित् वदन्ति।

महाभारतप्रतिपादित उलूकर्षिरस्मात् उलूकनाम्नः काणादात् भिन्न एव। महद्दीर्घवद्वा इत्यादिसूत्राणां अनादिसिद्धवैशेषिकमतखण्डनपरत्वमेव न तु अर्वाचीन मुनिप्रणीत सूत्रार्थखण्डनपरत्वम्। एवमेव जैमिनिदर्शनस्यापि तात्पर्यमुन्नेयम्। रावणस्तु यः कश्चन न तु श्रीरामभार्यापहारी पौलस्त्यः। काणदर्शनस्य न्यायदर्शनात् प्राचीनत्वसाधने हेत्वाभासत्रैविध्यरूपसंक्षेपकथनरूपो हेतुरकिञ्चित्करः। यतो हि विपरीतत्वस्यापि सम्भवात्। न्यायदर्शने पञ्चत्वेन वर्णितानां हेत्वाभासानां पञ्चत्वं त्यक्त्वा युक्त्या काणादेन त्रैविध्यं प्रतिपादितमित्यपि वक्तव्यत्वसम्भवात्। इति न्यायदर्शनात् वैशेषिकदर्शनस्य प्राचीनत्वं केचन न वदन्ति।

द्रव्यगुणकर्मादिरूपेण सर्वमपि पदार्थं विभज्य प्रदर्श प्रपञ्चज्ञानं सर्वमेतद्दर्शनाधीनमिति गमयन्नप्ययं काणादः वैदिकदर्शनपरमलक्ष्यभूते मोक्षात्मनि निश्रेयसे तत्वज्ञानस्य पर्यवसानं आवेदयति। अतश्चेतरशास्त्रापेक्षयास्य शास्त्रस्यैतादृशविशेषवत्वादेव दर्शनस्यास्य वैशेषिकदर्शनमित्याख्या अभूदिति वक्तुं शक्यते।

"द्वित्वे च पाकजोत्पत्तौ विभागे च विभागजे।
यस्य न स्खलिता बुद्धिस्तं व वैशेषिकं विदुः॥

इति प्रसिद्धाभाणकमनुसृत्य तावन्मात्रनिर्णयविधायित्वात् वैशेषिकमित्याख्याभूदिति-काचित कल्पना। दर्शनान्तरेषु असाधितस्य विशेषरूपपदार्थस्य साधनात् वैशेषिकमित्याख्याभूदित्यपीतरा कल्पना। धर्मविशेषप्रसूतादित्यारम्भे संयुक्तसमवायादग्नेर्वैशेषिकमित्यन्ते च विशेषपदनिर्देशात् वैशेषिकदर्शनमित्याख्याभूदिति विमर्शनसरणिः। शास्त्रेऽस्मिन् संमुग्धत्वनिवृत्तये प्रतिपदार्थं विद्यमानो विशेषस्साधर्म्यवैधर्म्यमुखेन विशदीकृत इति विशेषात् वैशेषिकदर्शनमित्याख्याभूदिति काचन मतिः। सांख्याः अचेतनानि तत्त्वानि चतुर्विंशतिः, पञ्चविंश आत्मा इति वर्णयन्ति वस्तुतः कार्यकारणयोरैक्यात् सर्वमचेतनमेकमेव तत्वमित्येव तन्मते वक्तव्यं भवति। तत्रापि प्रकृतेः त्रिगुणात्मकतया एकत्वेन गणनमप्यस्वरसम्। वैशेषिके दर्शने तु द्रव्यगुणादिविभागस्सर्वथा असंकीर्णो वर्तते विशेषधर्ममूलकविभागविधानादिति वैशेषिकमित्याख्याभूदित्यपि वक्तव्यम्। एवं प्रकृतिपुरुषयोरुपादानत्ववादं त्यक्त्वा वैदिकावैदिकानुमोदनकारणभूतं परमाणूपादानत्ववादवर्णनमस्य दर्शनस्य विशेष इति वैशेषिकदर्शनाख्याभूदिति कल्पनापि समीचीना भवति।

## वैशेषिक सूत्राणि

कणादप्रणीते वैशेषिकदर्शनेऽस्मिन् दश अध्यायाः, प्रत्यध्यायं आह्निकद्वयमिति विंशत्याह्निकानि, सप्तत्यधिकं त्रिशतं सूत्राणि च सन्ति। सूत्रेष्वेतेषु सर्वपदार्थानामुद्देशः, अर्थशब्दाभिधेयानां साधर्म्यवैधर्म्यव्युत्पादनम्, उद्दिष्टानां पदार्थानां यथावन्निरूपणम्, भूतानां लक्षणम्, वायोराकाशस्य च परीक्ष्य स्थापनम्। तत्तदसाधारणगुणबलेन भूतकथनम्, प्रसंगात् कालदिशोर्लक्षणाकथनम्, चेतनशब्दवाच्यत्वात् चैतन्यगुणेनैवात्मनां स्थापनम्, आत्मस्थापनफलत्वात् अनुमानप्रामाण्यनिरूपणम्, तच्छेषतया हेतुहेत्वाभासकथनम्, मनस्तत्वविवेचनपूर्वकं चैतन्यातिरिक्तानां अंशानां प्रतिपादनम्, भूतेषु नित्यानित्यत्वविवेकः, परमाणुसाधनप्रपञ्चनम्, कार्यद्रव्यशरीरनानात्वायोनिजशरीराणां निरूपणम्, शरीरातिरिक्तेनात्मना निःश्रेयसार्थाय कर्तव्येषु कर्मसु प्रसिद्धोत्क्षेपणादिलौकिकशरीरकर्मव्युत्पादनमुखेन सुग्रहकारणककर्मनिरूपणम्, दुर्ग्रहकारणकभूकम्पादिलौकिककर्मनिरूपणम्, मनआदीनां कर्मनिरूपणम्, वेदप्रामाण्यस्थापनपूर्वकं दानप्रतिग्रहादिमुखेन

सर्वयमरूपयोगाङ्गनिरूपणम्, वर्णाश्रमादिधर्मवर्णनमुखेन नियमरूपयोगाङ्गनिरूपणम्, एकद्रव्यसापेक्षाणां रूपरसगन्धस्पर्शपरिमाणानां बाह्यगुणनिरूपणम्, पाकजप्रक्रियानिरूपणम्, अनेकद्रव्यनिरूप्यगुणवर्णनम्, बाह्यभावपदार्थविषयकप्रत्यक्षनिरूपणम् तत्कारणभूतानां विषयेन्द्रियाणां निरूपणम्, उक्तवशिष्टानां अभावलौकिकयोगादिजन्यालौकिकप्रत्यक्षनिरूपणम्, प्रत्यक्षभिन्नानां लैङ्गिकस्मृतिस्वप्नादिसर्वज्ञाननिरूपणम्, सुखदुःखनिरूपणम्, द्रव्यगुणकर्मणां कारणत्ववैविध्यप्रदर्शनमित्येते विषयास्सविस्तरं उपवर्णिता विद्यन्ते।

एतेषां कणादप्रणीतानां सूत्राणां बहूनि व्याख्यानानि उपव्याख्यानानि प्रकरणादीनि च आसन्निति उदयनाचार्यकृतकिरणावल्याः ज्ञायते। किन्तु सूत्रेषु वैशद्याभावात् अन्येषाञ्चातिविस्तृतत्वात् एकदेशाभिधायित्वाद्वा इतस्ततोऽभिहितानां वैशेषिकाभिमतपदार्थानां एकत्र कात्स्न्येन संग्रहार्थं यदा प्रशस्तपादाचार्येण पदार्थसंग्रहः प्रणीतस्तत आरभ्य तस्यैवाध्ययनाध्यापनादिषु छात्राणां पण्डितानाञ्च विशेषत आदरात् वैशेषिकसूत्रव्याख्यानादीनाञ्चोपेक्षणात् गच्छता कालेन वैशेषिकसूत्राणि विहाय प्राचीनानां वैशेषिकग्रन्थानां विलोपस्संजात इति प्रतिभाति। प्रशस्तपादविरचितपदार्थसंग्रहप्रभावात न केवलं सूत्राणां प्राचीनव्याख्यानानामेव विलोपस्समजनि परन्तु प्राचीनव्याख्याभावात् वैशेषिकसूत्रपाठोऽपि वैरूप्यमापन्न इत्यभ्युपगन्तव्यं भवति। शङ्करमिश्रकृतोपस्कारयुक्ते काशीप्रकाशिते (B. S. S, 3) वैशेषिकदर्शने 370 सूत्राणि दृश्यन्ते। मिथिलाविद्यापीठप्रकाशितेऽज्ञातकर्तृकव्याख्यासहिते नवमाध्यायप्रथमाह्निकान्ते वैशेषिक दर्शने 321 सूत्राण्येव दृश्यन्ते। चन्द्रानन्दवृत्तिसहिते बरोडाप्रकाशिते (GOS 136 Baroda) वैशेषिकदर्शने 384 सूत्राणि दृश्यन्ते। अष्टमनवमदशमाध्यायेषु संस्करणान्तरेष्विव अह्निकद्वयविभागोपि न दृश्यते इति विशेषः। कणादेन प्रणीतं टीकाकृद्भिः प्रटीकाकृद्भिः अन्यैश्च बहुभिर्निबन्धकारैर्बहुशः पल्लवितमिदं दर्शनं तत्वचिन्तामणिकृतो गङ्गेशोपाध्यायादनन्तरं उत्तरोत्तरं महान्तं विस्तारं महतीं प्रसिद्धिमापन्नं दृश्यते। विभिन्नानां शास्त्राणां अभिप्रायाणाञ्च प्रभावेन कालान्तरे वैशेषिकसिद्धान्तेषु भृशं परिवर्तनं परिवर्धनम् प्रस्थानबाहुल्यञ्च सञ्जातम्। मैथिलप्रस्थानम्, गौडप्रस्थानम्, दाक्षिणात्यप्रस्थानमिति प्रस्थानभेदा अपि श्रूयन्ते। मैथिलप्रस्थाने न्यायसिद्धान्तानां क्रोडीकरणं दृश्यते। आर्यावर्तदक्षिणापथयोः वैशेषिकसूत्रपाठे प्राचीनकालत एव सम्प्रदायभेद आसीदित्यनुमान-

स्यावकाशोऽस्ति । कणादानामीश्वरोऽस्तीति वादः पाशुपतोपज्ञमेतत् इति मिथिला विद्यापीठसंस्करणप्रस्तावनायां दर्शनात् प्राचीने काल एव वैशेषिकसिद्धान्ताः पाशुपतप्रभाविता बभूवुरिति पुराणादौ प्रसिद्धं सृष्टिसंहारविधौ महेश्वरस्य कर्तृत्वं पदार्थधर्मसंग्रहे वर्णितं दृश्यत इत्यपि प्रसिद्धिः (षड्दर्शनसमुच्चये P. 12) ।

सूत्राणामेतेषां कालनिर्णयो नाद्यापि सञ्जातः । बौद्धग्रन्थेषु वैशेषिकदर्शनस्य नाम तत्र तत्र निर्दिष्टं विद्यते सांख्यदर्शनं वैशेषिकदर्शनं च बुद्धात् प्राचीनमित्यत्र बौद्धानामैकमत्यं दृश्यते । ततश्च वैशेषिकदर्शनस्य प्राचीनतमत्वे न विवादः । तत्र वैशेषिकसूत्राणां व्याख्यानसरणिर्द्विविधा दृश्यते — एका सूत्रव्याख्यानरूपा, अन्या पदार्थव्याख्यानरूपा । तत्र प्रथमां सरणिमवलम्ब्य रावणभाष्यम्, भारद्वाजवृत्तिः, शङ्करमिश्रोपस्कराश्च प्रसिद्धाः । परन्तु अन्यानि बहूनि सूत्रव्याख्यानानि आसन्नित्यत्र सन्ति प्रमाणानि । तत्र तार्किकप्रवरेण जैनाचार्येण मल्लवादिक्षमाश्रमणेन प्रणीतं द्वादशारः **नयचक्राख्यः** ग्रन्थः, एवं सिंहसूरिक्षमाश्रमणेन कृता **न्यायागमानुसारिण्याख्या** नयचक्रव्याख्या च प्रकाशिते विद्येते । तयोर्नयचक्रस्य षष्ठेऽरे वैशेषिकमतम्, सप्तमेऽरे वैशेषिकमतपरीक्षा च कृता । नयचक्रव्याख्यायां आगमानुसारिण्यां विशेषतः प्राचीनवैशेषिकग्रन्थानां ग्रन्थकाराणाञ्च उल्लेखो विद्यते । यद्यपि ग्रन्थेऽस्मिन् वैशेषिकसूत्रपाठ एव भिद्यते तथापि प्राचीनव्याख्यासत्ताप्रामाण्ये ग्रन्थोऽयं बहूपकरोति । **स्याद्वादरत्नाकरादिषु** च जैनग्रन्थेषु बहवो वैशेषिकग्रन्थाः निर्दिष्टाः । एवञ्च वैशेषिकसूत्राणामनेकाष्टीका आसन्नित्यस्माकं निश्चयो भवति ।

**आत्रेयभाष्यम्—**

आत्रेयकृतं भाष्याभिधानं किञ्चिद्वैशेषिकसूत्राणां व्याख्यानमासीदिति ज्ञायते । मिथिलाविद्यापीठेन प्रकाशितायां अज्ञातकर्तृनामधेयायां वैशेषिकसूत्रवृत्तौ, वादिराजेन न्यायविनिश्चयविवरणे, श्रीदेवेन स्याद्वादरत्नाकरे, गुणरत्नेन षड्दर्शनसमुच्चये, हरिभद्रसूरिणा षड्दर्शनसमुच्चयवृत्तौ, भट्टवादीन्द्रेण कणादसूत्रनिबन्धे (J. O. R. Baroda. Vol. X) च निर्दिष्टं विद्यते । आत्रेयमतं हि किञ्चिद् विशिष्टं आसीत् । अत एव **आत्रेयतन्त्रमिति** तेषु अस्य व्याख्यानं उल्लिखितं दृश्यते । परन्तु कालक्रमेण शिष्याणां मन्दोद्यमत्वात् आत्रेयभाष्यमिदानीम् व्युच्छिन्नमिति वक्तव्यम् ।

कटन्दीव्याख्या—

एवं वैशेषिकसूत्रोपरि कटन्दीसंज्ञिका काचन टीका आसीदिति ज्ञायते। "भो भो लक्ष्मण ! वैशेषिककटन्दीपण्डितो जगद् विजयमानः पर्यटामि। क्वासौ रामः ? तेन विवदिष्ये" इति अष्टमशतकीयेन मुरारिकविना विरचितस्य अनर्घराघवनाटकस्य पञ्चमेऽङ्के रावणस्य वच उपलभ्यते। अस्य ग्रन्थस्य व्याख्याकारः रुचिपत्युपाध्यायः कटन्दीं रावणस्य कृतिं स्वीकरोति। माभूदियं व्याख्या लङ्कापतिना रावणेन विरचिता। परमस्मादुल्लेखात् केनचिद् रावणाभिधेयेन कटन्दी विरचितेति सूच्यते। एवं पदार्थधर्मसंग्रहस्य "प्रणम्यहेतुमीश्वरम्" इति मङ्गलश्लोकस्य व्याख्यानावरे उदयनाचार्येण किरणावल्याम्—"सूत्रे वैशद्याभावात्, भाष्यस्य विस्तरत्वात्" इत्यभिहितम्। अत्र च व्याख्यात्रा पद्मनाभमिश्रेण किरणावलीभास्करे—ग्रन्थान्तरेण अन्यथासिद्धिमपाकरोति सूत्र इति, भाष्यस्य-रावणप्रणीतस्य "इति व्याख्यातम्। एवं नयचक्रे, तद्वृत्तौ न्यायागमानुसारिण्याञ्च बहवः कटन्द्युल्लेखाः दृश्यन्ते। परन्तु नयचक्रवृत्तौ कटन्द्यां टीकायामिति निर्देशात् कटन्दी रावणभाष्यस्य टीका स्याद्वेति संशयोऽप्युद्भवति। केचिज्जैनाः वाक्यव्याख्या कटन्दीति वर्णयन्ति। सर्वथा काचन वैशेषिकसूत्रव्याख्या कटन्दीत्यासीदित्येव वक्तव्यं भवति।

चन्द्रानन्दव्याख्या—(G. O. S. No. 136 Baroda)

चन्द्रानन्देन कृता काचन वैशेषिकदर्शनसूत्रव्याख्या बरोडाविमर्शसंस्थायाः प्रकाशिता विद्यते। चन्द्रानन्दाभिमतो वैशेषिकसूत्रपाठः शङ्करमिश्रस्वीकृतात्, मिथिलाविद्यापीठप्रकाशितात् अज्ञातकर्तृनामधेययुक्तव्याख्याग्रन्थस्वीकृतात्, वाराणसीकलकत्तादिमुद्रिताच्च सूत्रपाठात् भूयान् भिद्यते। प्राचीनग्रन्थेषु यान्यनेकानि सूत्राणि वाराणस्यादिमुद्रितपाठे न दृश्यन्ते, अन्यथा वा उपलभ्यन्ते, तानि सूत्राणि चन्द्रानन्दसूत्रपाठे यथावत् स्वल्पीयसा पाठभेदेन उपलभ्यन्ते। न्यायवार्तिककारं, उद्योतकरम्, वृत्तिकारञ्च निर्दिशति। चन्द्रानन्दवृत्तिरीत्या वैशेषिकसूत्राणां अन्त्येषु त्रिषु अध्यायेषु आह्निकविभागो नाभिमत इति ज्ञायते अस्य कालः (700 A. D) इति सम्पादकाभिप्रायः॥

एवं कणादप्रणीतवैशेषिकसूत्राणां संक्षिप्तव्याख्यानरूपो वाक्यनामा कश्चित् ग्रन्थ असीत्। केनचित् विरचितं भाष्यमासीत्। भाष्यस्य प्रशस्तमतिना

विरचिता टीका चासीदित्यादि, टीकायाः नामापि प्रशस्तमतिरिति च नयचक्रतद्व्याख्यानेभ्यः ज्ञायते ।

प्रशस्तमतिव्याख्या—

ईश्वरस्य विभुत्वसर्वज्ञत्वविचारावसरे विशेषपदार्थनिरूपणावसरे च शान्तिरक्षितेन तत्वसंग्रहे (G. O. S. 30-31 Baroda) कमलशीलेन तत्वसंग्रहव्याख्यापञ्जिकायाञ्च प्रशस्तिमतिमतं दूषितञ्च । नयचक्रे तस्य व्याख्यायाञ्च यानि भाष्यवचांसि उद्धृतानि तानि प्रशस्तपादभाष्ये नोपलभ्यन्ते । जिनेन्द्रबुद्धिना विरचितायां दिङ्नागीयप्रमाणसमुच्चयव्याख्याविशालामलवत्यां ये भाष्यपाठा उद्धृतास्तेऽपि प्रशस्तपादभाष्ये नोपलभ्यन्ते । सिद्धस्य वस्तुनस्स्वकारणैः सत्तया च सम्बन्ध इति प्रशस्तमतोऽभिप्राय " इति नयचक्रे च (P. No. 152) दृश्यते । तस्मात् पदार्थसंग्रहाभिधानात् प्रशस्तपादभाष्यात् भिन्नः कश्चिद् वैशेषिकसूत्राणां टीकाग्रन्थः प्रशस्तमतिनामकेन कृत इति प्रतिभाति ।

भट्टवादीन्द्रप्रणीतव्याख्या-कणादसूत्रनिबन्धः

योगेश्वरशिष्येण शङ्करकिङ्कराख्येन वादीन्द्रभट्टोपनामभूषितेन न्यायसारव्याख्याकारराघवभट्टगुरुणा श्रीसिंहराजसभायाः धर्माध्यक्षेण महाविद्याविडम्बनकर्त्रा त्रयोदशतकीयेन (1252-1352 A. D.) भट्टवादीन्द्रेण कृता काचन वैशेषिकसूत्रव्याख्या अपूर्णा अमुद्रिता च मद्रासबरोडापुस्तकालययोर्लभ्यते (J. O. I. Baroda Val. X No. 1 p. p. 22-31)

भारद्वाजवृत्तिः

धर्मलक्षणनिरूपणावसरे (P. 4. K. S. S. 3) उपस्कारे शङ्करमिश्रेण "वृत्तिकृतस्तु" इत्यारभ्य तेषामाशय उपवर्णितः । सा च भरद्वाजकृता वृत्तिरिति विन्ध्येश्वरीप्रसादशास्त्री न्यायकन्दलीभूमिकायां साधयति । न्यायवार्तिककारस्य उद्योतकरस्यैव भरद्वाज इति नाम । तत्कालीनैरपव्याख्या नैरूद्धिग्नहृदयेन उद्योतकरेण वैशेषिकसूत्राणां व्याख्या कृता स्यादित्यपि सम्भाव्यते । उद्योतकरस्य समानतन्त्रे वैशेषिकतन्त्रे महानभिमान इत्यपि तत्र तत्र वार्तिकवर्णितात् वैशेषिकसूत्रार्थादपि ज्ञातुं शक्यते । उद्योतकरस्य वैशेषिकत्वमपि प्रसिद्धम् (A. I. O. C. Bombay 1949 P. 327) ।

भाष्यम्—

प्रमाणसमुच्चयवृत्त्यां विशालामलवत्यां (p. p. 174, 195) तिब्बेतीभाषाया संस्कृतीकृतायां (Appentix G. O. S. 136 Baroda) "अत्रापि भाष्यकृद-भिहितमस्ति" इति, एवं मिथिलाविद्यापीठप्रकाशितायां वृत्तौ च (p. p. 20,21, 40, 43) भाष्यस्योल्लेखो विद्यते। तस्मात् वैशेषिकसूत्रेषु किञ्चित् भाष्यमासीदि-त्यपि ज्ञातुं पार्यते। रावणभाष्यं वा अन्यद् वेति न निश्चयः।

रावणभाष्यम्

प्रमाणसमुच्चयस्थस्य "अन्ये तु प्रधानत्वात् आत्ममनःसन्निकर्षं प्रमाणमाहु" रिति ग्रन्थस्य व्याख्यानावसरे विशालामलवत्यां (p. 174) अन्ये तु—रावणादयः इति व्याख्यातम्। एवं सवृत्तिके नयचक्रे बहव उल्लेखा दृश्यन्ते। एवं ब्रह्म-सूत्रशाङ्करभाष्यव्याख्यायां रत्नप्रभायां (2-2-11) "द्वाभ्यां द्व्यणुकाभ्यां आरब्ध-कार्ये महत्त्वं दृश्यते तस्य हेतुः प्रचयो नाम प्रशिथिलावयवसंयोग इति रावण-प्रणीतभाष्ये दृश्यत इति चिरन्तनवैशेषिकदृष्ट्या इदमभिहितम्।" इति दृश्यते। एवं प्रकटार्थविवरणे (p. 491) "रावणप्रणीते भाष्ये यद् द्वाभ्यां द्व्यणुकाभ्यां आरब्धे कार्ये यत् महत्त्वं उत्पद्यते तस्य प्रचयो असमवयिकारणमित्युक्तम्" इति दृश्यते। तस्मात् वैशेषिकसूत्राणां रावणप्रणीतं भाष्यमपि प्रसिद्धमासीदिति ज्ञायते। उदयनाचार्येण किरणावल्यां (p. 5.) निर्दिष्टं भाष्यमपि पद्मनाभमिश्रदृष्ट्या रावणभाष्यमेवेति निरूपितं प्राक्। परं नयचक्रे तद्वृत्तौ च उल्लिखितं कटन्दी-भाष्यं रावणप्रणीतं भाष्यमप्येकमथवा भिन्नमित्यत्र न निश्चयः। कटन्दीपण्डितो रावण इति शब्दस्वारस्यात् कटन्दी अन्या, रावणस्तु भिन्न इति वदन्ति। सर्वथा रावणप्रणीतं भाष्यं किञ्चिदासीदिति ज्ञायते।

वाक्याख्या व्याख्या

जैनतार्किकेण मल्लवादिना स्वीये द्वादशारनयचक्रनामके ग्रन्थे एवं तद्व्या-ख्यात्रा सिंहसूरिणा च—असत्सम्बन्धपरिहारार्थं निष्ठासम्बन्धयोरेककालत्वात् इति वाक्यम् सभाष्यम् प्रशस्तोऽन्यथा व्याचष्टे" इति (p. p. 150. 152 Appe-ndix G. O. S. 136. Baroda), एवं कारणसमवेतस्य वस्तुनः उत्तरकालं सत्ता-सम्बन्ध इति बहूनां मतम्, वस्तूत्पत्तिकाल एवेति वाक्यकाराभिप्रायोऽनुसृतो-

भाष्यकारैः, सिद्धस्य वस्तुनः स्वकारणैः सत्तया च सम्बन्ध इति प्रशस्तमतोऽभिप्रायः" (p. 152 G. O. S. 136) इति निर्दिष्टम् । एवञ्च वार्तिकलक्षणयुक्तं वाक्यसंज्ञकं संक्षिप्तं व्याख्यानमासीदिति, तस्यापि भाष्यमासीदिति च ज्ञायते ।

वृत्तयः

वैशेषिकदर्शनोपरि बहवो वृत्तिग्रन्थाः यत्र तत्रोपलभ्यन्ते । अविज्ञातकर्तृनामधेया प्राचीना काचन वृत्तिः नवमाध्यायाद्याह्निकान्ता मिथिला विद्यापीठग्रन्थमालायां (No. 5) मुद्रिता । व्याख्याकारोऽयं उपस्कारकर्तुश्शङ्करमिश्रात्प्राचीन इति भाति । आत्रेयं प्रशस्तपादं उदयनाचार्यं, न्यायभूषणकारं भासर्वज्ञं, मानमनोहरकारं वादिवागीश्वरञ्च नामग्रहणं निर्दिशति । वृत्तिरियं शङ्करकिङ्कराभिधानवादीन्द्रभट्टकृतं कणादसूत्रनिबन्धं विषयसाम्येन भाषासाम्येन च अनुसरन्ती वादीन्द्रग्रन्थस्य सारसंग्रहरूपतामाप्नोति । वादिवागीश्वरकालः (800-1200 A. D.) अष्टमशतकादारब्धः द्वादशशतकान्त इति अड्यारब्रह्मविद्यापत्रिकायां (Vol. VI p. p. 35-40) निर्णीतम् ।

अपरा काचन अज्ञातकर्तृनामधेया वृत्तिः बल्लालसेनकाले (1158-1178 A. D.) लिखिता, यस्यां अन्त्यस्याध्यायस्याह्निकभेदा न दृश्यन्ते । विषयोऽयं बरोडानुसन्धानालयपत्रिकायां (J. O. I. B. Vol. 10, p. p. 22-31) वर्णितः । अन्या काचन निबन्धाख्या वृत्तिः वादीन्द्रभट्टेन (1300 A. D ) कृता, यस्या सारांशः बरोडानुसन्धानालयपत्रिकायां प्रकाशितः । भवनाथमिश्रभवान्योः पुत्रेण जीवनाथस्य भ्रातृव्येण काणादापरनामकेन रघुदेवोपाध्यायशिष्येण मैथिलेन शङ्करमिश्रेण (1400-1500 A. D.) कृता काचन उपस्काराख्या वृत्तिः काशीसंस्कृतग्रन्थमालायां (K. S. S. 3) मुद्रिता यस्यां प्रशस्तदेववृत्तिकारधर्मकीर्तिदिङ्नागभूषणतौतातिक - उद्योतकर - उदयन - वल्लभाचार्य - पदार्थप्रवेशाख्यप्रकरणग्रन्थाद्याः निर्दिष्टाः । एतदीयवेदान्तग्रन्था अस्मदीये अद्वैतवेदान्तसाहित्येतिहासे (p. 406) द्रष्टव्याः । एकोनविंशतिशतकीयेन (1867 A.D.) गौडदेशीयेन जयनारायणतर्कपञ्चाननेन कृता विवृतिनाम्नी उपस्कारव्याख्या व्याख्यात्रैव स्वजीवनकाले बिब्लियोथिका इण्डिकाग्रन्थमालायां (B. I. 34) प्रकाशिता ।

अन्या काचन काणादरहस्याख्या वृत्तिः बलभद्रविजयश्रियोः पुत्रेण न्यायबोधिनीकर्तुगौवर्धनमिश्रस्य ज्येष्ठभ्रात्रा पद्मनाभमिश्रेण (1600 A. D.) कृता अमुद्रिता तञ्जपुरपुस्तकालये लभ्यते। हरिरामतर्कवागीशचिरञ्जीविभट्टाचार्ययो शिष्येण रघुदेवन्यायालङ्कारेण (1650 A. D.) कृता काचन वृत्तिरमुद्रिता वाराणसीसंस्कृतकलाशालापुस्तकालये लभ्यते। वाधूलगोत्रजेन देवसिंहमखि पुत्रेण विश्वरूपयतिशिष्येण भास्कररायगुरुणा तञ्जपुराधीशशाहजीनृपतिसामयिकेन गङ्गाधरवाजपेयीतिप्रसिद्धेन अवैदिकदर्शनसंग्रह - कुवलयानन्दव्याख्यारसिकरञ्जिनी न्यायसूत्रवृत्ति (I.O.L.) ग्रन्थानां कर्त्रा गङ्गाधरसूरिणा (1650 A. D.) कृता काचन सिद्धान्तचन्द्रिकाख्या वृत्तिः तिरुवनन्तपुरपुस्तकमालायां (T. S.S. 25) मुद्रिता विद्यते। अस्या व्याख्यापि प्रसादाख्या मूलकारेण कृता अमुद्रिता अपूर्णा अड्यारपुस्तकालये मद्रपुरीराजकीयपुस्तकालये च लभ्यते। एवं शिवभट्टसती- देव्योः पुत्रेण महाराष्ट्रदेशजेन श्रृङ्गिवेरपुराधीशरामवर्मपोषितेन भट्टोजिदीक्षितपौत्र- हरिदीक्षितशिष्येण गङ्गारामवैद्यनाथपायगुण्डेबालशर्मणां गुरुणा बालशर्मपित्रा परिभाषेन्दुशेखरादिकर्त्रा वैयाकरणेन सप्तदशाष्टादशशतकीयेन (1670-1750 A. D.) नागोजीभट्टेन कृता काचन पदार्थदीपिकाख्या वैशेषिकसूत्रवृत्तिरमुद्रिता विद्यत इति सेण्ट्रल प्राविन्सबरारपुस्तकसूच्याः ज्ञायते। देवदत्तशर्मणा आधुनिकेन (1898 A.D.) कृता काचन भाष्याख्या वृत्तिः मुर्दाबादनगरे मुद्रिता। एकोन- विंशतिशतकीयेन (1887 A. D.) चन्द्रकान्ततर्कालंकारेण कृता काचन तत्वाव- लयाख्या वृत्तिः कलकत्तायां चौखाम्बायां (Ch. SS. 48) च मुद्रिता। एवं वङ्गीयेन पञ्चाननतर्कभट्टाचार्येण (1406 A. D.) कृता काचन परीक्षाख्या वृत्तिः कलकत्तायां मुद्रिता। एवं तर्कार्णव-पण्डितरत्नादिबिरुदालङ्कृतेन कुसुमाञ्जलि- विस्तरादिकर्त्रा न्यायवेदान्तपण्डितेन उत्तमूर-वीरराघवाचार्यस्वामिना (1950 A.D.) कृता रसायनाख्या वृत्तिः या वैशेषिकसूत्र-भाष्याद्यर्थज्ञानाय बहूपकरोति सुलभाव- गाहा च भवति, मद्रासनगरे मुद्रिता च। तथैव वीरभद्रवाजपेयिपुत्रेण चयनीत्युप- नामकेन केनचिद् विदुषा कृता नयभूषणाख्या वृत्तिरमुद्रिता अपूर्णा च मद्रास- मैसूर - अड्यार-पुस्तकालयेषु लभ्यते ग्रन्थप्रदर्शिनीसमित्यां विशाखपट्टणे अपूर्णा

मुद्रिता च। यद्यपि भारद्वाजवृत्तिर्नोपलभ्यते तथापि केचन भागाः अशुद्धिबहुलाः गङ्गाधरकविरत्नेन भारद्वाजवृत्तिभाष्यनाम्ना काचन वृत्तिः कलकत्तानगरे मुद्रिता दृश्यते यस्यां सम्पादकेन कल्पिताः भागाः, स्वमतिविचारा रूढाश्चार्थास्संक्षिप्ता दृश्यन्ते। आधुनिकेन काशीनाथशर्मणा कृता वेदभास्करभाष्याभिधा व्याख्या होशियारपुरे मुद्रिता।

आत्रेयककृता वैशेषिकसूत्रव्याख्या—

बरोडाप्रकाशितस्य (GOS. 136. Baroda) वैशेषिकदर्शनस्य परिशिष्टे तिब्बतीभाषायास्संस्कृते अनूदितात् प्रमाणसमुच्चयात् कानिचन उद्धरणानि प्रकाशितानि दृश्यन्ते। तेषूद्धरणेषु—' केचित् प्रमाणात् फलमर्थान्तरमिच्छन्त असाधारणकारणत्वात् इन्द्रियार्थसंनिकर्षं प्रमाणमामनन्ति" इति प्रमाणसमुच्चयवाक्यस्थ (p. 166) केचित् पदस्य व्याख्यावसरे विशालामलवतीकारेण जिनेन्द्रबुद्धिना (p. 174) आत्रेयकादय इति व्याख्यातम्। तस्मात् वैशेषिकदर्शनोपरि आत्रेयकाचार्यकृता काचन व्याख्यासीदित्यूहितुं शक्यते।

**प्रशस्तपादभाष्यम्-पदार्थसंग्रहः**

प्रशस्तपादाचार्यः बहून् ग्रन्थान् परिशील्य सर्वमपि प्रमेयं निरर्गलं निष्कृष्य निष्कृष्टबोधदत्तदृष्टिभिर्न महागहनसञ्चारपरिश्रान्तैर्भाव्यमिति कृपया अर्वाचीनोऽन्नम्भट्टस्तर्कसंग्रहमिव विश्वनाथो मुक्तावलिमिव पदार्थसंग्रहनामानं प्रबन्धं प्रणिनाय यः सर्वांशसौन्दर्यात् भाष्यप्रथां समुचितां लेभे। आह चारम्भ एव—

प्रणम्य हेतुमीश्वरं मुनिं काणादमन्वतः।
पदार्थधर्मसंग्रहः प्रवक्ष्यते महोदयः॥ इति।

अत्र पदार्थानां साधर्म्यवैधर्म्यरूपाणां तर्कोपन्यासपूर्वकाणां संग्रहो व्यधायि।

केचन सूत्रार्थो वर्ण्यते यत्र शब्दैस्सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥

इति सम्प्रदायागतं लक्षणं पदार्थसंग्रहे असम्भवात् न भाष्यशब्दव्यपदेशार्हमिति वदन्ति। प्रतिपादितश्चैतत् वैशेषिकदर्शनस्य भाष्याभावं स्वीयभाष्यारम्भहेतुं

प्रतिपादयता चन्द्रकान्तभट्टाचार्येण स्वीयवैशेषिकदर्शनभाष्यभूमिकायाम् । पदार्थसंग्रहनाम्नैव तस्य निर्दिष्टत्वात् च प्रशस्तपादीयस्य भाष्यत्वं न सम्भवति। भाष्यस्य चातिविस्तृतत्वादिति वदता किरणावलीकारेणापि निर्दिष्टमेतदिति।

परन्तु पदार्थधर्मसंग्रहस्य भाष्यत्वव्यवहारस्सम्प्रदायपरम्परागत इत्येव ज्ञायते। व्योमवत्याम् (p. No. 1), सेतौ (p. No. 2), सूक्तौ, (p. No. 1) वादिदेवसूरिविरचित'स्याद्वादरत्नाकरे,' च भाष्यशब्देनैव निर्देशोऽस्ति। किञ्च प्राचीनाचार्याणां विचारे भाष्यशब्द अर्थद्वये प्रयुक्तो दृश्यते। "सूत्रार्थो वर्ण्यते" इत्यादिना उक्तं भाष्यलक्षणन्तु सर्वात्मना पारिभाषिकं भवति। परं न्यायनिबन्धप्रकाशे (परिशुद्धिप्रकाशे) वर्धमानोपाध्यायेन अन्यच्च भाष्यलक्षणमभिहितम्— "सूत्रम्बुद्धिस्थीकृत्य तत्पाठनियमं विनापि तद्व्याख्यानं भाष्यम्। यद्वा सूत्रव्याख्यानान्तरमनुपजीव्य तद्व्याख्यानं भाष्यम्। व्याख्यानान्तरमुपजीव्य सूत्रव्याख्यानं वृत्तिः" (p. 2 गङ्गनाथझा Edn. B.I.S. 205) एवञ्च पारिभाषिकभाष्यत्वाभावेऽपि द्वितीयलक्षणेन प्रशस्तपादीयस्य भाष्यत्वं सिध्यत्येव। पदार्थधर्मसंग्रहनाम्नैव तत्र निर्देशात् न तस्य भाष्यत्वमिति कथनमपि निःसारम्। नामान्तरेण निर्देशः न भाष्यत्वव्याघातकारी। तथा सति "अथ शब्दानुशासनमिति महाभाष्यारम्भे शब्दानुशासनत्वेन निर्दिष्टस्य महाभाष्यस्य भाष्यरूपत्वस्यैव दुर्वचत्वापातात्। वस्तुतः "पदार्थधर्मसंग्रहः प्रवक्ष्यते महोदय" इति प्रशस्तपादीयभाष्याद्यस्थं पदार्थधर्मसंग्रहपदं न प्रशस्तपादीयं निर्दिशति। परन्तु काणाददर्शनस्यैव निर्देशकं इत्यपि वक्तुं शक्यते। पदार्थानां द्रव्यादीनां ये धर्मास्साधर्म्यर्म्य-वैधर्म्यरूपाः तत्प्रतिपादकस्य काणादर्शनस्य संग्रहरूपत्वात् प्रकृष्टव्याख्यारूपवचोविषयीकरणप्रतिपादनपरत्वात् पदार्थधर्मसंग्रहः महोदय "इत्यर्थ एव पण्डितमण्डलीप्रसिद्धः।

किञ्च प्रशस्तपादीयस्य व्योमवत्यां यथा भाष्यशब्देन निर्देशोऽस्ति तथा संग्रहशब्देनापि निर्देशः कृतोऽस्ति "पदार्थधर्माणां संग्रह इति निबन्धान्तरैर्विस्तारोक्तानां संक्षेपेणाभिधानम्" (p. No. 20, 33), एवं न्यायकन्दल्याम्—"अन्यत्र ग्रन्थे विस्तरेण इतस्तत अभिहितानां इह एकत्र तावतामेव पदार्थानां ग्रन्थे संक्षेपेण भिधानम्" (p. No. 6) किरणावल्याम्—शास्त्रे नानास्थानेषु विततः एकत्र संकलय्य कथ्यन्त इति संग्रहः (p. No. 5) इति। तथा च

विस्तरेणोपदिष्टानां अर्थानां सूत्रभाष्ययोः ।
निबन्धो यस्समासेन संग्रहं तं विदुर्बुधाः ॥ इति

लक्षणलक्षितत्वात् प्रशस्तपादीयं संग्रहग्रन्थ इत्यपि वक्तुं शक्यते ।

परन्तु उपस्कारकर्त्रा शङ्करमिश्रेण पदार्थधर्मसंग्रहः प्रकरणशब्देन निर्दिष्टः (7-2-26, 9-2-6) । प्रकरणलक्षणन्तु—

शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम् ।
आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः ॥ इति ।

परं किरणावल्यां (p. No 5) प्रकरणादीनां एकदेशत्वात् इति दर्शनात् उदयनाचार्यः पदार्थधर्मसंग्रहं प्रकरणमिति न स्वीकरोति । एवं नयचक्रे तस्य व्याख्यायां, प्रमाणसमुच्चयव्याख्याविशालामलवत्याञ्च यानि भाष्यवाक्यानि उद्धृतानि तानि इदानीं प्रसिद्धे अथवा मुद्रिते प्रशस्तपादभाष्ये न दृश्यन्ते । एवं तत्त्वसंग्रहपञ्जिकायां (GOS) बौद्धभारतीग्रन्थमालायां मुद्रितायां वैशेषिकमतपरीक्षायां विशेषपरीक्षायां समवायपरीक्षायाञ्च यावानम्शः प्रशस्तपादभाष्यादुद्धृतस्तावान् सर्वोऽप्यम्शः प्रशस्तपादीये भाष्ये न दृश्यन्ते । केचनांशा दृश्यन्ते, केचन न दृश्यन्ते । प्रशस्तपादीयो ग्रन्थः पदार्थप्रवेशक पदार्थप्रदेश इत्यादिनाम्नापि व्यवहृता निर्दिष्टश्च न्यायकन्दली-उपस्कार-सम्मतितर्कप्रकरण—प्रमेयकमलमार्ताण्डन्यायकुमुदचन्द्र - तत्त्वसंग्रहपञ्जिकादिषु । तस्मादेवं निर्णयस्सम्भाव्यते-एकस्तावद् प्रशस्तपादेन वैशेषिक सूत्राणां टीकाग्रन्थो व्यरचि, अपरस्तु वैशेषिकमतसंग्राहकः पदार्थधर्मसंग्रह इति यस्सम्प्रति प्रशस्तपादभाष्यनाम्ना प्रसिद्ध इति ।

भाष्येऽस्मिन् द्रव्याणामुद्देशः, द्रव्याणां साधर्म्य-वैधर्म्ये, पृथिवीजलतेजो वायु आकाशकालदिगात्ममनांसि, सृष्टिसंहारविधिः, गुणपदार्थः, गुणसाधर्म्यवैधर्म्य निरूपणम्, रूपरसगन्ध निरूपणम्, पाकजोत्पत्तिः, संख्यानिरूपणे प्रसंगात् सौगत मतखण्डनम्, परिमाणादिनिरूपणम्, बुद्धिनिरूपणे-बुद्धेः विद्याअविद्याभेदनिरूपणम्, विद्यायां प्रत्यक्षलैंगिकस्मृति-आर्षाणां निरूपणम्, अविद्यायां संशय विपर्यय अनध्यवसायस्वप्नादिनिरूपणम्,




प्रत्यक्षानुमाननिरूपणम्, अनुमाने शब्दोपमानयोरन्तर्भावः, अनुमाने अर्थापत्यभाव-सम्भवानामन्तर्भावः, परार्थानुमाननिरूपणम्, पञ्चावयववाक्यनिरूपणम्, प्रसंगात् हेत्वाभासनिरूपणम्, उदाहरण—उदाहरणाभासनिरूपणम्, सुखादिनिरूपणम्, धर्माधर्मप्रसंगात् अपवर्गनिरूपणञ्चेतीमे विषया वर्णिताः। मुद्रितोऽयं ग्रन्थः गङ्गानाथझाग्रन्थमालायम्, वाराणस्याम्, विजयनगरसंस्कृतग्रन्थमालायामन्यत्र च।

भाष्यस्यास्य कर्ता प्रशस्तः, प्रशस्तदेवः, प्रशस्तचरणः, प्रशस्तमतिरित्यादि-नामभिः प्रसिद्धः प्रशस्तपादाचार्यः। बौधायनसूत्रे प्रवराध्याये आङ्गिरसगणान्तः-पातिशारद्वतगणे पठितः प्रशस्त इति एनं वर्णयान्ति केचित्। अपरे तु प्रवररत्न-ग्रन्थे आङ्गिरसगणे गौतमवर्गे निर्दिष्टः प्रशस्त इति वदन्ति। गौतमवात्स्यायनयोरिव समानतन्त्रत्वेन कणादप्रशस्तपादयोरपि परमर्षित्वम्, कपिलपञ्चशिखाचार्ययोरिव आचार्यत्वञ्च उदयनाचार्य-कन्दलीकार-शङ्करमिश्रादीनामभिप्रायः। वसुबन्धुना प्रशस्तपादभाष्यस्य खण्डितत्वात्, न्यायभाष्ये प्रशस्तपादभाष्यसिद्धान्तवर्णनाच्च तयोः प्राक्तनोऽस्य काल द्वितीयादारभ्य चतुर्थान्तश्शतक (200-400 A. D.) इति सिद्धान्तः।

प्रशास्तपादभाष्यं आधारं कृत्वा मतिचन्द्रेण सप्तमशतकात् प्राचीनेन दशपदार्थशास्त्रं लिखितम्। तस्मिन् द्रव्यगुणकर्म-सामान्य-समवायविशेषान् षट्पदार्थान् अतिरिच्य शक्तिः, अशक्तिः, सामान्यविशेषः, अभावश्चेति अन्ये चत्वारः पदार्थाः स्वीकृताः। यद्यपीदानीं स ग्रन्थः न लभ्यते तथापि चैनीभाषायां अस्यानुवादः (648 A. D.) कृत उपलभ्यते, यस्य इदानीं संस्कृतानुवादः कृतः। गङ्गानाथझानुसन्धानपत्रिकायाः एकोनविंशतितमेभागे प्रकाशितः।

# वैशेषिकदर्शनम्

- आत्रेय भाष्यम्
- कटन्दी व्याख्या
- कणादसूत्र निबन्धः
- चन्द्रानन्द व्याख्या
- प्रशस्तमति व्याख्या
- भारद्वाजवृत्तिः
- भाष्यम्
- रावणभाष्यम्
- वाक्यम्
  - वाक्यभाष्यम्
- प्रशस्तपाद भाष्यम्
  - सेतुः
  - सूक्तिः
  - व्योमवती
  - लीलावती
  - भाष्यनिकषः
  - न्यायकन्दली
    - पञ्जिका
    - कन्दलीसारः
  - किरणावली
    - भास्करः
    - प्रकाशः
      - द्रव्यप्रकाशिका
      - गुणप्रकाश विवृति
      - गुणप्रकाश विवृतिपरीक्षा
      - प्रकाशविवृति व्याख्या
      - गुणप्रकाश व्याख्या
    - टिप्पणम् (गुणदीधितिः)
  - कणादरहस्यम्
  - भिक्षुवार्तिकम्
- वृत्तयः
  - अज्ञात कर्तृनाम
  - अज्ञात कर्तृनाम
  - उपस्कारः
    - उपस्कारविवृतिः
  - काणादरहस्य
  - तत्वावलिः
  - नयभूषणम्
  - निबन्धः
  - पदार्थदीपिका
  - परीक्षा
  - भारद्वाज वृत्तिभाष्यं
  - रसायनम्
  - (no label printed)
    - वेदभास्कर
    - सिद्धान्तचन्द्रिका
      - प्रसादः
    - श्रायस्ककृता
  - वृत्तिः
  - वृत्तिः

**प्रशस्तपादभाष्यव्याख्याः—**

न्यायकन्दल्याख्यायाः पञ्जिकायाः कर्त्रा जैनेन राजशेखराचार्येण प्रशस्तपादीयपदार्थसंग्रहव्याख्यानां निर्देशस्तासां क्रमश्च सूचितः। तत्र चतस्रो वृत्तयो निर्वृत्ताः। एकां व्योमवतीं वृत्तिं व्योमशिवाचार्यो जुगुम्फ। द्वितीयां न्यायकन्दल्यभिधानां श्रीधराचार्यः सन्दद्र्भ। तृतीयां किरणावलीनाम्नीं उदयनाचार्यः ततान। चतुर्थीन्तु लीलावतीति ख्यातां श्रीवत्साचार्यो बबन्ध। तत्र कालस्यातिरिक्तद्रव्यत्वस्थापनावसरे या युक्तयः व्योमवत्यां उपवर्णितास्ता एव किरणावल्याम्, तात्पर्यटीकायाम्, कन्दल्याम्, लीलावत्याम् अनूदिताः परिष्कृताश्च। एवं वायुसद्भावप्रमाणविचारावसरे ये तर्काः व्योमवत्यां प्रतिपादिताः, ता एव कन्दल्यां दूषिता अनूदिताश्च। एवं व्योमवत्यां सृष्टिसंहारनिरूपणपरप्रशस्तपादभाष्यस्थस्य "वृत्तिलब्ध" पदस्य व्याख्यावसरे वृत्तिर्लब्धा यैरिति व्युत्पत्तिप्रदर्शनस्य यदसङ्गतत्वमुपवर्णितम्, तस्य खण्डनं कन्दल्यां दृश्यते। परन्तु उदयनाचार्यः किरणावल्याम् (p. 350 B.S. 200, किरणावलीप्रकाशे च वर्धमानः आचार्यशब्देन, कन्दलीकारः 'कश्चित्' 'एके' 'अन्ये' इत्यादिभिश्शब्दैः व्योमवतीकारं निर्दिशन्ति। तथा च प्रशस्तपादव्याख्यासु व्योमवती सर्वप्राचीनव्याख्येति ज्ञायते।

**व्योमवती—**

मुद्रितचेयं व्याख्या चौखम्बासंस्कृतग्रन्थमालायाम् (Ch. S.S. 61)। यद्यपि पठनपाठनप्रणाल्यां व्याख्येयं न प्रचलिता बहोः कालादनुपलब्धेः, तथापि इतरव्याख्यावत् गम्भीरा उत्कृष्टा च वरीवर्ति। वेदान्तिमतं सांख्यमतञ्च निराकुर्वत्यपीयं व्याख्या विशेषतस्सर्वत्र बौद्धमतमेव खण्डयन्ती प्रशस्तपादभाष्यव्याख्यापदेशेन बौद्धजैनमतखण्डनार्थमेव प्रवृत्तेव दृश्यते। कुमरिलभट्टम् (p. 579), प्राभाकरम्, (p 540) धर्मकीर्तिम् (p. 627), कादम्बरीम्, (p. 20) श्रीहर्षं देवकुलम् (p. 392), श्लोकवार्तिकम्, प्रमाणवार्तिकञ्च निर्दिशतीयं व्याख्या। मण्डनस्य अकलङ्कस्य च मोक्षविषयकमतं खण्डयति।

परीक्षाग्रन्थे सर्वत्र लक्षण - पदव्यावृत्ति-इतरभेदानुमान - प्रणालीप्रदर्शनपूर्वकं तत्तत्पदार्थसद्भावे प्रमाणादिविवेकः कृत इत्येषा रीतिराश्रिता। यद्यपि प्रशस्तपादभाष्यार्थसाधकानां प्रमाणानां प्रासङ्गिकार्थनाञ्च प्रतिपादनं इतरव्याख्यास्वपि दृश्यते तथापि व्योमवत्यां सृष्टिसंहारनिरूपणावसरे प्राप्तं ईश्वरानुमानादिवर्णनं किरणावली-न्यायकन्दलीभ्यां किञ्चित् विलक्षणं भाष्याक्षरार्थसङ्गतमेव दृश्यते।

यथा - सृष्टिसंहारनिरूपणावसरप्राप्तं ईश्वरानुमानादिवर्णनम् किरणावल्याम्—"स्यादेतत् सर्वमेतत् ईश्वरसिद्धौ सम्भवेत्, तत्सिद्धावेव किं प्रमाणमिति चेत्, तद्बहुत्वेऽपि किञ्चिदुच्यते शरीरानपेक्षं त्पत्तिकं बुद्धिमत्पूर्वकं कारणवत्वात् यत् कारणवत् तद्बुद्धिमत्पूर्वकं यथा रथः, तथा चैतत् तस्मात् बुद्धिमत्पूर्वकमिति।" कन्दल्याम् "किं पुनरीश्वरसद्भावे प्रमाणम्? आगमस्तावत्, अनुमानञ्च - महाभूतचतुष्टयं उपलब्धिमत्पूर्वकम्, कार्यत्वात्, यत् कार्यं तदुपलब्धिमत्पूर्वकं यथा घटः, कार्यञ्च महाभूतचतुष्टयं तस्मादुपलब्धिमत्पूर्वकम्" इति। परन्तु व्योमवत्याम्—"ननु सर्वमेतदसम्बद्धम्" ईश्वरसद्भावे प्रमाणाभावात्। तत्र अनुमानागमाभ्यां तत्सद्भावसिद्धेः, तथा चानुमानम् - क्षित्यादिषु सृष्टिसंहारौ कर्तृपूर्वकौ। अथ सृष्टिसंहारयोर्भूतेषु अप्रसिद्धेरनुमानाभाव इति चेत्—रचनावत्वेन तत्सिद्धेः इत्यादिना प्रकृतभाष्याक्षरार्थसङ्गतमेवानुमानं प्रदर्शितमिति विशेषस्संदृश्यते। क्वचित्तु व्याख्यान्तरवैलक्षण्येन भाष्यं व्योमवत्यां व्याख्यातम्—"एवं धर्मैर्विना धर्मिणामुद्देशः कृत" इति भाष्यटीकाग्रन्थे "अन्ये तु धर्मैस्सह धर्मिण उद्देशः कृतः। केनेति? विना पक्षिणा उलूकेन। सामान्यशब्दश्च विशेषे वर्तते प्रकरणादिति ब्रुवता" इत्यदिना उद्देशप्रकरणोपसंहारे तथाविधव्याख्यादर्शनात्।

सप्तपदार्थीकर्तारं व्योमवतीकर्तारञ्च केचन एकं वर्णयन्ति। परन्तु ग्रन्थद्वयपरिशीलनाज्ज्ञायते तयोरैक्यं असम्भवीति। सप्तपदार्थ्याम्—एकादशविधा दिक्, त्रिविधं सामान्यम्, सप्तविधं रूपम्, रूपरसयोरेव चित्रत्वम्, त्रिविधा अनुमितिः, त्रिविधम् लिङ्गम्, षड् हेत्वाभासाः, द्विविधं प्रत्यक्षानुमानरूपं प्रमाणम्, मिथ्याज्ञानकारणप्रध्वंससमानाधिकरणतत्कार्यसमस्तदुःखाभावो मोक्ष इति सिद्धान्तः वर्णिताः। परन्तु व्योमवत्याम्—दशविधा दिक्, द्विविधं सामान्यम्, रूपादि अविभुविशेषगुणाः, सर्वेषां चित्रत्वम्, द्विविधा अनुभूतिः, द्विविधं लिङ्गम्, पञ्चहेत्वाभासाः त्रिविधं-प्रत्यक्षानुमानशब्दरूपं प्रमाणम्, नवानां आत्मविशेषगुणानामत्यन्तोच्छेदो मोक्ष इति सिद्धान्ताः सप्तपदार्थीतो विरुद्धा उपवर्णिताः।

ईश्वरवादनिरूपणावसरे—"अयञ्चेश्वरवादोऽस्मद्गुरुचरणैर्विस्तरेणोक्त इति व्योमवत्यां (p. 308), (p. 565) निर्दिष्टम्। तस्मात् ज्ञायते व्योमवतीकारगुरुणापि कश्चिन्महान् ग्रन्थो लिखितस्स्यादिति।

अस्या व्योमवत्याः कर्ता व्योमशिवाचार्यः। अयं दाक्षिणात्यः शैवाचार्य इति बहवो वदन्ति। शिवादित्य इति पूर्वाश्रमे नामास्येति, शिवाद्वैतदर्पणस्य

पट्टावल्याः ज्ञायते । श्रीगुरुसिद्धचैतन्यशिवाचार्येण दीक्षाग्रहणान्ते व्योमशिवाचार्यं इति नाम प्रदत्तम् । अनेनैव एव व्योमवती निर्मिता । सप्तपदार्थी (लक्षणमाला) शिवाद्वैतसिद्धान्ते शक्तिमन्दोहश्च अस्य कृतीति वदन्ति । परन्तु शिवादित्यव्योमशिवयोः पूर्वोक्तसिद्धान्तगतभेदेन तयोरैक्यमसम्भवि । सप्तपदार्थी व्योमशिवाचार्यकृतिरिति बम्बई विश्वविद्यालयमातृकायामेव दृश्यते, अन्यत्र सर्वत्र शिवादित्यकृतिरित्येव दृश्यते । तस्मात् व्योमशिवशिवादित्ययरैक्ये न तत्प्रबलतरं प्रमाणं भवति । प्रत्युत निर्णयसागरमुद्रणालयमुद्रितायाः प्राचीनलेखमालायाः द्वितीये भागे (Vol. II p. p. 156-164) प्रकारान्तरेण प्रमाणानि दृश्यन्ते । व्योमशिवाचार्योऽयं वीरशैवमताचार्यः वीरशैवसन्यासो हृदयशिवस्य शिष्यः । हरिद्वारे राणिपद्रे च मठप्रतिष्ठापकस्य मत्तमयूराख्यस्य आचार्यस्य पञ्चम आचार्यः । गवलियरसमीपस्थमठाधिपतिः । शैवसांख्यन्याययवैशेषिकमीमांसाबौद्धजैनचार्वाकादिदर्शनप्रवीण इति अधो निर्दिष्टाद् पद्याज्ज्ञायते —

"सिद्धान्तेषु महेश एष नियतो न्यायेऽक्षपादो मुनिः
गम्भीरे च कणाशिनस्तु कणभुक् शास्त्रे श्रुतौ जैमिनिः ।
सांख्येऽनल्पमतिः स्वयञ्च कपिलो लोकायते सद्गुरुः
बुद्धौ बुद्धमते जिनोक्तिषु जिनः को वाथ नायं कृती ॥
संलीनं मुख एव शाक्यकारिणामत्यूर्ज्जितं गर्जितम्,
त्रासाद्यस्य च जैनजम्बुकशतैर्दुर्व्याहृतं संहृतम् ।
सोढं जातु न जैमिनीयहरिणैर्लीलकृतं हुङ्कृतम्
तस्यान्यद् गगनेश (व्योमशिव) काननपते किं स्यात् स्तुतं प्रस्तुतम् ॥ इति ।

कादम्बरी श्रीहर्षं देवकुलमिति च निर्दिशत्वयं हर्षवर्धनसामयिकस्स्यादिति (606–645 A. D.) केषाञ्चित् कल्पना । मण्डनस्य अकलङ्कस्य च मोक्षविषकमतखण्डनात् ताभ्यमुत्तरकालवर्ती (700–900 A. D)ति केषाञ्चिन्निर्णयः । अन्ये तु शब्दस्यातिरिक्तप्रमाणत्वस्वीकारः व्योमवत्यां वर्णितः । वैशेषिकास्तु प्रत्यक्षानुमानयोरेव प्रामाण्यं स्वीकुर्वन्ति इति ते प्रमाणद्वयवादिनः । परं व्योमशिवाचार्यः प्रमाणत्रयवादी इति वैशेषिकेषु नूतनसिद्धान्तारम्भकः । अस्य प्रमाणत्रयसिद्धान्तः शङ्करभगवता सर्वदर्शनसिद्धान्तसंग्रहे (श्लोकसंख्या 33. p. 22) निर्दिष्ट इति शङ्करादपि प्राचीन इति सूचयन्ति । परं प्रथमाध्याये श्लोकसंख्या 17 भगवत्पादप्रयोगः, पूर्वोत्तरमीमांसयोरैकशास्त्र्यस्वीकारश्च सर्वदर्शनसिद्धान्तसंग्रहस्य

शङ्करभगवत्पादकर्तृत्वे संशयमुत्पादयति । तस्मात् व्योमशिवः किरणावलीकारात् पूर्वतनः मण्डनादकलङ्काचार्वाचीन इत्येव वक्तव्यं भवति ।

## लीलावती

प्रशस्तपादीयपदार्थसंग्रहव्याख्यानामनिर्देशावसरे श्रीवत्साचार्यकृता लीलावत्यपि न्यायकन्दलीव्याख्यात्रा राजशेखरजैनेन निर्दिष्टा विद्यते । नैतावता कालेनापि श्रीवत्साचार्यकृता लीलावती लभ्यते । परन्तु उदयनाचार्यकृतायां न्यायवार्तिकटीकाव्याख्यायां परिशुद्ध्यां सरस्वतीभवनस्थायां 2-1-68 सूत्रव्याख्यानावसरे "यदूचे स्वयमेव" न पदं तदर्थो वा वाक्यार्थबोधे लिङ्गम्, तत्र सम्बन्धग्रहानपेक्षणात् इति श्रीवत्सः इति, एवं 3 1-27 सूत्रव्याख्यावसरे पञ्चभिः प्रकरणैरात्मा परीक्षितः । शरीरमिदानीं परीक्ष्यते — अत्र श्रीवत्सः इति, एवं 3-2-66 सूत्रव्याख्यावसरे, 5-2-11 सूत्रव्याख्यावसरे च "नित्यैर्मनःप्रभृतिभिरेवानैकान्तिकं तेषाम्, पुरुषगुणप्रेरितभूतपूर्वकत्वाभावेऽपि पुरुषार्थक्रियासमर्थत्वादिति श्रीवत्स इति दर्शनात् श्रीवत्साचार्य इति कश्चनासीदिति, तेन च कोऽपि ग्रन्थः कृतस्स्यादित्यूहितुमस्त्यवकाशः ।

एवं श्रीवत्स उदयनाचार्यस्य गुरुरित्यपि अप्रकाशितादपूर्णात् सरस्वतीमहालयस्थात्, सरस्वतीभवनस्थात् मिथिलानुसन्धानालयस्थाच्च उदयनाचार्यकृतात् परिशुद्धिग्रन्थस्य द्वितीयाध्यायात् ज्ञायते—तत्रहि

संशोध्य दर्शितरसा मरुकूपरूपाः
टीकाकृतः प्रथम एव गिरो गभीराः ।
तात्पर्यतो यदधुना पुनरुद्यमो नः
श्रीवत्सवत्सलतयैव तया तथापि ॥ (Mss. No. 6002)

इति दृश्यते । तत्र श्रीवत्सवत्सलतयैवेति कथनात् यत्र यत्र वाचस्पतिमिश्रः श्रीवत्साचार्याशयं खण्डयति तत्र तत्र उदयनाचार्यः श्रीवत्साचार्याशयं स्वयुक्त्या मण्डयति । परमेतत्तु विचित्रं दृश्यते यत् मुद्रितेऽमुद्रिते वा प्रथमाध्यायपरिशुद्धिग्रन्थे न पूर्वोक्तः श्लोको दृश्यते, परं द्वितीयाध्यायादारभ्यैव दृश्यते ।

केचित्तु "श्रीवत्स ! वत्सल ! तवैव कृपा तु कापि" इति पाठं स्वीकृत्य भगवतो विष्णोरेव स्मरणमनेन कृतम्, न तु श्रीवत्साख्यस्वगुरुस्मरणमिति

विवदन्ते। परं उदयनाचार्यः शिवभक्त इति प्रसिद्धिः। तस्मात् तत्रापि प्रबल-प्रमाणानुपपत्तिः।

सर्वथा न्यायवैशेषिकाचार्यः श्रीवत्साचार्य इति कश्चन आसीदिति, यस्य च कालः वाचस्पति - उदयनयोर्मध्यमः कालस्स्यादिति परं वक्तव्यं भवति। परमनेन कृता लीलावती वल्लभाचार्यकृतन्यायलीलावत्या सर्वथा भिन्नेति वक्तव्यं भवति। न्यायलीलावती न भाष्यव्याख्यारूपा परं स्वतन्त्रग्रन्थरूपेति ग्राह्यम्॥

प्रशस्तपादभाष्यव्याख्या – किरणावली –

व्याख्येयं क्षणभङ्गवादम्, परिणामवादम्, आरम्भारम्भकवादम्, सांख्य-वादम्, चार्वाकवादम्, अपोहवादम्, मीमांसकदुर्दुरूढांश्च खण्डयति। विभाग-निरूपणावसरे भासर्वज्ञं, संख्यानिरूपणावसरे भूषणकारमतञ्च निर्दिशन्तीयं व्याख्या द्रव्यविचारम्, गुणविचारञ्च भाष्यस्य प्रतीकग्रहणपूर्वकं कुर्वन्ती द्रव्यगुणविचारान्तं कलकत्तग्रन्थमालायां (B. I. S. 200) गैक्वार्डग्रन्थमालायाम्, (G. O. S. 154) संस्कारान्तञ्च मुद्रिता।

अस्या रचयिता तात्पर्यपरिशुद्धि—न्यायकुसुमाञ्जलि - आत्मतत्त्वविवेक-लक्षणावली - लक्षणमाला - न्यायपरिशिष्टापरनामकप्रबोधसिद्धिकारः मैथिलः दर्भङ्गा-समीपस्थकनकानदीतीरवर्तिमङ्गरौनीनामकग्रामे लब्धजन्मा तर्काम्बराङ्कप्रमितकालवासी (906 शक=984 A. D.) उदयनाचार्यः। उदयनाचार्येण शास्त्रार्थविचारे श्रीहर्षपिता हीरपण्डितः पराजितः, तदर्थं श्रीहर्षेण खण्डनखण्डखाद्ये उदयनः खण्डित इति कथापि प्रसिद्धा।

किरणावलीव्याख्या—प्रकाशः

मीमांसकानाम्, वेदान्तिनाम्, पाखण्डानाञ्च दर्शनं खण्डयन् ख्यातीर्नि-र्दिशन्, अन्वीक्षातत्वबोधम्, न्यायनिबन्धप्रकाशम्, आत्मतत्वविवेकम्, व्योम-शिवाचार्यम्, मेदिनीकारम्, बहुत्र स्थले अस्मत्पितृचरणाः गुरव इत्यादिशब्दैः ग्रन्थकर्तुः पितरं गङ्गेशोपाध्यायञ्च प्रमाणयन् अयं ग्रन्थः कलकत्ताग्रन्थमालायां (B. I. S. 200) द्रव्यगुणान्तं मुद्रितः।

अस्य रचयिता महामहोपाध्यायविरुदभूषितः पितुर्गङ्गेशोपाध्यायादेवाधीत-शास्त्रः काश्यपगोत्रजः सुनदहरिशर्मणोरग्रजः प्रकाशकार इति प्रसिद्धः न्याय-

वैशेषिकप्रस्थानारम्भकः चतुर्दशशतकीयः (1400 A. D.) तत्वचिन्तामणिकर्तुर्गङ्गेशोपाध्यायस्य ज्येष्ठपुत्रो वर्धमानोपाध्यायः।

किरणावलीप्रकाशव्याख्याः—महादेवमिश्रपुत्रेण हरिमिश्रशिष्येण मैथिलेन पक्षधरमिश्रेण रचितेयं विवेकाख्या व्याख्या अमुद्रिता लन्दननगरस्थभारतकार्यालयपुस्तकालये विद्यते। एवं किरणावलीप्रकाशव्याख्या विवृतिरिति ख्याता देवदत्तरेणुकादेव्योः पुत्रेण पक्षधरशिष्येण शक्तिधरमतिदत्तयोर्भ्रात्रा मैथिलेन रुचिदत्तमिश्रेण कृता द्रव्यगुणान्तं मुद्रिता (B. I. S. 200)। भावप्रकाशिकाख्या किरणावलीप्रकाशव्याख्या द्रव्यभागव्याख्यात्मिका चन्द्रपतिश्रीधरयोः पुत्रेण महादेवभट्टदामोदरभट्टपूर्वजेन पक्षधरमिश्रशिष्येण वासुदेवसार्वभौमसामयिकेन मेवठक्कुरापरनाम्ना भगीरथठक्कुरेण शशिद्वययुगसायकचन्द्रमिते शकाब्दे (1511 शक 1588 A.D.) रचिता दर्भङ्गासंस्कृतपुस्तकालये लभ्यते वाराणसीविश्वविद्यालयेन (BSS 50) प्रकाशिता च। एवं काश्यपगोत्रजस्य श्रीरामतर्कालङ्कारस्य पुत्रेण पितू रघुनाथशिरोमणेश्चाधीतशास्त्रेण बौद्धाधिकार-सिद्धान्तरहस्यादीनां कर्त्रा रहस्यकार इति प्रसिद्धेन मथुरानाथतर्कवागीशेन (1600 A. D.) कृता काचन किरणावलीप्रकाशव्याख्या रहस्याख्या अमुद्रिता शान्तिपुरपुस्तकालये लभ्यते। वङ्गदेशजेन वासुदेवसार्वभौमान्तेवासिना गोविन्दसीतादेव्योः पुत्रेण दीधितिकार इति प्रसिद्धेन रघुनाथशिरोमणिना कृता (1475 A.D.) काचन किरणावलीप्रकाशव्याख्या दीधितिनाम्नी सरस्वतीभवनग्रन्थमालायां (S. B. T. 38) मुद्रिता, गुणप्रकाशविवृतिरिति गुणदीधितिरिति च नामान्तमस्येति ज्ञायते। दीधितेरपि मथुरानाथेन कृता रहस्याख्या व्याख्या लहूरराधाकृष्णसूच्याम्, रामभद्रशिष्येण जयरामन्यायपञ्चाननेन (1657 A.D) कृता विवृत्याख्या किरणावलीदीधितिव्याख्या अमुद्रिता वाराणसीपुस्तकालये, रघुनाथशिरोमणिशिष्येण देवीदासपुत्रेण मैथिलेन रामकृष्णभट्टाचार्येण (1700 A. D.) कृता काचन किरणावलीप्रकाशदीधितिव्याख्या प्रकाशाख्या अमुद्रिता लन्दनपुस्तकालये कलकत्ताआसियाटिकपुस्तकालये च, काशीवासिना विद्यानिवासज्येष्ठपुत्रेण आलोकतत्त्वचिन्तामणिदीधिति - कुसुमाञ्जलिकारिका - नञ्वाद-पदार्थ - खण्डन - लीलावतीप्रकाशादीनां व्याख्यात्रा वादपरिच्छेदकर्त्रा परीक्षाकार इति प्रसिद्धेन रुद्रन्यायवाचस्पतिना (1700 A.D.) कृता अपरा किरणावलीप्रकाशदीधितिव्याख्या परीक्षाख्या अमुद्रिता बीकानेरमहाराजपुस्तकालये लभ्यते। एवं मधुसूदनठक्कुरशिष्येण गौडीयेन गुणानन्देन कृता

काचन किरणावलीप्रकाशव्याख्या तात्पर्यसन्दर्भाख्या गोपिनाथकविराजेन निर्दिष्टा परं प्राप्तिस्थानादि न निर्दिष्टम्, लन्दनगरस्थपुस्तकालये लभ्यत इति ज्ञायते।

किरणावलीव्याख्याः—रससारः आत्मविचारावसरे श्रीवराचार्यम्, पृथ्वी निरूपणावसरे भूषणकारञ्च निर्दिशन् किरणावलीगुणखण्डस्य व्याख्यात्मकः ग्रन्थः (B.I.S. 200) रायल आसियाटिककलकत्तायाम्, सरस्वतीभवन-ग्रन्थमालायाञ्च (S. B. T. 5.) मुद्रितः। अस्य रचयिता महाविद्याविडम्बन-काणादसुत्रनिबन्धन - लक्षणावलीव्याख्यादिकर्त्ता योगीश्वरशिष्यः भट्टराघवगुरुः शङ्करकिङ्कर इति प्रसिद्धः (1200-1300 A.D.) त्रयोदश शतकीयः वादीन्द्र इति ज्ञायते। रामतर्कालङ्कारपुत्रेण रघुनाथशिरोमणिशिष्येण तत्त्वचिन्तामणिव्याख्यात्रा मथुरानाथतर्कवागीशेन (1600 A. D.) कृता काचन रहस्याख्या किरणावली-व्याख्या अमुद्रिता कलकत्तासंस्कृतकलाशालापुस्तकालये लभ्यते। न्यायरहस्यकर्त्रा जगदीशभट्टाचार्यगुरुणा भवनाथपुत्रेण रामभद्रसावभौमेन रचिता काचन किरणावली-गुणखण्डव्याख्या रहस्याख्या अमुद्रिता तञ्जपुरसरस्वतीमहालयपुस्तकालये लभ्यते। अस्या अपि माधवदेवभट्टाचार्येण (1700 A. D.) रचिता सारमञ्जर्या-ख्या व्याख्या वाराणस्याममुद्रितोपलभ्यते। सारमञ्जर्या अपि व्याख्या लक्ष्मण-शिष्येण केनचिदज्ञातनाम्ना रचिता अमुद्रिता तञ्जपुरपुस्तकालये लभ्यते। एवं हरिरामतर्कवागीशशिष्येण मणिदीधितिव्याख्यात्रा रघुदेवन्यायालङ्कारेण (1650 A.D.) कृता काचन द्रव्यकिरणावलीव्याख्या सारमङ्ग्रहाख्या अमुद्रिता पूरी-शङ्कराचार्यमठपुस्तकालये लभ्यते। पक्षधरशिष्येण देवदत्तरेणुकादेव्योः पुत्रेण तत्वचिन्तामणिव्याख्याप्रकाशकर्त्रा रुचिदत्तमिश्रेण कृता काचन किरणावलीव्याख्या मकरन्दाख्या कलकत्तायां (B.I. 200) मुद्रिता। तार्किकरक्षाकर्त्रा वरदराजेन कृता काचन किरणावलीव्याख्या (न्यायदीपिका इति स्यात्) अलहाबादसूच्यां राधाकृष्णसूच्याञ्च दृश्यते। रङ्गनाथकमलाम्बयोः पुत्रेण गादाधरीव्याख्याकर्षिका-जागदीशीव्याख्या-मञ्जूषाकर्त्रा कृष्णभट्टेन कृता काचन किरणवलीव्याख्या बनारसमुद्रितपश्चिमोत्तरदिशास्थत्रय्यकपुस्तकालयसूच्यां दृश्यते। चन्द्रशेखर-भारतीस्वामिना शृङ्गगिरिपीठाचार्येण कृता काचन शब्दविवेचनाख्या किरणावली-व्याख्या शृङ्गगिरमठपुस्तकालयसूच्यां दृश्यते। बलभद्रमिश्रपुत्रेण आलोक-व्याख्यात्रा पद्मनाभमिश्रेण कृता काचन किरणावलीव्याख्या भास्कराख्या सरस्व-तीभवनग्रन्थमालायां (S.B.1. 1) मुद्रिता या मूलग्रन्थावबोधने बहूपकरोति।

## किरणावलीपरम्परा

प्रशस्तपादभाष्यम्

किरणावली

- न्यायदीपिका
- प्रकाशः
  - तात्पर्यसन्दर्भः
  - दीधितिः
    - परीक्षा
    - प्रकाशः
    - रहस्य
    - विवृतिः
  - भावप्रकाशिका
  - रहस्य
  - विवृतिः
  - विवेकः
- भास्करः
- मकरन्दः
- रहस्य
- रहस्य
  - सारमञ्जरी
    - व्याख्या
- रससारः
- व्याख्या
- शब्दविवेचना
- सारसंग्रहः

प्रशस्तपादीयपदार्थसंग्रहव्याख्या—न्यायकन्दली

अतिमधुरया गम्भीरया विचारपूर्णया च शैल्या निबद्धेयं व्याख्या न्यायकन्दल्याख्या मूलकाराशयं संग्रहेणावबोधयन्ती पश्चात्तनानां वैशेषिकग्रन्थस्थानां न्यायवैशेषिकग्रन्थस्थानां च विचाराणां उद्गमस्थानं भवति ।

" कणादकृतमूलदृब्धा प्रशस्तपादद्रुमावबद्धा च ।
श्रीधरहृदयोपवने विलसन्ती न्यायकन्दली रम्या ॥" इति

प्रसिद्धिरपि ग्रन्थस्यास्य महत्तां सूचयति । मङ्गलश्लोकस्थमुनिशब्दार्थविचारावसरे "शुद्धात्मज्ञानप्रदीपक्षपिततमसं अत्युग्रतपसं साक्षादशेषतत्त्वावबोधयुक्तं पुरुषविशेषं मुनिमिति" प्रतिपादयन्तीयं व्याख्या वैशेषिकदर्शनसाहित्ये महान्तं स्थानमर्हति। महोदयशब्दार्थविचारप्रसंगात् मोक्षविषयकनानामतखण्डनम्, आत्यन्तिकी अहित-निवृत्तिरेव महोदयपदार्थ इति सिद्धान्तः, न केवलं कार्येऽर्थे एव शब्दानां प्रामाण्यम्, परन्तु सिद्धेऽपीति सिद्धान्तश्च व्याख्यायाः गौरवगरिमां अतीवोद्बोधयति ।

नामधेयेन पदार्थानां अभिधानमुद्देशः, उद्दिष्टस्य स्वपरजातीयव्यावर्तको धर्मो लक्षणम्, लक्षितस्य यथालक्षणं विचारः परीक्षा इति व्युत्पादयन्तीयं व्याख्या द्रव्यादिपदार्थोद्देशक्रमनियमे युक्तिम् (p. 7), द्रव्यत्वगुणत्वादीनां सत्तापेक्षया अल्पविषयत्वात् अपरजातित्वम् (p. 12) पदार्थानां सामान्यविशेषलक्षणानि च वर्णयन्ती (p. 15) पठितॄणां व्युत्पादिका दृश्यते । तमोविचारावसरे रूपसंख्यापरिमाणपृथक्त्वपरत्वापरत्वसंयोगविभागवत् द्रव्यान्तरं तम अस्तीति पूर्वपक्षम्, तमस अतिरिक्तपदार्थत्वखण्डनाय कैश्चिदुपवर्णिता युक्तीरनूद्य तासु दोषप्रदर्शनपूर्वकं रूपविशेषोऽयं अत्यन्तं तेजोऽभावे सति सर्वतस्समारोपितस्तम इति प्रतीयते इति विशदय्य तमसो भाऽभावरूपत्वमेव न केवलमभावरूपत्वमिति सिद्धान्तमुपवर्ण्य न वयमन्धकारस्य प्रत्यर्थिनः, किन्तु आरम्भकानुपपत्तेर्नीलिममात्रप्रतीतेश्च द्रव्यमिदं न भवतीति ब्रूम इति वदन् अन्धकारविषये स्वीयं विलक्षणं मतं प्रदर्शयति (p. 9 & p. 23)

एवं देशकालयोस्सर्वोत्पत्तिनिमित्तत्वसिद्धान्तः (p. 25), सुवर्णस्य तैजसत्ववर्णनम् (p. 26), चित्ररूपस्वीकारे युक्तिवर्णनम् (p. 30), परमाणुसद्भावे

प्रमाणकथनम् (p. 31), अयोनिजशरीरस्य शुक्रशोणितसम्बन्धाजन्यत्वकथनम् (p. 33), घ्राणेन्द्रियस्वीकारे तस्य पार्थिवत्वे च प्रमाणवर्णनम् (p. 35), जलस्य शुक्लरूपादिमत्वे गन्धशून्यत्वे च (p. 29, & p. 37) युक्तिकथनम्, चक्षुषस्तैजसत्वकथनम् (p. 40), त्वगिन्द्रियस्य वायुत्वस्थापनम् (p. 45), वायोरप्रत्यक्षत्वकथनपूर्वकं अनुमानेन साधनम् (p. 46), मनोनिरूपणप्रसंगे ज्ञानज्ञेयज्ञातृरूपत्रिपुटीप्रत्यक्षतावादनिराकरणम् (p. 91), गुणस्य निर्गुणत्वे निष्क्रियत्वे च युक्तिकथनम् (p. 94), ज्ञानेन स्वोत्पत्यनन्तरं अर्थे ज्ञातता नाम काचिदवस्था जन्यत इति ज्ञाततावादखण्डनम् (p. 96), बुद्धेरन्तःकरणाग्राह्यत्वमतदूषणम् (p. 96), ज्ञानस्य विषयसंवेदनानुमेयत्वखण्डनपूर्वकं आत्मसमवेतत्वव्यवस्थापनम् (p. 97), तर्कज्ञानस्य संशयविपर्ययअनध्यवसायस्वप्नात्मिकास्वविद्यास्वन्तर्भावविचारः (p. 103), रूपद्रव्ययोस्तादात्म्यवादनिराकरणम् (p. 104), पिठरपाकवादनिराकरणपूर्वकं पीलुपाकवादपरिष्कारः (p. 109), सुरभि चन्दनमित्यादौ विशेषणविशेष्ययोरेकज्ञानालम्बनत्ववादिमतखण्डनम् (p. 116), द्वित्वसद्भावे विप्रतिपन्नानां जैनतार्किकाणां मतखण्डनम् (p. 122), विविधविप्रतिपत्तिनिरासपूर्वकं शब्दस्यार्थप्रतिपादकत्ववर्णनम् (p. 132), परिमाणस्य द्रव्यातिरिक्तत्वसमर्थनम् (p. 133), परमाणुपरिमाणाभ्यामेव द्व्यणुके परिमाणोत्पत्तिरिति मतखण्डनम् (p. 137), शक्तेः पदार्थान्तरत्वखण्डनम् (p. 144), भावस्याभावकार्यत्वे उत्थापितानां विप्रतिपत्तीनां दूषणम् (p. 145), प्रत्यक्षानुमानयोर्विरोधे बलाबलविचारः (p. 158) विपर्ययास्वीकर्तृमतखण्डनम् (p. 180), शुक्तिरजतप्रतीतेर्लौकिकविषयकत्वनिरासः (p. 181), कर्मप्रत्यक्षे संभावितानां विप्रतिपत्तीनां निरासः (p. 194), अभावस्य पृथगनुपदेशो भावपारतन्त्र्यात् न त्वभावादिति अभावपदार्थस्वीकारनिर्देशः, तस्यानुमानेऽन्तर्भावकथनम् (p. 225), पदानामर्थबोधकत्वप्रकारकथनम् (p. 232), दोषनिरसनपूर्वकं परार्थानुमानस्वीकारे युक्तिकथनम् (p. 233), गुरुत्वस्य त्वगिन्द्रियग्राह्यतावादखण्डनम् (p. 264), मुक्तिक्रमनिरूपणम् (p. 278) मुक्तेर्ज्ञानमात्रजन्यत्वम् ? अथवा कर्मसमुच्चितज्ञानजन्यत्वं वेति विचार्य ज्ञानकर्मसमुच्चयान्मोक्ष इति सिद्धान्तस्थापनम् (pp. 281—283), विहितनित्यकर्मणामकरणे प्रत्यवायोत्पत्तिकथनम् (p. 283), विपरीतानुमाने दोषप्रदर्शनपूर्वकं योगिनामतीन्द्रियार्थज्ञानसाधनम् (p. 297) इत्यादयो विषया अस्या व्याख्यायाः वैशिष्ट्यं प्रतिपादयन्ति ।

एवं आत्मपरीक्षास्थले आत्मनः क्षणिकत्ववादं (p· 73), आत्मैकत्ववादं च (p· 86) निरस्य आत्मनित्यत्वे अनिर्मोक्षाभावप्रकारमुपपाद्य (p· 89), आत्मनस्स्वाभाविकचिदात्मकत्वसिद्धान्तः (p· 287), एवं ईश्वरस्य क्लृप्तद्रव्यान्तर्गतत्ववर्णनम् (p· 80), ईश्वरे प्रमाणवर्णनम् (p· 44), ईश्वरस्य एकात्वानेकत्व नित्यमुक्तत्वविचारः ईश्वरस्याष्टगुणाधिकरणत्वषड्गुणाधिकरणत्वविचारः (p· 57) एवं तेजोनिरूपणावसरे अवयवातिरिक्तावयविस्वीकारे युक्तिकथनम् (p· 41), अवयविगुरुत्वाभाववादखण्डनम् (p· 264), एवं धर्मस्वीकारे युक्तिवर्णनम् (p· 273), धर्मस्य विनाशप्रकारवर्णनं (p· 275), एवं द्वित्वस्य बुद्धिजत्वम्, द्वित्वसामान्योत्पत्तौ प्रमाणञ्च (p· 116), तीमे विषया व्याख्याया अस्या गाम्भीर्यं प्रतिपादयन्ति।

महोदयशब्दार्थविचारे जैनानां बौद्धानाम्, संख्यानिरूपणप्रसंगे विज्ञानवादिबौद्धानाम् (p· 114), अनुमाननिरूपणावसरे सौगतानां (p·p· 206–207 276), संयोगनिरूपणावसरे अन्यत्र च सांख्योक्तसत्कार्यवादस्य (p·p· 143, 243) सुखस्य दुःखाभावरूपतावादिनाम् (p· 260) वाक्यार्थप्रत्यायकत्वे स्फोटवादिनाञ्च (p· p· 268–270) सिद्धान्ताः खण्डिता विद्यन्ते।

ग्रन्थेऽस्मिन् काष्मीरबौद्धः धर्मोत्तरः, (p· 76) न्यायवार्तिककार उद्योतकरः (p· 28) मण्डनमिश्रः, (p· 6) अद्वयसिद्धिः, (p· 5) स्फोटसिद्धिः, (p· 270)ब्रह्मसिद्धिः, (p· 218) विभ्रमविवेकः (p· 256) तत्वप्रबोधः, (p·146) तत्वसंवादिनी, (p· 82) काञ्च्यां त्रिभुवनतिलको राजा, (p· 6) पाण्डुदास (p· 331) इत्येते आचार्याः ग्रन्था व्यक्तयश्च निर्दिष्टा विद्यन्ते।

संग्रहटीका इत्यस्या एव व्याख्याया नामान्तरम्। एतच्च ग्रन्थकारेणैव विभागनिरूपणावसरे निर्दिष्टम्–"कृतं ग्रन्थविस्तरेण संग्रहटीकायाम्" (p·p· 117, 159) इति। एतेन संग्रहटीका नाम काचन टीका ग्रन्थकारेण निर्दिष्टा या नेदानीं लभ्यत इति केषाञ्चित् विमर्शः परास्तः।

मुद्रितेयं व्याख्या विजयनगरसंस्कृतग्रन्थमालायाम् (V.S.S. 6) एवं गङ्गानाथझाग्रन्थमालायाञ्च (G. J. G. 1)।

व्याख्याया अस्याः कर्ता गौडदेशीयराढापुरीदक्षिणभागस्थभूरिसृष्टिग्रामवासी बलदेव-अच्छोकाम्बयोः पुत्रः श्रीधराचार्य इति ग्रन्थाज्ज्ञायते । त्र्यधिकदशोत्तर नवशतकशकाब्दे पाण्डुदासप्रेरणया रचितेयं व्याख्येति ग्रन्थान्ते दर्शनाद् दशमशतकोऽस्य काल (991. A.D.) इति ज्ञायते । तत्वप्रबोधः तत्वसंवादिनी अद्वयसिद्धिश्चेति ग्रन्था अनेन रचिता इति (p. p. 5, 82, 146) ज्ञायते । परन्तु हन्त कुत्रापि न लभ्यन्ते ।

**न्यायकन्दलीव्याख्या :—** त्रयोदशशतकीयेन ( 1300 A.D. ) नरचन्द्रसूरिणा जैनेन कृता काचन **न्यायकन्दलीटिप्पणीति** प्रसिद्धा न्याययन्दलीव्याख्या 2500 पद्यैः पूर्णा आसीदिति जिनरत्नकोशे (G. O. S. 154 p. 28) निर्दिष्टा । एवं पञ्जिकाख्या न्यायकन्दलीव्याख्या राजशेखरसूरिणा चतुर्दशशतकीयेन (1400 A. D.) कृतेति तत्रैव जिनरत्नकोशे निर्दिष्टा बम्बई विश्वविद्यालयहस्तलिखितपुस्तकसूच्यां दृश्यते च । एवं बलभद्रविजयश्रियोः पुत्रेण न्यायबोधिनीकर्तुर्गोवर्धनमिश्रस्य ज्येष्ठभ्रात्रा पद्मनाभमिश्रेण (1600 A.D.) कृता काचन कन्दलीसाराख्या व्याख्या आसीदिति (V. S. S. 6. p. 4) ज्ञायते । हन्त परं प्राप्तिस्थानादि तु न लभ्यते ॥ एवं चण्डमुनीश्वरकृता काचन व्याख्या बन्दरगारानुसन्धानसमित्यां, प्रतिवादिभयङ्कराख्येनान्येन कृता काचन कन्दलीवृत्याख्या व्याख्या रैससूच्यां अन्या काचन व्याख्या बालेन्द्रकृता बम्बईप्रान्तसूच्याञ्च दृश्यते ।

**न्यायकन्दलीपरम्परा**

प्रशस्तपादभाष्यम्

**न्यायकन्दली**




प्रशस्तपादभाष्यव्याख्या—शालिकनाथीया

मीमांसातन्त्रे प्राभाकरमतानुयायिना ऋजुविमला-दीपिका-प्रकरणपञ्चिका-भाष्यपरिशिष्टादिकर्त्रा सप्तमाष्टमशतकान्तर्वर्तिना (690–760 A.D.) शालिकनाथेन

काचन प्रशस्तपादभाष्यव्याख्या कृतेति तर्कभाषाव्याख्याकारश्चिन्नभट्टो "शालिकनाथः प्रशस्तपादभाष्यव्याख्याने न्यरूपयत्" इति तर्कभाषाव्याख्याप्रकाशिकायां (p. 211) बम्बईसंस्कृतप्राकृतग्रन्थमालाप्रकाशितायां निर्दिशति। एवं तार्किकरक्षाव्याख्यायां मल्लिनाथकृतायां निष्कण्टकायां बहुषुस्थलेषु (p. p. 9, 20, 22, 30, 92, 113, 137.) शालिका नाम कश्चन ग्रन्थः अनूदितः। क्वचित् तत्सिद्धान्तं प्रमाणयति, क्वचित् तत्सिद्धान्तखण्डनपरतया तार्किकरक्षां अवतारयति। किमयं ग्रन्थः शालिकनाथीयः स्याद्वेति संशयस्याप्यस्ति अवकाशः।

प्रशस्तपादभाष्यव्याख्या—पदार्थनिर्णयप्रवेशटीका

काशीसंस्कृतग्रन्थमालामुद्रितायां परात्रिंशतिकावृत्त्यां (p. 162) अभिनवगुप्तकृतपदार्थप्रवेशनिर्णयटीकाया निर्देशो विद्यते। न्यायकन्दल्यादौ पदार्थप्रवेशशब्देन पदार्थधर्मसंग्रह एवासकृदभिधीयते। ततश्च पदार्थप्रवेशनिर्णयटीकानाम्नी काचन पदार्थधर्मसंग्रहव्याख्या अभिनवगुप्ताचार्यकृता आसीदिति मिथिलाविद्यापीठग्रन्थमालाया पञ्चमात् पुष्पात् (p. 25 Mithila. 5) ज्ञायते। परं पदार्थप्रवेशनिर्णय इति प्रशस्तपादभाष्यस्य नाम न श्रूयते। केवलं पदार्थप्रवेश इत्येव नाम निर्दिष्टम्। ततश्च पदार्थप्रवेशनिर्णय इति काचन अन्या कृतिरेव स्यात् यस्याः व्याख्या अभिनवगुप्तकृता स्यादिति कल्पनाया अप्यवकाशोऽस्ति। मातृकारूपेणापि कुत्रापि ग्रन्थस्यास्य सत्ता न ज्ञायते। ततश्च प्रबलतरप्रमाणानुपलब्धिस्तत्र संशयमुत्पादयति।

प्रशस्तपादभाष्यव्याख्या—भाष्यनिकषः (निष्कण्टका)

पदवाक्यप्रमाणपारावारपारीणेन अन्ध्रदेशजेन प्रौढदेवरायकालीनेन (1416 A.D.) पेद्दयार्य (गिरिनाथ)—प्रतापरुद्रीयव्याख्याकारकुमारस्वामिनोःपित्रा अमरकोश-कालिदासीयकाव्य - एकावली - काव्यादर्श - किरातार्जुनीय - तन्त्रवार्तिक-तार्किकरक्षा - नलोदय - नैषधीयचरित - भट्टिकाव्य - लघुशब्देन्दुशेखर - शिशुपालवधादीनां व्याख्यात्रा कोलाचलमल्लिनाथसूरिणा कृता काचन प्रशस्तपादभाष्यव्याख्या भाष्यनिकषाख्या व्याख्या कृतेति मल्लिनाथकृताया तार्किकरक्षाव्याख्याः निष्कण्टकाया एव ज्ञायते। (pp. 76, 139, Pandit Serie) मुद्रितायां अस्यां व्याख्यायां प्रशस्तपादीयव्याख्याया नाम निष्कण्टका इत्येव दृश्यते। न

तु भाष्यनिकष इति । तस्यामेव व्याख्यायां (p. p. 142, 148) निकषोऽपि निर्दिष्टः ।

प्रशस्तपादभाष्यव्याख्या—कणादरहस्यम्

द्रव्यगुणकर्मसामान्यविशेषसमवायाख्यान् षडेव पदार्थान् वर्णयन्तीयं व्याख्या प्रशस्तपादभाष्यव्याख्याछलेन काणादसिद्धान्तं वर्णयन्ती वादिविनोदकिरणावली-निरुक्तिप्रकाश-लीलावती-मणिमयूखादीन् ग्रन्थान् निर्दिशति । पण्डितग्रन्थमालायां काशीग्रन्थमालायां कलकत्तायाञ्च (B.I.S. 34, K.S.S. 3, C.S.S. 48) मुद्रिता । व्याख्याया अस्याः कर्ता भवनाथभवान्योः पुत्रः जीवनाथभ्रातृव्यः रघुदेवन्यायालंकारशिष्यः मैथिलः कणादापरनामा उपस्कारादिकर्ता शङ्करमिश्रः (1400—1500 A.D.) इति ज्ञायते ।

प्रशस्तपादभाष्यव्याख्या—भाष्यसूक्तिः

किरणावलीमेवादर्शीकृत्य बहुत्र स्थलेषु किरणावलीवाक्यानि निर्दिशन्ती स्थलविशेषेषु रहस्यार्थप्रकाशनपरा मूलभाष्याक्षरार्थव्याख्यानपरा चेयं सूक्त्याख्या व्याख्या द्रव्यान्ता एव लभ्यते मुद्रिता च वाराणस्याम् (C. S. S. 61) । भाष्यार्थावबोधनपरेयं व्याख्या वार्तिकत्वेन प्रसिद्धा । अस्याः कर्ता सनातनिमिश्रवटेश्वरमिश्रप्रपौत्रः माधवमिश्रपौत्रः यादवविद्यावागीशद्वितीयपुत्रः रघुनाथरुद्रेश्वरयोः पिता रामभद्रसिद्धान्तवागीशपितामहः भवानन्दरामभद्रसार्वभौमयोश्शिष्यः यजुर्वेदी काश्यपगोत्रजः मैथिलः शब्दशक्तिप्रकाशिकातर्कामृतादिकर्ता जगदीशभट्टाचार्य (1600 A.D.) इति ज्ञायते । कालीपदतर्काचार्यकृता सूक्तिदीपिकाख्या काचन व्याख्यापि वाराणस्यां मुद्रिता ।

प्रशस्तपादभाष्यव्याख्या—सेतुः

किरणावलीमेवादर्शीकृत्य विरचितेयं व्याख्येति ' उदयनकृतिपरप्राप्तये सेतुरुच्चैः " इति वाक्याज् ज्ञायते । क्वचित् श्रीधराचार्यमतं खण्डयितुं न्यायकन्दल्यपि अवलम्बिता दृश्यते (p. 3,) । क्वचित्प्राचीनव्याख्यानानां भाष्याननुसारित्वात् तानि दूषयित्वा भाष्यानुगामिव्याख्यानमपि कृतम् । मङ्गलतत्त्वविचारः (p. 8) उपसर्गशक्तिविचारः (p. 3) च चिन्तामणिमतस्य च संवादपूर्वकं सम्यक् निबद्धौ दृश्येते । मुक्तौ ज्ञानकर्मणोर्वैकल्पिककारणताखण्डनम् (p. 21) सांख्य-

स्वीकृतमुक्तिनिरासः (p. 23) नित्यसुखाभिव्यक्तिर्मुक्तिरिति मीमांसकमतनिरासः (p. 25) आलोकज्ञानाभावस्तम इति प्रभाकरमतखण्डनम् (p. 42) आरोपितं नीलं रूपं तम इति कन्दलीकारमतखण्डनमण्डने (p. 40-41) प्रौढप्रकाशयावत्तेजोऽभाव एव तम इति प्रगल्भाचार्यलक्षणपरीक्षणम् (p. 43) वर्धमानोक्तविशेषगुणशब्दार्थखण्डनम् (p. 164) सेतुकारपितृचरणमतम् (p. 60) अभावविचारः (p. 61) व्यञ्जनावृत्तिविचारः (p. 81) इत्यादयो बहवो विचाराः प्रसङ्गात् विचारिताः। मुद्रितेयं व्याख्या चौखाम्बासंस्कृतमालायाम् (C. S. S. 61)।

व्याख्याया अस्याः कर्ता सर्वतन्त्रस्वतन्त्रः बलभद्रविजयश्रियोः पुत्रः विश्वनाथानुजः वीरवरीयराजपोषितः अलङ्कारभास्कर–काव्यप्रकाशप्रकाश–शारदागममनोरमा–एकावलीविवरण–वीरभद्रचम्पूः, न्यायकन्दलीसारादिकर्ता प्रद्योतनभट्टापरनामा षोडशशतकीय (1600 A. D.) पद्मनाभमिश्र इति ज्ञायते।

प्रशस्तपादभाष्यव्याख्या—भिक्षुवार्तिकम्

ब्रह्ममीमांसाभाष्य-योगसारसंग्रह-ईश्वरगीताभाष्य-प्रश्नोपनिषदालोकानां कर्त्रा अष्टादशशतकारपूर्ववर्तिना (1719 A. D.) ज्ञानकर्मसमुच्चयवादिना विज्ञानभिक्षुणा कृता काचन भिक्षुवार्तिकाख्या प्रशस्तपादभाष्यव्याख्या षट्सहस्रश्लोकपरिमिता आसीदिति ज्ञायते। यस्याः प्रारम्भे

"जिज्ञासूनां हितार्थं परमकरुणया यत्प्रणीतं सुबोधम्
भूयोभिर्दुर्निबन्धैः परमिह कणभुक्तन्त्रमाच्छादितं यत्।
सम्यग्बोधाय नालं भवति मतिमतां क्लेशनिर्वृत्तिकामो
भूयो विज्ञानभिक्षुः [घटयति] कुतुकात् वार्तिकेनाधुना तत्॥"

"कणभक्षमुनेस्तन्त्रे यतिविज्ञानभिक्षुणा।
प्रशस्तभाष्यव्याख्यानव्याजेनाकारि वार्तिकम्॥"

इत्यन्ते च दृश्यते (p. VII T. P. H. oriental S. No. 10) दृश्यते। प्राप्तिस्थानन्तु न ज्ञायते।

प्रशस्तपादभाष्यव्याख्या—विवरणम्

गौरीकान्तसार्वभौमभट्टाचार्येण (1700 A. D.) कृतेयं व्याख्या नोपलभ्यते परं अदसीये वाराणसी संस्कृतकलाशालापुस्तकालयस्थे अमुद्रिते तर्कभाषाव्याख्याने भावार्थदीपिकायां (Mss. No. 56 fol. 3. b) निर्दिष्टा ।

प्रशस्तपादभाष्यव्याख्या अन्याश्च काश्चन सन्ति । मीमांसापण्डितस्य जगन्नाथमिश्रस्य पुत्रेण गोपीनाथमिश्रेण कृता काचन भाष्यभावप्रकाशाख्या व्याख्या अमुद्रिता मद्रपुरीपुस्तकालये विद्यते । एवं चन्द्रकान्ततर्कालङ्कारकृताया अभिनवभाष्याख्यवृत्त्याः समालोचनपरा तर्कालङ्कारभाष्यपरीक्षाख्या व्याख्या प्रशस्तभाष्यसमालोचनाख्या च व्याख्या विशेषसमवायकालदिक्शक्तिलघुत्वादि· विषयेषु प्रशस्तपादाभाष्याशयं विवृण्वती सूत्रार्थनिर्देशपूर्वकं अभावपदार्थं साधयन्तीयं व्याख्या वाराणस्यां मुद्रिता ( C. S. S. 48 ) । भाष्यस्यास्य कर्ता तु न ज्ञायते परन्तु आधुनिक एव कोऽपि एकोनविंशतिशतकीय इति ज्ञायते ।




न्यायलीलावती—

वैशेषिकसिद्धान्तप्रदर्शनपरोऽयं ग्रन्थस्स्वतन्त्रः । प्रशस्तपादभाष्यार्थसंग्राहकोऽपि न प्रतीकग्रहणपूर्वकं व्याख्यां करोति । परं तत्र तत्र स्वतन्त्रयुक्त्या विषयान् विवेचयन्, पदार्थानां वैधर्म्यसाधर्म्यप्रक्रियाख्यान् भाष्यानुक्तान् विषयान् वर्णयन्

स्वस्य ग्रन्थान्तरवैलक्षण्यं स्वतन्त्रताञ्च निर्दिशति। विभागवैधर्म्यसाधर्म्यप्रक्रियाख्यैश्चतुर्भिः परिच्छेदैस्सप्तविंशतिभिः प्रकरणैः पूर्णोऽयं ग्रन्थः उद्देशलक्षण परीक्षाख्यासु शास्त्रप्रवृत्तिषु उद्देशलक्षणप्रवृत्त्योः ग्रन्थान्तरेषु वर्णितत्वात् परीक्षाख्यां प्रवृत्तिमेव प्राधान्येन स्वीकरोति।

ग्रन्थस्यास्यानितरसाधरणवादप्रणाली, प्राचीनया शैल्या युक्तिकथनम्, काव्यरसास्वादतुल्यं भाषासौष्ठवम्, प्रायशः प्रतिविषयविचारमन्ते पद्यरूपेण अर्थसंग्रहः, भाषागाम्भीर्यम्, शब्दविन्यास इत्यादयः ग्रन्थस्यास्य प्राचीनताम्, उत्तमताम्, उपादेयताञ्च निर्दिशन्ति। जलपरीक्षायां (p. 144) "विमलजलदव्यूहनिरर्गलविगलदमलजलभारधारासारसञ्चारिनभस्तलनिहितविमलभाजनसम्भृतमपगतविविधोपाधिव्याधिसम्भेदममृतद्रवप्रतिममानन्दजनकमम्भोऽनुभूयते" इति वाक्यं ग्रन्थस्यास्य भाषाया उत्कृष्टमुदाहरणं भवति।

तत्वचिन्तामणिग्रन्थात्पूर्वतनोऽयं ग्रन्थः तत्वचिन्तामणिगतविचाराणां मार्गदर्शी इत्यत्र प्रमाणानि दृश्यन्ते। न्यायलीलावत्यां पूर्वपक्षव्याप्तिनिरूपणावसरे "नापि साध्याभावविरोध इति निर्दिष्टं (p. 500) व्याप्तिलक्षणमेव तत्वचिन्तामणिकर्त्रा स्वप्रतिभावैभवेन बहुधा नव्यशैल्या विचारित इत्यूहितुमस्त्यवकाशः। एवं गङ्गेशपुत्रवर्धमानोपाध्यायेन कृते न्यायलीलावतीप्रकाशे सिद्धान्तलक्षणनिरूपणावसरे यावान् विचारः यादृशी आनुपूर्वी तावान् विचारः तादृशी आनुपूर्वी "अत्रोच्यते" इत्यादिना तत्वचिन्तामणिधृतस्यैव (B.I.S. p. 3) पाठस्य दृश्यते। एवं सिद्धान्तलक्षणनिरूपणावसरेऽपि न्यायलीलावतीप्रकाश (p. 498) तत्वचिन्तामणि (B.S.I. pp. 5-6) ग्रन्थयोरानुपूर्वीसादृश्यं विद्यते। एवं तर्कविचारावसरेऽपि तत्वचिन्तामणिगतविचारः न्यायलीलावतीगतविचारेण संवादी दृश्यते। एवं मथुरानाथतर्कवागीशकृते तत्वचिन्तामणिरहस्ये (B.I.S. 98 p. 86) "नापि कार्त्स्न्येन सम्बन्धो व्याप्तिरिति लक्षणं लीलावतीकारव्याप्तिलक्षणमिति, सामान्य लक्षणाप्रकरणे तत्वचिन्तामणौ (B.I.S. 98. p. 285) "यत्तु पाकादा" वित्यादिना विचारितो विषयः लीलावत्यभिमत इति तत्वचिन्तामणिरहस्ये (B. I. S. 98 p. 284) निर्दिष्टः। एवं तत्वचिन्तामणिशब्दखण्डस्थशब्दाप्रामाण्यविचारावसरे (p. 31. B.I.S. 98) "योग्यतासत्तिमत्वे सति संसृष्टार्थपरत्वात् तत्परसंनिवि-

मत्वाद्वा ।" इत्यनेन ग्रन्थेन लीलावतीकारोक्तहेतुद्वयं (p. 527) तत्वचिन्तामणिकारेण अनूद्य दूषितमिति च माथुरीरहस्ये (p. 31. B. I. S. 98) दृश्यते । ततश्च चिन्तामणेः पूर्वकालोत्पन्नो ग्रन्थो न्यायलीलावतीति निर्णेतुमस्त्यवकाशः ।

षडेव पदार्था इति निर्दिश्य एवकारस्य अन्ययोगव्यवच्छेदकार्थत्वं स्वीकृत्य तत्परीक्षाप्रसंगेन अभाव तमः-क्षणिक-ज्ञातता - आधाराधेयभाव - सादृश्यानामतिरिक्त पदार्थत्वं खण्डितम् । वैशेषिकैर्द्रव्यत्वेनापरिगणितोऽपि अभावः "अभावस्य च समानतन्त्रसिद्धस्य अप्रतिषिद्धस्य न्यायदर्शने मानसेन्द्रियतासिद्धिवत् अत्राप्यविरोधादभ्युपगमसिद्धान्तसिद्धत्वा"दिति अनुक्तौ हेतुकथनपूर्वकं स्वीकृतः (pp. 85-6) । जलपरीक्षावसरे अपां शुक्लरूपमेव लक्षणमिति भाष्यविमर्शः (p. 131), सुवर्णस्य तैजसत्वसाधनम् (p. 153), तामसेन्द्रियत्वनिराकरणम् (pp. 189-194) इन्द्रियसामान्यलक्षणविचारः (p. 200), प्रलयपरीक्षाप्रकरणे भाष्योक्तसंहारविधिरप्रामाणिक इति पूर्वपक्षस्य अनुमानप्रदर्शनपूर्वकं खण्डनम् (p. 220), प्रमाणा भावादीश्वरो न द्रव्यान्तरमिति मतमुपपाद्य उपादानविषयापरोक्षविज्ञप्तिचिकीर्षाकृतिजन्यत्वमिति सकर्तृकत्वपरिष्कारपूर्वकं विवादाध्यसितं सकर्तृकं कार्यत्वात् घटवत् इति ईश्वरसाधकानुमानप्रदर्शनपूर्वकं च सृष्टिसंहारौ ईश्वराधीनाविति प्रसाध्य द्रव्यान्तरत्वं साधितम् (pp. 239-245) । परमाणुसाधनम् (p. 263), सुखादिसमवायितया आत्मसाधनम् (p. 314), बुद्धिचैतन्यवादनिरासः (p. 316), क्षणभङ्गवादनिराकरणम् (p. 322), अनुमानेन मनस इन्द्रियत्वसाधनम् (p. 323), मीमांसकाभिमतशक्तिखण्डनम् (p. 432), अनुपलब्ध्यर्थकाभावस्य अप्रामाणिकत्वम् (p. 544), अभावविभागलक्षणवर्णनम् (p. 567), सिद्धोपप्लुतान्तःकरण प्रत्ययप्रवाहस्स्वप्न इति स्वप्नस्वरूपवर्णनम् (p. 460), अध्यक्षानुमारूपेण विद्याविभागः (p. 471), सर्वज्ञीय-लौकिकभेदेन अध्यक्षविभागः (p. 471), शब्दादि संयोजनारहितमविकल्पकमिति निर्विकल्पकलक्षणवर्णनम् (p. 481), सविकल्पकं योजितनिर्भासि जात्यादिविशिष्टो भासमान-विशिष्टवैशिष्ट्यविषयकं ज्ञानमिति सविकल्पकलक्षणवर्णनम् (p. 485), सर्वमुक्त्यसिद्धिवर्णनम् (p. 598), मोक्षसाधकन्यायस्य प्रतिज्ञादिपञ्चावयवात्मकत्वम् (p. 596), असिद्ध - विरुद्ध - सव्यभिचार - अनध्यवसिता इति चतुर्णामेव हेत्वाभासानां स्वीकरणम् (p. 606), इत्यादयो विषया ग्रन्थेऽस्मिन् वर्णिताः ।

अत्र पदार्थविभागप्रकार इत्थम्—




लक्षणया गोसदृशपदेन गवयोपस्थितिरितिवादी उदयनाचार्यः तस्य किरणावली च शब्दाप्रामाण्यविचारे अन्यत्र च बहुषु स्थलेषु (p. p. 38, 39, 533–34, 400, 401), परत्वापरत्वविचारे एवमन्यत्र च द्वित्वादिव्यवहारस्य अपेक्षाबुद्धिस्वभावनिबन्धनत्ववादी भूषणकारभासर्वज्ञः (p. p. 283, 356, 357, 404, 405, 425, 856), आरोपितं नीलं रूपं तम इति वादी न्यायकन्दलीकारः (p. 450), मोक्षविचारे अद्वैतानन्दसाक्षात्कारो मुक्तिरिति एकदण्डिसिद्धान्तः (p. 580), त्रिदण्डिभास्करसिद्धान्तः (p. 582), नित्यसुखाभिव्यक्तिर्मुक्तिरिति भाट्टसिद्धान्तश्च (p. 585) खण्डिता विद्यन्ते ।

यथा आचार्य परमन्यायाचार्य-तात्पर्याचार्यादिशब्देन (p. p. 258, 358, 533, 762) वाचस्पतिमिश्रः सबहुमानं निर्दिष्टः, न तथा उदयनाचार्यः । प्रत्युत आचार्यशब्दरहितेन केवलेन उदयनशब्देनैव अथवा तत्कृतग्रन्थनिर्देशपूर्वकं (p. p. 39, 399, 400, 405) निर्दिश्यते । क्वचित्तु ‘प्रलपितमेतत् विचारासहत्वात्’ इति उदयनोक्तिं खण्डयति (p. p. 533-34) । एवं सांख्यतत्त्वकौमुदी (p. 533) गुरुमततत्त्ववेदी (p. 421) तुतातीतशब्देन कुमरिलभट्टः (p. 480) कीर्तिशब्देन धर्मकीर्तिः (p. 480) गौडाः (p. 445) ऐन्द्रव्याकरणम् (p. 625) महाव्रतः (p. 947) परमकोशकारः (p. 675) व्योमशिवाचार्यः (p. 834) चरकाचार्यः (p. 816) इत्यादयो ग्रन्थाः ग्रन्थकाराश्च नाम्ना निर्दिष्टा विद्यन्ते ।

कर्णाटकचक्रवर्ती-(p. 290) काश्मीर (p. 290) वाराणसी (p. 399) श्रुघ्नपुर (p. 399) इत्यादीनि देशनामानि निर्दिष्टानि विद्यन्ते । मुद्रितोऽयं ग्रन्थः वाराणस्यां चौखाम्बाग्रन्थमालायाम् (B.S.S. 64) ।

अस्य रचयिता उदयनाचार्यादनन्तरं प्रसिद्धो महान् वैशेषिकाचार्यः श्रीवल्लभाचार्य इति ज्ञायते ।

द्रव्यं नाकुलमुज्वलो गुणगणः कर्माधिकं श्लाघते
जातिर्विप्लुतिमागता न च पुनः श्लाध्या विशेषस्थितिः ।
सम्बन्धः सहजो गुणादिभिरयं यत्रास्तु सत्प्रीतये
सान्वीक्षानयवेश्मकर्मकुशला श्रीन्यायलीलावती ॥ (p. 5)

इति श्लेषालङ्कारगर्भितं पद्यं लिखन्नयम् आचार्यः स्वप्रेयस्याः लीलावत्यभिधायाः नामस्मारकं ग्रन्थनाम निर्दिशतीति ज्ञायते । वाराणस्यां सरस्वतीभवनपुस्तकालये विश्वभारतीशान्तिनिकेतनपुस्तकालये च परिरक्षितस्य वर्धमानोपाध्यायकृतस्य अन्वीक्षानयतत्वबोधस्य न्यायसूत्रपञ्चमाध्यायवृत्तिग्रन्थरूपस्य चतुर्दशतमे सुत्रे (5-1-14) श्रीवल्लभाचार्यकृता न्यायसूत्राणां पञ्चमाध्यायव्याख्या निर्दिष्टा । न्यायलीलावत्याञ्च (p. 406) स्वकृतं ईश्वरसिद्धिरिति ग्रन्थं श्रीवल्लभाचार्यः स्वयं निर्दिशति । वर्धमानेन निर्दिष्टस्स एव ग्रन्थो वायमथवा अन्य इति न ज्ञातुं पार्यते अनुपलब्धेः । परन्तु श्रीवल्लभेन ग्रन्थान्तरमपि रचितम् यस्य नाम ईश्वरसिद्धिरिति परं ज्ञातुं पार्यते । दशमशतकीयम् उदयनाचार्यं निर्दिशन् निर्णयसागरमुद्रितायां मानसनयनप्रसादिनीसहितायां तत्वप्रदीपिकायां विशेषपदार्थखण्डनावसरे (p. 197) परमाणुखण्डनावसरे (p. 199 विपर्ययखण्डनावसरे (p. 229) अभावखण्डनावसरे (p. 298) च चित्सुखाचार्येण (1200 A.D.) प्रत्यक्स्वरूपाचार्येण च, रससारे (p. 92 S.B.T. 5) वादीन्द्रेण (1225 A.D.) च निर्दिष्टोऽयं श्रीवल्लभाचार्य द्वादशशतकीय (1175 A.D.) इति ज्ञायते ।

## न्यायलीलावतीव्याख्या—प्रकाशः

प्रकाशकर्तेति प्रसिद्धेन किरणावलीप्रकाशादिकर्त्रा गङ्गेशोपाध्यायपुत्रेण वर्धमानोपाध्यायेन (1250 A.D.) कृता प्रकाशाख्या (Ch.S.S. 64) यस्यां बहुषु स्थलेषु तत्वचिन्तामणिकारः पितृचरणशब्देन निर्दिष्टः ।

प्रकाशव्याख्या :—दीधितिकार इति प्रसिद्धेन गोविन्दसीतादेव्योः पुत्रेण वासुदेवसार्वभौमशिष्येण रघुनाथशिरोमणिना ( 1475 A.D. ) कृता काचन विस्तारिकेति ख्याता दीधितिरिति च प्रसिद्धा प्रकाशव्याख्या अमुद्रिता वाराणसी सरस्वतीभवनपुस्तकालये मिथिलाहरप्रसादसूच्योश्च दृश्यते । जर्नलआफ़ आसियाटिक सोसाइटि बंगाल (XI 1915) पत्रिकायां विशदीकृता च । रामतर्कालङ्कारपुत्रेण रघुनाथशिष्येण मथुरानाथतर्कवागीशेन (1600 A.D.) कृता काचन दीधितिव्याख्या रहस्याख्या अमुद्रिता लन्दनपुस्तकालये लभ्यते अदसीये लीलावतीप्रकाशे निर्दिष्टा च । शब्दशक्तिप्रकाशिकादिकर्त्रा जगदीशभट्टाचार्येण (1600 A D.) कृता काचन दीधितिव्याख्या आसीदिति जर्नलआफ आसियाटिक् सोसाइटिपत्रिका कलकत्तायाः (Vol. XI 1915 p. 282) ज्ञायते । रघुनाथशिरोमणिशिष्येण कृष्णकान्तविद्यासागरपितामहेन देवीदासपुत्रेण तर्कामृतादिव्याख्यात्रा रामकृष्णभट्टाचार्यचक्रवर्तिना (1700 A.D.) कृता दीधितिव्याख्याप्यस्तीति या च लण्डनतञ्जपुरपुस्तकालययोः वाराणसीसरस्वतीभवने च लभ्यत इति च ज्ञायते । मधुसूदनठक्कुरशिष्येण गुणानन्दविद्यावागीशेन (1700 A.D. कृता काचन विवेकाख्या न्यायलीलावतीदीधितिव्याख्या अमुद्रिता वाराणसीसरस्वतीभवन–मैसूर–लाहूरपुस्तकालयेषु लभ्यते ।

पक्षधरशिष्येण चन्द्रपतिधीरयोः पुत्रेण मेघठक्कुरापराभिधेन भावप्रकाशिकाकर्त्रा भगीरथठक्कुरेण (1588 A.D.) कृता काचन विवृत्याख्या प्रकाशव्याख्या मुद्रिता (Ch.S.S. 64) । रामतर्कालङ्कारपुत्रेण रघुनाथशिरोमणिशिष्येण मथुरानाथतर्कवागीशेन ( 1600 A.D. ) कृता काचन रहस्याख्या लीलावतीप्रकाशव्याख्या अमुद्रिता लण्डनलाहूरपुस्तकालययोर्लभ्यते यस्यां अदसीया प्रकाशदीधितिव्याख्यापि निर्दिष्टा ।

न्यायलीलावतीव्याख्या दर्पणाख्या जगन्नाथोपाध्यायपुत्रेण दर्पणकार इति प्रसिद्धेन बटेश्वरोपाध्यायेन (1400 A.D.) कृता आसीदिति लण्डनभारतकार्यालयपुस्तकालयस्थे पक्षधरकृते द्रव्यविवेके निर्दिष्टा परं प्राप्तिस्थानादि न ज्ञातुं पार्यते । एवं वैशेषिकसूत्रोपस्कारकर्त्रा भवनाथभवान्योः पुत्रेण कणादापरनामकेन रघुदेवशिष्येण शङ्करमिश्रेण (1450 A.D.) कृता काचन कण्ठाभरणाख्या लीलावतीव्याख्यापि मुद्रिता (Ch. S.S. 64) । एवं खण्डनोद्धारादिकर्त्रा वत्सगोत्र-

जेन गिरिपतिपुत्रेण द्वितीयवाचस्पतिमिश्रेण (1450 A.D.) कृता काचन वर्धमानेन्दुनाम्नी लीलावतीव्याख्या अमुद्रिता वाराणस्यां भारतीयपश्चिमोत्तरभागस्थामुद्रितग्रन्थसूच्यञ्च दृश्यते । एवं गोविन्दचक्रवर्तिसीतादेव्योः पुत्रेण वासुदेवसार्वभौमान्तेवासिना दीधितिकार इति प्रसिद्धेन रघुनाथशिरोमणिना (1475 A.D.) कृता विभूत्याख्या लीलावतीव्याख्या अमुद्रिता सरस्वतीभवन - मिथिला - लण्डनपुस्तकालयेषु लभ्यते । तथा महादेवमिश्रपुत्रेण हरिमिश्रशिष्येण आलोकादिकर्त्रा पक्षधरमिश्रेण (1500 A.D.) कृता काचन विवेकाख्या लीलावतीव्याख्या अमुद्रिता लण्डनभारतकार्यालयपुस्तकालये लभ्यते । मथुरानाथतर्कवागीशेन (1600 A.D.) कृता रहस्याख्या फक्किकेत्यन्याख्या लीलावतीव्याख्या लण्डन-तिरुवनन्तपुर-शान्तिपुरपुस्तकालयेषु लभ्यते परमियं लीलावत्यास्वतन्त्रैव व्याख्या न तु दीधितिव्याख्यारूपा नापि प्रकाशव्याख्यारूपा । न्यायकन्दलीसारादिकर्त्रा बलभद्रविजयश्रियोः पुत्रेण पद्मनाभमिश्रेण (1600 A.D.) कृता काचन अनुनयाख्या न्यायलीलावतीव्याख्या अडयारपुस्तकालये लभ्यते, अडयारपत्रिकायां (A.L.B 8-1944. p. p. 111-116) प्रकाशिता च । पक्षधरशिष्येण देवदत्तरेणुकादेव्योः पुत्रेण रुचिदत्तमिश्रेण (1600. A.D.) कृता काचन लीलावतीविलासाख्या व्याख्या मद्रासपुस्तकालये लभ्यते । देवीदासपुत्रेण कृष्णकान्तविद्यासागरस्य पितामहेन रघुनाथशिष्येण गुणकिरणावलीव्याख्यात्रा रामकृष्णभट्टाचार्येण (1700 A.D.) कृता प्रकाशाख्या लीलावतीव्याख्या औधसूच्यां दृश्यते, परं सा दीधितिव्याख्या स्याद्वेति संशयः । महादेवपण्डितेन (1800 A.D,) न्यायसारे निर्दिष्टेन रुद्रभट्टाचार्येण (1800 A.D ) कृता काचन लीलावतीव्याख्या लाहूरपुस्तकालये लभ्यते । एवमेव न्यायसार-समासवाद-गुणरहस्यटिप्पणी-तर्कभाषाव्याख्यादिकर्त्रा लक्ष्मणदेवपुत्रेण धारापुरनिवासिना महादेवपण्डितेन (1800 A.D.) कृता काचन भावपरिच्छेदाख्या न्यायलीलावतीव्याख्या आसीदिति पण्डितग्रन्थमालायां प्रकाशितात् न्यायसारात् (p. 5) ज्ञायते । विलासाख्या अन्या काचन लीलावतीव्याख्या महादेवेन कृतेति या मद्रास-तिरुवनन्तपुर-तञ्जपुरपुस्तकालयेषु लभ्यत इति ज्ञायते । शङ्करभगीरथपण्डितेन कृता अन्या काचन लीलावतीव्याख्या मैसूरपुस्तकालये लभ्यते । न्यायलीलावती रहस्याख्या अन्या काचन व्याख्या न्यायसिद्धान्ततत्वामृतकर्त्रा श्रीनिवासेन कृतेति या न्यायसिद्धान्ततत्त्वामृते (MGOMLS. 19, pp. 6, 18.) निर्दिष्टा ज्ञायते । परं प्रातिस्थानादि न ज्ञायते ।



न्यायलीलावतीव्याख्याः
अननुयः
कण्ठाभरणम्
दर्पणम्
प्रकाशः
प्रकाशः ?
भावपरिच्छेदः
रहस्यम्
लीलावतीरहस्यम्
वर्धमानेन्दुः
विभूतिः
बिलासः
विलासः
रहस्यम्
दीधितिः
विवृतिः
टीका
रहस्यम्
विवेकः
व्याख्या
विवेकः
व्याख्या
व्याख्या

**सप्तपदार्थी—**

वैशेषिकसिद्धान्तप्रदर्शनपरोऽयं ग्रन्थः विजयनगरग्रन्थमालायां (V.S.S. 6) कलकत्ताआषियाटिकग्रन्थमालायाञ्च (C.A.S.S. 8) मुद्रितः। एतावता कालेन स्वतन्त्ररूपेण पदार्थेषु अपरिगणित अभावरूपः पदार्थः अत्र सप्तमत्वेन परिगणितः, येन सप्तपदार्थीति नाम सार्थकं सञ्जातम्। विषयविशेषेषु सूत्रम्, भाष्यमपि अतिक्रम्य स्वमतं वितनोति। वैशेषिकसूत्रेषु त्रय इति, न्यायसूत्रेषु पञ्चेति वर्णिता हेत्वाभासा अत्र षडिति वर्णिताः। भाष्योक्ताः दिशः दश। अत्र तु एकादश दिश वर्णिताः। प्रमितिविषयाः पदार्था इत्यादिना यथार्थज्ञानविषयत्वं पदार्थत्वमिति लक्षणम्, पदार्थविभागः द्रव्यगुणादीनां लक्षणं विभागश्च, अभावस्यातिरिक्तपदार्थत्वेन परिगणनम्, दिङ्निरूपणावसरे नागी (अधः) ब्राह्मी (ऊर्ध्वे) दिशयोः अतिरिक्ता काचन रौद्री (अन्तरिक्ष) नाम्नी दिशा, (p. 17) परमात्मक्षेत्रज्ञभेदेन आत्मनो विभागः (p. 17) क्षेत्रज्ञानां नानात्वम् (p. 18) असिद्ध-विरुद्ध-अनैकान्तिक-अनध्यवसित-कालात्ययापदिष्ट प्रकरणसमभेदेन षड् हेत्वाभासाः (p. 23) अन्धकारस्य अभावात्मकत्वम् (p. 29) प्रमेयतत्त्वज्ञानस्य निःश्रेयसहेतुत्वम्, (p. 31) अनुभवस्य श्रवणमनननिदिध्यासनसाक्षात्काररूपेण चातुर्विध्यम् (p. 32) तत्त्वज्ञानोत्पाद्यमिथ्याज्ञानकारणप्रध्वंससमानाधिकरणतत्कार्यसमस्तदुःखाभाव इति मोक्षलक्षणम् (p. 32) प्रमायोगव्यवच्छिन्नं प्रमाणमिति प्रमाणलक्षणम् (p. 60) ईश्वर-घ्राण रसन-स्पर्शन-श्रोत्र-मनोरूपाणि सप्तप्रत्यक्षप्रमाणानि (p. 60) जाति-उपाधिभेदेन सामान्यस्य द्वैविध्यम् (p. 28) द्रव्यादीनां साधर्म्यवैधर्म्ये साधनश्रेयोऽभिधायकं इति शास्त्रलक्षणञ्चेत्येते विषयाः सूत्रकल्पैर्वाक्यैर्वर्णिता विद्यन्ते।

ग्रन्थस्यास्य कर्ता गङ्गेशोपाध्यायेन तत्त्वचिन्तामणौ प्रत्यक्षखण्डे निर्विकल्पकवादे (p. 873 Tirupati Edn.) निर्दिष्टः, खण्डनखण्डखाद्ये प्रमालक्षणविचारावसरे श्रीहर्षेण यस्य "तत्त्वानुभूतिः" इति लक्षणं खण्डितम्, चित्सुखीयव्याख्यायां मानमनयनप्रसादिन्यां महाविद्यालक्षणखण्डनावसरे (p. 182) निर्दिष्टश्च शिवादित्यः (950–1050 A.D.)।

## पदार्थाः

- द्रव्य
  - पृथिवी
  - अप्
  - तेजो
  - वायु
  - आकाश
  - काल
  - दिक्
    - ऐन्द्री
    - आग्नेयी
    - याम्या
    - नैर्ऋती
    - वारुणी
    - वायवी
    - कौबेरी
    - ऐशानी
    - नागी
    - ब्राह्मी
    - 11-रौद्री
  - आत्मा
    - परमात्मा
    - क्षेत्रज्ञः
  - मनांसि
- गुण
  - 24
  - बुद्धिः
    - स्मृतिः
    - अनुभवः
      - प्रमा
        - प्रत्यक्ष
          - ईश्वर
          - घ्राण
          - रसन
          - चक्षुः
          - त्वक्
          - श्रोत्र
          - मनस्
        - अनुमिति
          - स्वार्थ
          - परार्थ*
      - अप्रमा
        - संशयः
        - विपर्ययः
- कर्म
  - 5
- सामान्य
  - 3
- विशेष
  - अनन्तः
- समवाय
  - 1
- अभावाः
  - 1 प्रागभावः
  - 2 प्रध्वंसाभाव;
  - 3 अन्योन्याभावः
  - 4 अत्यन्ताभावः

* परार्थानुमानाङ्गानि

- प्रतिज्ञा
- हेतु
- उदाहरण
- उपनय
- निगमन

हेत्वाभासाः 6

- असिद्ध
- विरुद्ध
- अनैकान्तिक
- अनध्यवसित
- कालात्ययापदिष्ट
- प्रकरणसम

सप्तपदार्थीव्याख्याः—

अनादिनाथतीर्थापरनाम्ना वाग्भटालङ्कारव्याख्यात्रा स्वाचारात् प्रमत्तस्य अतएव परिभ्रंशितस्य जिनराजसूरेरुत्तराधिकारिणा शिष्येण च जैनेन जिनवर्धनसूरिणा (1418 A.D.) कृता काचन सप्तपदार्थीटीका जिनवर्धिनीनाम्नी बम्बई-पुस्तकालये वर्तते लालभाई दलपतभाईग्रन्थमालायां (No. 1 ) मुद्रिता च ।

सर्वदर्शनकौमुदीमणिव्याख्यामयूखमालादिकर्त्रा वेदान्तिना कृष्णातीरवासिना माधवसरस्वत्या (1500 A.D.) कृता काचन मितभाषिण्याख्या व्याख्या विजयनगरकलकत्ताग्रन्थमालयो: (C.A.S.S. 8, VSS, 6) मुद्रिता यस्यां सूत्र-कल्पस्य मूलग्रन्थस्य व्याख्याव्याजेन मङ्गलवादारब्धास्सर्वेऽपि वादाः प्रसंगात् संक्षिप्ता विद्यन्ते । अस्या अपि व्याख्या रङ्गनाथकमलाम्बयोः पुत्रेण कृष्णभट्टआर्डे (1750-1825 A.D.) पण्डितेन कृता काचन पदार्थचन्द्रिकाविलासाख्या व्याख्या Hal सूच्यां दृश्यते । परं नाम्ना ज्ञातुं पार्यते व्याख्येयं शेषानन्ताचार्य-कृतपदार्थचन्द्रिकाया एवेयं व्याख्येति । काव्यप्रकाशव्याख्यात्रा अमरेन्द्रपण्डितेन (1933 A.D.) कृता मितभाषिणीटिप्पणी च मुद्रिता ।

एवं शेषशार्ङ्गधरात्मजेन शेषानन्ताचार्येण (1600 A.D.) कृता काचन सप्तपदार्थीटीका पदार्थचन्द्रिकाख्या पूनाओरियण्टल-कलकत्ताग्रन्थमालयोर्मुद्रिता (P.O.S. 20, CASS. 8) । अस्या अपि व्याख्या नृसिम्हाचार्यकृता काचन बम्बईपुस्तकालये लभ्यते ।

विष्णुदासमाधवीपुत्रेण बलभद्रेण (1700 A.D.) कृता काचन बलभद्र-सन्दर्भाख्या व्याख्या कलकत्ताग्रन्थमालायां (CASS. 8) मुद्रिता । परमियं न किरणावलीभास्करकर्तुः पद्मनाभमिश्रस्य पुत्रस्य बलभद्रस्य इति ज्ञायते ।

एवं भैरवेन्द्रेण कृता काचन शिशुबोधिन्याख्या सप्तपदार्थी टीका आसीदिति ज्ञायते (CASS. 8 p. 6) परं प्राप्तिस्थानादि न ज्ञायते । भावबागीश्वरेण कृता काचन टीका बम्बईसूच्याम्, हरिरामतर्कवागीशकृता काचन टीका हालसूच्याम्, सिद्धचन्द्रकृता टीका एवं कोलाचल मल्लिनाथकृता निष्कण्टकाख्या व्याख्या भीमाचार्यझालकीकारेण निर्दिष्टा परमुपलब्धिस्थानं न ज्ञातुं पार्यते । लौगाक्षि कुलोत्पन्नेन न्यायचन्द्रिकाकर्त्रा केशवभट्टेन (1550-1650 A.D.) कृता काचन

शिवादित्यप्रकाशाख्या व्याख्या प्यासीदिति (T. S. S. 189 p. No. 19) ज्ञायते ।




लक्षणमाला

तत्वानुभूतिः प्रमेति प्रमालक्षणादारब्धः न्यायशास्त्रोक्तचत्वारि प्रमाणानि प्रमेयाणि च सलक्षणं प्रतिपादयन्नयं ग्रन्थः स्वल्पशरीरः जर्नलआफओरियण्टल रिसर्च पत्रिकायां (J.O.R.XIX1. pp. 42-52) मुद्रितः । अस्यापि रचयिता शिवादित्यमिश्रः (950–1050 A.D.) ।

खण्डनखण्डखाद्यव्याख्यायां शङ्करमिश्रेण प्रमालक्षणविचारावसरे यत् प्रमालक्षणमनूदितम्–तत्वानुभूतिः प्रमेति खण्डितञ्च तल्लक्षणमत्र दृश्यते । एवं तार्किकरक्षायां वरदराजेन यत् ग्रन्थनाम निर्दिष्टम्, यल्लिङ्गलक्षणञ्च निर्दिष्टम्, तदत्र दृश्यते । ततश्च लक्षणमाला इत्येवास्य ग्रन्थस्य नाम स्यादिति सिध्यति । परन्तु अत्रोक्तानि इति अन्यानि च लक्षणानि चित्सुखीयतत्वप्रदीपिकायां तद्व्याख्यामानसनयनप्रसादिन्याञ्च प्रमा-कर्म-सामान्यलक्षणविचारावसरे खण्डितानि दृश्यन्ते । "यानि शिवादित्यमिश्रेण लक्षणमालायां लक्षणानि उक्तानि तान्यपि निरस्तानि - इत्याह-तदेवमिति" चित्सुखी (Bombay Edn. p. 162-192) इत्यादिग्रन्थेन यानि लक्षणानि वर्णितानि तान्यत्र न दृश्यन्ते । एवं तत्वचिन्तामणिकारेण गंगेशोपाध्यायेन तत्वचिन्तामणिप्रत्यक्षखण्डे विशेषणोपलक्षणवादे (p. 873 Tirupati

Edn.) शिवादित्यमिश्रनामग्रहणपूर्वकं यानि वाक्यानि अनूदितानि तेषु किञ्चिद्वाक्यं पद्यात्मकमपरं गद्यात्मकमिति भाति—

व्यावर्तनीयमवितिष्ठति यद्धि साक्षात्
एतद्विशेषणमतो विपरीतमन्यत् ।
दण्डी पुमानिति विशेषणमत्र दण्डः
पुंसो न जातिरनुदण्डमसौ च तस्य ॥

वाक्यं पद्यरूपं भाति । परं तदपि उद्धरणं प्रकाशितेऽस्मिंल्लक्षणमालाग्रन्थे सप्तपदार्थ्यां वा न दृश्यते । तस्मादयं निश्चयो भवति यत् इयं लक्षणमाला कस्यचिद् बृहद्ग्रन्थस्य गद्यपद्यात्मकस्य कश्चन भाग इति । अथवा हेतुखण्डन महाविद्यान्यायमाला- उपाधिवार्तिक-अर्थापत्तिवार्तिकाख्यानां ग्रन्थानामपि शिवादित्य रचयितेति हेतुखण्डनात् ज्ञायते । तेभ्यो वाक्यनीमानि उद्धृतानीति वक्तव्यम् । गुणकिरणावलीग्रन्थारम्भस्थमेव पद्यं अत्रापीति दृश्यते । तार्किकरक्षाव्याख्यात्रा मल्लिनाथेन (p. p. 179, 225) लक्षणमाला उदयनाचार्यकृतिरित्युक्तम् । तस्मात् लक्षणमालेयं उदयनकृतिरेव न शिवादित्यस्येत्यपि वक्तुं शक्यते । ग्रन्थस्यास्य आधुनिकेन शशिनाथझा पण्डितेन रचिता काचन व्यख्यापि मिथिलापुस्तकमालायां (No. 13)मुद्रिता विद्यते ।

लक्षणावली :—

वैशेषिकसिद्धान्तप्रकरणग्रन्थोऽयं भाव–अभावभेदेन पदार्थविभागं कुर्वन् भावपदार्थं द्रव्यगुणकर्मसामान्य विशेष – समवायभेदेन षोढा विभज्य अभावेन सप्तपदार्थान् तद्विभागांश्च लक्षणेन योजयति । आत्मनानात्वम्, रसनेन्द्रियस्य जलीयत्वसाधनम्, सुवर्णस्य तैजसत्वसाधनम्, इत्यादयः प्रमुख्या अपि वैशेषिकसिद्धान्ताः सूत्रकल्पैः परिष्कृतैर्वाक्यैरुपवर्णिताः । ग्रन्थेऽस्मिन् एकस्यैव बहूनि लक्षणानि दृश्यन्ते । द्वित्वप्रक्रियां निरूपयदिदं पद्यम्—

आदाविन्द्रियसन्निकर्षघटनादेकत्वसामान्यधी
रेकत्वोभयगोचरा मतिरतो द्वित्वं ततो जायते ।
द्वित्वस्य प्रमितिस्ततोऽपि परतो द्वित्वप्रमानन्तरं
द्वे द्रव्ये इति धीरियं निगदिता द्वित्वोदयप्रक्रिया ॥

इति मनोहरं दृश्यते । मुद्रितश्चायं ग्रन्थः पण्डितनूतनग्रन्थमालायां (No. 55) वाराणस्याम् ।




अस्य रचयिता तर्कधुरन्धरः न्यायकुसुमाञ्जल्यादिकर्ता उदयनाचार्यः ।

लक्षणावलीव्याख्या — न्यायमुक्तावली

लक्षणावलीव्याख्यात्मकोऽयं ग्रन्थः मूलग्रन्थव्याख्याव्याजेन बहुषु स्थलेषु वैशेषिकमौलसिद्धान्तान् इतरमतनिराकरणपूर्वकं विशदयति । द्रव्यविभागावसरे शब्दस्य द्रव्यान्तरत्वखण्डनम् (p. 9), तमसो द्रव्यत्वनिरसनम् (p. 13), गन्धस्य पृथिवीमात्रगुणत्वसाधनम् (p. 19), नित्यपृथिवीत्वसाधनम् (p. 20), द्रव्यत्वजातिसमर्थनम् (p. 22), न्यायलीलावतीकारवल्लभाचार्य—वादीन्द्रमतप्रदर्शनपूर्वकं त्रसरेणोरनित्यत्वकथनम् (p. 23), भोगायतनमन्त्यावयवि शरीरमिति शरीरलक्षणं वादिवागीश्वरोक्तलक्षणकथनपूर्वकं वर्णनम् (p. p. 28—29), अयोनिजयोनिजभेदेन शरीरविभागः (p. 29), अयोनिजशरीरसाधनम् (p. 29), वादीशलक्षणकथनपूर्वकं इन्द्रियलक्षणपरिशीलनम् (p. 29), अतीन्द्रियत्वलक्षणम् (p. 30) आकाशनित्यत्वसाधनम् (p. 35), वल्लभाचार्यमतपरिशीलनेन शब्दस्य गुणत्वसमर्थनम् (p. 35), ईश्वरसाधकप्रमाणप्रश्नसामञ्जस्योक्तिः (p. 45), द्वित्वस्यापेक्षाबुद्धिजन्यत्वसाधनम् (p. 61), वल्लभाचार्याशयवर्णनपूर्वकं समवायसाधनम् (p. 70), इतीमे विषयाः मूलव्याख्याप्रसङ्गाद् वर्णिता दृश्यन्ते ।

आत्मन एकत्वनित्यत्ववादिनां आत्मभिन्नस्य सर्वस्य मिथ्यात्ववादिनां आकाशादिप्रमेयाणाञ्च अनित्यत्ववादिनां अनिर्वचनीयख्यातिवादिनां शरीरस्य पाञ्चभौतिकत्ववादिनां वेदान्तिनाम्, आत्मन ईशानीशभेदवादिनां पृथिव्यादिद्रव्याणां नित्यत्वानित्यत्वस्वीकर्तणां शरीरस्य अपाञ्चभौतिकत्वस्वीकर्तृणां अन्यथाख्यातिवादिनां ज्ञानकर्मसमुच्चयवादिनां नैय्यायिकवैशेषिकाणाञ्च स्वस्वसिद्धान्तस्थापनाय खण्डनमण्डनपद्धतिरनुस्यूता दृश्यते ।

तत्र सप्तपदार्थी - लीलावती - मानमनोहरादिषूपवर्णिताः सिद्धान्ता युक्तयश्च चित्सुखीयतत्वप्रदीपिकायां तद्व्याख्यामानसनयनप्रसादिन्यां कल्पतरौ च खण्डिता दृश्यन्ते । एवं तर्कसंग्रहकारेण आनन्दज्ञानेन च नैय्यायिकवैशेषिकसिद्धान्ताः खण्डिताः ।

न्यायमुक्तावल्यां द्रव्यलक्षणविचारे (p. 4) तमसोऽतिरिक्तद्रव्यत्वखण्डनावसरे (p. p. 11-15) चित्सुखीयतत्वप्रदीपिकायुक्तयः, शरीरस्य पाञ्चभौतिकत्वखण्डनावसरे कल्पतरुमतं (p. 23) नित्यपृथिवीत्वविचारे अनिर्वचनीयत्वखण्डनावसरे एवमन्यत्र (p. p. 20, 38, 39, 41, 43, 47) तर्कसंग्रहकारानन्दज्ञानमतं खण्डितं दृश्यते । वल्लभ-वादीन्द्र-वादिवागीशानां मतं मण्डितञ्च । कालास्वीकर्तृतर्कसंग्रहकारमतखण्डनावसरे न्यायलीलावतीकारीयं (p 290 C.S.S. 64) वाक्यमेव सर्वात्मनानूदितम्—"काश्मीरवर्तिना कुङ्कुमरागेण कर्णाटकचक्रवर्तिललनाकरकमलमप्यवच्छिन्द्यात् (p. 41) इति । दशश्लोकीविडम्बनाख्यः कश्चन ग्रन्थः निर्दिष्टः (p. 6) यश्च न्याययोगाचार्येण कुलार्कपण्डितेन (1200 A. D.) कृतस्य महाविद्याप्रधानस्य षोडशोद्धरणापरनामकस्य दशश्लोकीग्रन्थस्य खण्डनरूपः वादीन्द्रेण कृतः । परं लन्दननगरस्थपुस्तकालयसूच्यां दशश्लोकीविडम्बनं शार्ङ्गधरकृतिरित्येव दृश्यते (No. 5850 I.O.L.) । मुद्रितेयं न्यायमुक्तावली पण्डितनूतनग्रन्थमालायां (No. 55) वाराणसीनगरे ।

ग्रन्थस्यास्य कर्ता शशधरीन्यायसिद्धान्तदीपव्याख्यासप्तपदार्थीव्याख्याकर्तुश्शेषानन्तस्य पिता गुरुश्च शेषगणपतिपुत्रः शेषशार्ङ्गधराचार्यः षोडशशतकीय (1600 A. D.) इति ज्ञायते । शार्ङ्गधराचार्येण सप्तपदार्थीटीकापि काचन रचितेति बम्बई विश्वविद्यालयसूच्याः ज्ञायते । तस्या अपि पदार्थचन्द्रिकाविलासाख्या काचन व्याख्या शेषानन्तेन कृतेति वाराणसीसंस्कृतकलाशालापुस्तकसूच्याः

ज्ञायते। परं नेयं न तथेति पूर्वमस्माभिरन्यथा निर्दिष्टम्। एवं लक्षणावल्याः लौगाक्षिवंशजेन केशवभट्टेन (1600 A.D.) कृता काचन प्रकाशाख्या व्याख्या मिथिलायां (No. 14) प्रकाशिता। अन्या काचन प्रकाशाख्या व्याख्या विश्वनाथशर्मणा (1891 A.D.) कृता या नव्यनैय्यायिकशैल्यां परिष्कारप्रधाना वाराणस्यां मुद्रिता। अपरा काचन व्याख्या महादेवसोमयाजिना कृता अमुद्रिता सरस्वतीभवने लभ्यते।




मानमनोहरः—

सिद्धि-द्रव्य-गुण-कर्म-सामान्य-विशेष-समवाय-अभाव-पदार्थान्तर-निरास-मोक्षाख्यैर्दशभिः प्रकरणैः परिच्छिन्नोऽयं वैशेषिको ग्रन्थः बौद्धमतनिरसन-पूर्वकं अनुमानप्रधानया युक्त्या ईश्वरम्, अवयविनम्, परमाणुञ्च साधयति। एवं पृथिव्यारब्धानि मनोन्तानि द्रव्याणि अनुमानेन लक्षणेन च साधयति। आत्म-निरूपणप्रसङ्गे प्राभाकरमतखण्डनम्, आत्मनः ज्ञानाश्रयत्वसाधनम्, ज्ञानरूपत्व-खण्डनम्, आत्मभेदसाधनम्, अखण्डार्थत्वदूषणम् तमस आलोकाभावरूपत्वञ्चेतीमे विषयाः वर्णिताः। एवं गुणप्रकरणे रूपादारब्धानां संस्कारान्तानां लक्षणमनुमानेन साधनञ्च कृतम्। परमत्र क्रमभेदो दृश्यते। कर्मप्रकरणे पतनोत्क्षेपणादीनां अनुमानेन साधनं तेषामनन्तत्वं अपरजातीयत्वञ्च साधितम्। सामान्यप्रकरणे सत्तां प्रसाध्य द्रव्यत्वादारब्धानां कार्यत्वान्तानां परापरवाच्यानां जातित्वमनुमानेन प्रसाधितम्। विशेषप्रकरणे लक्षणानुमानाभ्यां विशेषस्साधितः। समवायप्रकरणे-विवादास्पदं घटसम्बद्धम्, द्रव्यत्वात् घटवत्, विवादास्पदं नित्यसम्बन्धेन सम्बद्धम्, द्रव्यत्वात् आकाशवत् इत्यनुमानेन समवायः, नित्यसम्बन्धस्समवाय इति तस्य लक्षणञ्च वर्णितम्। अभावप्रकरणे अघटं भूतलमिति व्यवहारो भूत-लातिरिक्तविषयः भूतलमात्रव्यवहारातिरिक्तत्वे सति भूतलव्यवहारत्वात् इत्यनुमान-मुपवर्ण्य अभावस्य प्रागभावादिभेदेन चातुर्विध्यं प्रतियोगिभेदात् तस्य भिन्नता च साधिता। पदार्थान्तरनिराकरणप्रकरणे शक्तेः, ज्ञाततायाः, विषयीभावरूप-सम्बन्धस्य सादृश्यस्य प्रधानस्य च पदार्थान्तरत्वं निरस्तम्। मोक्षप्रकरणे द्रव्यादि-

पदार्थपरिशीलन लब्धहेयोपादेयज्ञानवतः संसारस्य दुःखभूयस्त्वं पश्यतः उपनिषदा ज्ञातजीवात्मब्रह्मणः वैशेषिकोक्तदृशा भगवद्भक्तिमनस्कस्य गुरुकृपावशात् क्षीणान्तरायस्य अहोरात्रनिदिध्यासनपरस्य परिपक्वज्ञानस्य प्रकृष्टयोगजधर्मशालिनः कथञ्चित् साक्षात्कृतपरमेश्वरस्य निरवकाशीकृतमिथ्याज्ञानस्य अपगतरागद्वेषप्रवृत्ति सम्भावनस्य अशेषदुःखाभावात् स्वेन रूपेण अवस्थानं भवति स एव मोक्ष इति साधितम्। अत्र वेदान्तिनामाक्षेपाः भासर्वज्ञाभिमतयुक्तिश्च खण्डिताः।

आत्मनिरूपणावसरे अद्वैतमतसिद्धौ आत्मनः ज्ञानात्मकत्ववादः अखण्डत्ववादश्च खण्डितौ। एकात्मवादखण्डनपूर्वकं नानात्मवादस्साधितः। बौद्धाभिमतः गुणगुणिनोरभेदवादः, प्राभाकरमीमांसकाभिमत अख्यातिवादः, बौद्धाभिमतनिर्विकल्पप्रत्यक्षप्रमाणवादः खण्डिताः। अनुमितिसाधनोपयोगिपञ्चावयववाक्यस्वीकारात् अवयवद्वयवाक्यस्वीकार एव श्रेयानित्युक्तम्। हेत्वाभासाश्च असिद्धविरुद्धानैकान्तिकभेदेन त्रयस्स्वीकृताः। प्रमाणद्वयं स्वीकृत्य शब्दोपमानार्थापत्ति–अनुपलब्धीनां निरासः कृतः। वेदस्य पौरुषेयत्वं साधितम्। सामान्यविचारप्रसंगे सर्गारम्भोत्पन्न प्रथमब्राह्मणे ब्राह्मणत्वाभावात् मातापित्रोः ब्राह्मणत्वं ब्राह्मणत्वस्य न नियामकम्, परन्तु प्रत्यक्षसिद्धवर्चस्वादिधर्मविशेषा एव नियामका इति विषयो नूतनः। अप्रमाज्ञानस्य निश्चयानिश्चयभेदेन भेदो वर्णितः। संशयादीनामनयोरन्तर्भावश्चोपवर्णितः।

सर्वेऽपि पदार्थाः अनुमानेनैव साधिताः। ततश्च प्रत्यक्षसिद्धमप्यर्थं अनुमानेन साधयन्ति तर्करसिका" इति प्रसिद्धेरयं ग्रन्थ अतीवोज्वलमुदाहरणं भवति। मानमनोहरकारखण्डनावसरे एतस्यानुमानपद्धत्या अवहेलनां कुर्वता आनन्दानुभवेन अद्वैतिना पदार्थतत्त्वनिर्णये (p. 81 R. 2981 MGOML) न्यायरत्नदीपावल्यां (p. 166 R. 5505 MGOML) च एवमुक्तम्—"मानमनोहरेण प्रलपितम्"। मानमनोहरकर्तृशरीरं एतज्जनकागर्दभेतरजन्यम् कार्यत्वात् कुम्भवत् "इत्यपि तेनानुमीयते"। "मानमनोहरकर्तृशरीरं एतज्जनकाचण्डालेतरजनितम् कार्यत्वात्" इत्यादि। मानमनोहरोक्ता युक्तय अनुमानानि च चित्सुखीयतत्त्वप्रदीपिकायां (pp. 22, 24, 327) एवं तत्त्वप्रदीपिकाव्याख्या नयनप्रसादिन्यां (pp. 18, 21, 22, 23, 29, 30, 32, 51, 169, 170, 173, 181, 192, 198, 204, 278, 296, 297, 298, 299, 309-10, 311, 327, 355 Bombay Edn.) दूषिता विद्यन्ते।




मानमनोहरेऽस्मिन् ग्रन्थे भूषणः, (p. 26) व्योमशिवाचार्यः (p. 27) न्यायमकरन्दः (आनन्दबोधीयः p. 44) न्यायलीलावतीकारः श्रीवल्लभः (p. 47) एकदेशिपदेन न्यायकन्दलीकारः श्रीधराचार्यः (p. 50) भासर्वज्ञः (p. 78) इत्येते आचार्या निर्दिष्टाः। ग्रन्थोऽयं षड्दर्शनप्रकाशनग्रन्थमालायां (S.P.G. 2) वाराणस्यां मुद्रितः। ग्रन्थस्यास्य कर्ता चित्सुखात् (1200–1300 A. D.) प्राचीनः न्यायमकरन्दकर्तुरानन्दबोधात् (1050–1150 A.D.) न्यायलीलावती कर्तुः श्रीवल्लभात् (1175 A.D.) च अर्वाचीनः एकादशद्वादशशतकमध्यवर्ती (1100–1200 A.D.) वागीश्वराचार्यपुत्रः शाक्तवाममार्गानुयायी (वाममार्गानु सारिणा मानमनोहरेण (p. 81 R. No. 298 पदार्थतत्वनिर्णये, p. 166 R. 3505 न्यायरत्नदीपावली MGOML) शक्त्युपासकः (नमस्तस्यै या शक्तिश्चित्स्व-रूपिणी) वादिवागीश्वराचार्य इति ज्ञायते। अनेन न्यायलक्ष्मीविलासाख्यः ग्रन्थश्च कृतः यश्च मानमनोहरे (pp. 47, 101) निर्दिष्टः न कुत्रापि लभ्यते च।

## प्रमाणमञ्जरी

द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाख्यान् सप्त पदार्थान् सप्तभिः संक्षिप्तैः प्रकरणैः प्रतिपादयन्नयं वैशेषिको ग्रन्थः भावाभावभेदेन पदार्थविभागं कुर्वन् अन्नम्भट्टीयतर्कसंग्रहतुलामारोहति । षट् हेत्वाभासान् प्रमाणद्वयञ्च स्वीकुर्वन्नयं ग्रन्थः अभावविभागे नूतनां पद्धतिं स्वीकरोति—




मुद्रितोऽयं ग्रन्थः अडयारपुस्तकालये राजस्थानपुरातनग्रन्थमालायां (No. 8) च ।

अस्य रचयिता ग्रन्थारम्भे द्वैमातुरं नमस्कुर्वन् वैदिकः तर्कचूडामणिबिरुदयुक्तः पद्मनाभमिश्रपित्रा बलभद्रमिश्रेण (1500–1600 A. D.) व्याख्यातमूलग्रन्थः सर्वदेवः पञ्चदशशतकात् प्राचीन इति परं ज्ञायते ।

प्रमाणमञ्जरी व्याख्याः–योगवासिष्ठव्याख्यातर्कसंग्रहदीपिकाव्याख्यादि-कर्त्रा अद्वयारण्येन कृता, वामनभट्टेन कृता, पद्मनाभमिश्रपित्रा बलभद्रेण च कृता व्याख्याः विद्यन्ते याश्च राजस्थानपुरातनग्रन्थमालायां मुद्रिताः ॥

## रत्नकोशः

ग्रन्थोऽयं यद्यपि न कुत्रापि लभ्यते परं प्राचीनाः महान्तो नैय्यायिकाः ग्रन्थस्यास्य सिद्धान्ताननुवदन्ति खण्डयन्ति च । यद्यप्ययं ग्रन्थः वैशेषिक इव भाति परं केषुचित्सिद्धान्तेषु स्वीयं विशिष्टं मतं प्रकाशयतीति च ज्ञातुं पार्यते । मणिकण्ठ-मिश्रेण (1200 A. D.) न्यायरत्ने, गङ्गेशोपाध्यायेन (1300 A. D.) तत्वचिन्तामणौ च निर्दिष्टोऽयं ग्रन्थः । द्वितीयवाचस्पतिमिश्रेण तत्वालोके (I. O. L. 205) निर्दिष्टोऽयं ग्रन्थः । गदाधरभट्टाचार्योपाध्यायेन हरिरामतर्कवागीशेन रत्नकोशविचार इति ग्रन्थोऽपि रचितः यश्च सर्वत्र पुस्तकालयेषु लभ्यते ।

तत्र रत्नकोशकारः वह्नितदभावव्याप्यवत्तापरामर्शे सति वह्नितदभावो-भयानुमितिः संशयरूपा उत्पद्यते। तथा च सत्प्रतिपक्षस्थले संशयाकारानुमिति-जनकत्वमेव दूषकताबीजमिति स्वीकरोति इति ज्ञायते। रत्नकोशविचारे च हरि-रामतर्कवागीशेन-रत्नकोषकारस्तु सत्प्रतिपक्षसंबलनदशायां संशयात्मानुमितिं स्वीकरो-तीति उक्तम्। अयमेव विषयः सर्वत्र व्याख्यातृभिश्चानूद्य खण्डितः। तत्र चौखाम्बामुद्रिते गदाधरीसहिते तत्वचिन्तामणौ (p. 1804) गङ्गेशोपाध्यायेन— "रत्नकोषकारस्तु सत्प्रतिपक्षाभ्यां प्रत्येकं स्वसाध्यानुमिति संशयरूपा जन्यते विरुद्धोभयज्ञानसामग्र्याः संशयजनकत्वात् संशयद्वारा अस्य दूषकत्वम्..... मेने" इति। खण्डितश्चायं सिद्धान्तः। दीधितिकृतश्च "रत्नकोषकृतामयमभिप्रायः" इति रत्नकोषाभिप्रायं विशदयन्ति (p. 1804)। गादाधरीकृतश्च (p. 1806) रत्नकोषाभिमतं दीधितिकारः परिष्कर्तुमारभते इति दीधितिग्रन्थमवतारयति। दीधितिकृता अत्राहुरित्यादिना (p. 1813) रत्नकोषकारमतखण्डनमुपन्यस्तम्। मिश्रकृतं रत्नकोषकारमतखण्डनञ्चोपन्यस्तम् (p. 1816)। "संशयविरोधितुल्य-द्वयविषयानुमितिजनकत्वं सत्प्रतिपक्षत्वमिति रत्नकोशः" इति न्यायरत्ने (p. 177 MGOMLS 104) दृश्यते। "रत्नकोष काराभिमतं लक्षणं दूषयितुमुपन्य-स्यतीति" न्यायरत्नव्याख्यायां द्युतिमल्लिकायां (p. 177 MGOMLS 104) अवतारितम्। एवं न्यायसिद्धान्तमुक्तावल्यां (p. 333) निर्णयसागरमुद्रितायां— "अत्र केचित् यथा घटाभावव्याप्यवत्ताज्ञानेऽपि .... तथा सत्प्रतिपक्षस्थलेऽपि संशयरूपा अनुमितिर्भवत्येव इत्याहुः।" इत्युक्तम्। रत्नकोषकारमतं दूषयितु-मुपन्यस्यति-अत्र केचित् इति दिनकरीव्याख्यायां दृश्यते। "ननु रत्नकोष-कारमते" इति रामरुद्री दिनकरीमवतारयति।

एवं उपाधिवादे तत्वचिन्तामणौ (pp. 936-37) "स्यादेतत्—पर्य-वसितसाध्यव्यापकत्वे सति साधनाव्यापक उपाधिः, पर्यवसितं साध्यं पक्षधर्मता-बललभ्यम्, यथा शब्दोऽनित्यत्वातिरिक्तशब्दधर्मातिरिक्तधर्मवान् मेयत्वादित्यत्र पर्यवसितं यत्साध्यं अनित्यत्वं तस्य व्यापकं कृतकत्वमुपाधिः यदि च तथैव कृतकत्वमपि शब्दे साध्यते तदा अनित्यत्वमुपाधिः, तदुक्तम्—वाद्युक्तसाध्यनियम-च्युतोऽपि कथकैरुद्भाव्यः पर्यवसितं नियमयन् दूषकता बीजसाम्राज्यात् इति। अनेन पक्षधर्मसाधनावच्छिन्नसाध्यव्यापकोपाधिः सङ्गृह्यते तादृशसाध्यस्य पर्य-वसितत्वादिति।" इति दृश्यते।

ग्रन्थस्यास्यावतरणिकायां माथुरीरहस्ये (p. 330 B. I. Edn.) "रत्नकोषकारमतमाशङ्कते"—स्यादेतदिति, इति दृश्यते। एवं न्यायरत्ने (p. 86 MGOML S. 104) वाद्युक्तसाध्यनियमच्युतोऽपि कथकैरुपाधिरुद्भाव्यः। पर्यवसितं नियमयन् दूषकताबीजसाम्राज्यात् ॥ इति पद्येन रत्नकोषाशयो वर्णितः। न्यायरत्नव्याख्यायां द्युतिमल्लिकायां (p. 73) यदि तत्र कृतकत्वं साध्यते तदा अनित्यत्वमुपाधित्वेन संगृह्यत इति रत्नकोशकारस्य तात्पर्यम् इति व्याख्यातम्।

एवं न्यायनिबन्धप्रकाशे (p. 341 B. I. S. Edn.) वर्धमानोपाध्यायेन वादलक्षणविचारावसरे—ननु विचित्राभिसन्धित्वात् पुंसां स्वशक्ति-परशक्तितत्वनिर्णयानुद्दिश्य या कथा आरभ्यते नासौ वादः विजिगीषुकथात्वात्। नापि जल्पः तत्वनिर्णयोद्देशेन प्रवृत्तत्वात्। स्वपक्षस्थापनावत्वेन च न वितण्डा। तस्माल्लाभपूजाख्यातीरनुद्दिश्य प्रवर्तितत्वं वादलक्षणमिति रत्नकोषकारः इत्युक्तम्। अस्य मतं खण्डितञ्च।

एवं समवायवादे तत्वचिन्तामणौ प्रत्यक्षखण्डे ( p. 665 Tirupati Edn.) "अत एव संयोगो विशेषणता च प्रत्यासत्तिरस्तु, न तु समवायादिचतुष्टयमिति निरस्तम्" इत्युक्तम्। इदं मतं रत्नकोषकृतामिति वर्धमानग्रन्थाज् ज्ञायते। न्यायनिबन्धप्रकाशे (p. 468 B. I. S. Edn.) विशिष्टबुद्धौ संयोगविशेषणतयोरेव भानम्, न तु समवायादिचतुष्टयस्येति विशिष्टं मतम्। मतमिदं—एतेन संयोगो विशेषणता चेति द्वयोः प्रत्यासत्तिर्नच समवायादिचतुष्टयमिति रत्नकोषकृन्मतमयुक्तम् इत्यनूद्य खण्डितम्। एवं सामान्यविषये रत्नकोषकृतस्तु द्विविधं सामान्यम्—जातिरुपाधिश्च, समवेता जातिः, असमवेतं चोपाधिसामान्यमिति वदन्ति। निरूपितश्चैतत् न्यायनिबन्धप्रकाशे वर्धमानोपाध्यायेन (pp. 194–5 B. I. S.) तन्त्रवार्तिकोद्धरणपूर्वकम्। "अत एव भट्टपादैः जातेरन्यदेव ऋक्त्वादि सामान्यम्, वनादिसामान्यवदभ्युपेतम्। यथाहुः—

यौगिकानां यथा जातेरन्यत्सामान्यमिष्यते।
तथा समूहसामान्यं जातं जातिविलक्षणमिति ॥

तथाच करणत्वपि उपाधिसामान्यमित्याहुः। सिद्धान्तोऽयं खण्डितश्च।

एवं संसर्गाभावविषये रत्नकोषकृतां सिद्धान्तविशेषः रुचिदत्तमिश्रेण शक्तिवादव्याख्या-प्रकाशे (p. 2015 अनुमानचिन्तामणि Ch.S.S.Edn.) निरूपितः।

"केचित्तु अखण्डयोः संसर्गाभावत्वान्योन्याभावत्वयोरुभाभ्यां लक्षणाभ्यां उपलक्षणम्। न च तयोः पदार्थान्तरतापत्तिः, सामान्यान्तर्भावात्। सामान्यं हि द्विविधं—उपाधिर्जातिश्च। तत्रोपाधिर्द्विविधः—सखण्डोऽखण्डश्चेत्युपाधावन्तर्भावात् तत्तेदन्ते इवेति। तथा च रत्नकोशे तरणिमिश्रैरुक्तम्—एवमभावत्वध्वंसत्वादिकं बोध्यमित्याहुः" इति।

एवं तत्वचिन्तामणिप्रत्यक्षखण्डे सविकल्पविचारावसरे स्मृत्यनुभवविषयप्रसक्तौ (p. 884 Tirupati Edn.) अत्र केचिदित्यारभ्य यो विचारः प्रस्तुतः स विचार रत्नकोषग्रन्थस्येति न्यायनिबन्धप्रकाशात् (p. 163 B.I.S.) ज्ञायते। चिन्तामणौ च अत्र केचित् तत्तेदन्ते स्मृत्यनुभवभासिन्यौ अखण्डे एवोपाधी क्लृप्तधर्माति रेकिणौ, एवञ्चेदन्तासंस्कारेणेदन्तैव तत्तया स्मर्यते। न च तत्तायाः क्वचिदनारोपे कथमारोप इति वाच्यम्। प्रत्यभिज्ञायां तत्तांशे यथार्थत्वात्। इदन्तानुल्लेख्यनुभवप्रभवस्मरणे धर्मान्तरमेव तत्तया भासते। अत एव अयं घट इति न स्मरणम् अतस्सर्वा स्मृतिरयथार्था अयथार्थानुभवा च। हरिहराद्यनुचिन्तनञ्च कविकाव्य मूलज्ञानवन्मनोरथज्ञानवच्च साकाङ्क्षपदार्थज्ञानप्रभवमनुभवरूपमेवेति (p. 884 तत्वचिन्तामणि Tirupati Edn) दृश्यते।

अत्र तत्तेदन्ते स्मृत्यनुभवविषयावखण्डोपाधी क्लृप्तधर्मविलक्षणौ। एवं च इदन्तानुभवजन्यसंस्कारेणेदन्तैव तत्तया स्मर्यते ........ इदन्तानुल्लेख्यनुभवप्रभवेऽपि स्मरणे धर्मान्तरमेव तत्तया भासते। अत एवायं घट इति न स्मृतिरिति सर्वा स्मृतिरयथार्था चायथार्थानुभवाच्च प्रमुष्टतत्तांशा च स्मृतिर्नभवत्येव। हरिहरानुचिन्तन कविकाव्यमूलज्ञानवन्मनोरथनिर्मितज्ञानसाकांक्षपदानुस्मरणप्रभवमनुभवरूपमेवेति रत्नकोषकृतः। इति (न्यायनिबन्धप्रकाश p. 163 B.I.S.) दृश्यते। एवं तत्वचिन्तामण्याख्यातवादे धात्वर्थाख्यातार्थविचारावसरे (p. 831 B.I.S.) यत्तु रत्नकोशकारोक्तं धात्वर्थो व्यापारः आख्यातार्थ उत्पादना सा चोत्पादकता सैव भावना पचतीत्यादौ आख्यातस्य पाकमुत्पादयतीति विवरणात् ........ वस्तुतस्तु उत्पादयतीत्यत्र धात्वर्थ एवोत्पादना अतोऽनुत्पादनपरधातूत्तरवर्तिन आख्यातस्यानन्यलभ्यतयोत्पादना वाच्या पचतीत्यादौ यत्नलाभः पाकादिना धात्वर्थाक्षेपात्, नतूत्पादनामात्रेण व्यभिचारादिति इति रत्नकोषकारमतं निर्दिष्टम्। न्यायकोशेऽपि (p. 785) व्यापारे शक्तिरिति रत्नकोशकृतः प्राचीनतार्किकाः, एवं उत्पादकतायां शक्तिरिति दृश्यते। एवं विध्यर्थविचारावसरे शब्दशक्तिप्रकाशिकायां

(p. 417 K.S.S. 109) कृतिगतमेवेष्टसाधनत्वं लिङर्थ इति रत्नकोषकारमतमुपवर्णितम् । तत्र—

रत्नकोषकृतस्तु—पाकादिकृतित्वावच्छिन्नोद्देश्यताकेच्छाया एव पाकादिचिकीर्षात्वात् सैव पाकादौ प्रवर्तिकेति, तस्याञ्च पाकादिकृतित्वावच्छिन्नधर्मिकेष्टसाधनताज्ञानत्वेन हेतुत्वात् कृतिसाध्यत्वस्येष्टसाधनत्वस्य वा धियः कारणत्वाभावेन क्रियागतयोस्तयोरविध्यर्थत्वात् । ................ एवञ्च स्वर्गकामो यजेतेत्यादौ इष्टसाधनीभूतयागकृतिमान् स्वर्गकाम इत्याकार एव बोध इति ........ इत्याहुः ॥ इति दृश्यते । (p. 417 K.S.S. 109)

तथाच रत्नकोषाभिधः न्यायवैशेषिकसिद्धान्तप्रतिपादकः कश्चन महान् स्वतन्त्रग्रन्थः आसीदिति ज्ञायते । तत्वचिन्तामणिप्रकाशे रुचिदत्तमिश्रेण निर्दिष्टत्वात् "तथा च रत्नकोशे तरणिमिश्रैरुक्तम्" इति शक्तिवादे (p. 2015 गादाधरी Ch. S. S. Edn) निर्दिष्टतया च तरणिमिश्र इति रत्नकोशकृतां नाम इति ज्ञायते ।

## न्यायवैशेषिकग्रन्थाः

पूर्वमस्माभिरुपवर्णितम् (p. 78) यत् न्यायदर्शनसाहित्ये एवं वैशेषिकदर्शनसाहित्ये च न्यायसारात् न्यायसिद्धान्तदीपाच्च पूर्वं पश्चाच्च बहवः प्रकरणग्रन्थाः उद्भूताः । तेषु केचन न केवलं न्यायदर्शनोक्तान् षोडशपदार्थान् वर्णयन्ति परन्तु न्यायदर्शनोक्ते यस्मिन् कस्मिन् पदार्थे वैशेषिकोक्तान् षट् पदार्थान् अन्तर्भावयन्ति । अन्ये केचन ग्रन्थाः न केवलं वैशेषिकोक्तान् षट् पदार्थानेव वर्णयन्ति परन्तु न्यायदर्शनोक्तान् षोडश पदार्थान् वैशेषिकोक्ते पदार्थे यस्मिन्नपि कस्मिन् अन्तर्भावयन्ति । एते ग्रन्थाः न्यायवैशेषिका इत्युच्यन्ते । ते ग्रन्था इदानीं निरूप्यन्ते ।

### तार्किकरक्षा—

न्यायशास्त्रोक्तान् पदार्थान् प्रधानतया, वैशेषिकपदार्थान् प्रमेयेऽन्तर्भाव्य गौणतया च प्रतिपादयन्नयं प्रकरणग्रन्थः पण्डितग्रन्थमालायां मुद्रितः । तर्ककारिकापराभिधानोऽयं ग्रन्थः रमणीयवचोगुम्भितैः (97 + 34 + 29 = 160) पद्यैः पूर्णः । मूलकारिकाकारीयया सारसंग्रहाभिधया व्याख्यया च सहितः न्यायदर्शनतत्वबुभुत्सूनां महते उपकाराय भवति । परिच्छेदत्रयात्मकोऽयं ग्रन्थः प्रथमपरिच्छेदे प्रमाणादिछलान्तान्, द्वितीये जातितद्भेदान्, तृतीये निग्रहस्थान तद्भेदांश्च प्रतिपादयति ।

सौगतप्राभाकरभाट्टशाब्दिकादिमतखण्डनपूर्वकं प्रमा-प्रमाणलक्षणकथनम्, प्रमाणविभागः, प्रत्यक्षलक्षणम्, सौगतशाब्दिकादिमतखण्डनपूर्वकं सविकल्पक निर्विकल्पकलक्षणकथनम्, अनुमानविचारे अनुमानलक्षणम्, व्याप्तिविचारः उपाधिविचारः उपाधिद्वैविध्यम्, अनुमानभेदाः, लक्षणस्य व्यतिरेक्यनुमानात्मकत्वम्, उपमानविचारे उपमानभेदाः, मीमांसकमतखण्डनम्, शाब्दप्रामाण्यवर्णनम्, अर्थापत्यादीनां प्रमाणान्तरत्वनिरासः, अनुपलब्धि - अभावयोः प्रमाणान्तरत्ववादिनां प्राभाकराणां मतखण्डनम्, इत्येते विषयाः प्रमाणपदार्थनिरूपणावसरे वर्णिताः ।

प्रमेयपदार्थनिरूपणावसरे मोक्षे साक्षादनङ्गत्वेऽपि परम्परया मोक्षोपयोगिज्ञानविषयाणां वैशेषिकोक्तानां द्रव्यादिषट्पदार्थानां संक्षिप्तो विचारः प्रस्तुतः । तत्र द्रव्यविभागे पृथिव्यादीनां उद्देशक्रमकारणकथनम्, सविस्तरं कस्य द्रव्यस्य के के गुणा इति कथनञ्च ग्रन्थस्यास्य विशेषः । संशयादिनिरूपणम्, तर्कस्य सर्वप्रमाणानुग्राहकत्वम्, पञ्चहेत्वाभासनिरूपणावसरे साधारणासाधरणभेदेन अनैकान्तिकस्य (सव्यभिचारस्य) भेदवर्णनम्, दृष्टान्ताभासानां हेत्वाभासेऽन्तर्भावश्चात्र नूत्नो विषयः । एवं भेदत्रययुक्तछलवर्णनेन प्रथमपरिच्छेदस्समाप्तः ।

द्वितीये जातिलक्षणविचारप्रधाने परिच्छेदे बौद्धोक्तलक्षणपरिशीलनपूर्वकं प्रतिधर्मसमादीनां कार्यसमान्तानां चतुर्विंशतिजातीनां लक्ष्यलक्षणविचारः कृतः । तृतीये निग्रहस्थानविचारप्रधाने परिच्छेदे प्रतिज्ञाहान्यारब्धानां हेत्वाभासान्तानां निग्रहस्थानानां लक्ष्यलक्षणपूर्वकसुनिपुणविचारः, अप्राप्तकालताया विचारावसरे भूषणकारोक्तिखण्डनम्, वादे असम्भाव्यानां अनुद्भावनीयानां उद्भावनीयानाञ्च निग्रहस्थानानां निर्देश इत्येते निरूपिताः ।

ग्रन्थेऽस्मिन् बहुत्र आचार्यशब्देन उदयनः निर्दिष्टः । केवलमेकत्रैव नाम्ना निर्दिष्टः । शालिकनाथः वाचस्पतिमिश्रः विश्वरूपः जयन्तः त्रिलोचनः भूषणकारश्च निर्दिष्टाः । न्यायैकदेशिशब्देन मूलाचार्यशब्देन केचन प्राचीना न्यायाचार्याः निर्दिष्टाः । न्यायपरिशिष्टस्य प्रबोधसिद्धिरिति नामान्तरमपि ग्रन्थेऽस्मिन् (pp. 310, 343) निर्दिष्टम् ।

अस्य रचयिता महामहोपाध्याय रामदेवमिश्रपुत्रः सर्वदर्शनसंग्रहकारात् प्राक्तनः वरदाचार्य इति प्रसिद्धः न्यायविद्याविदग्धः मीमांसापारदृश्वा किरणावलीव्याख्या—न्यायदिपिका, - कुसुमाञ्जलिव्याख्या - बोधिनीकर्ता एकादशशतकीयः (1050 A.D.) वरदराजमिश्र इति ज्ञायते ।

## तार्किकरक्षायां पदार्थविभागः

- प्रमाण 4
  - प्रत्यक्ष
    - सविकल्पक
    - निर्विकल्पक
  - अनुमान
    - अन्वयि
    - व्यतिरेकि
    - अन्वय व्यतिरेकि
  - उपमान
    - साधर्म्य
    - धर्ममात्र
    - वैधर्म्य
  - शब्द
- प्रमेय
  - 12
    - 1 आत्मा
    - 2 शरीर
    - 3 इन्द्रिय
    - 4 अर्थ
    - 5 धी:
    - 6 मनस्
    - 7 दोष
    - 8 प्रवृत्ति
    - 9 प्रेत्यभाव
    - 10 फल
    - 11 दुःख
    - 12 मोक्षः
  - 7
    - 1 द्रव्य
    - 2 गुण
    - 3 कर्म
    - 4 सामान्य
    - 5 विशेष
    - 6 समवाय
    - 7 अभाव
- संशय 3
  - समानधर्महेतुकः
  - अनेकधर्महेतुकः
  - विमतिहेतुकः
- प्रयोजन
- दृष्टान्त
  - साधर्म्य
  - वैधर्म्य
- सिद्धान्त
  - सर्वतन्त्र
  - प्रतितन्त्र
  - अधिकरण
  - अभ्युपगम
- अवयव 5
  - प्रतिज्ञा
  - हेतु
  - उदाहरण
  - उपनय
  - निगमन
- तर्क 5
  - आत्माश्रय
  - इतरेतराश्रय
  - चक्रकाश्रय
  - अनवस्था
  - अनिष्टप्रसङ्ग
    - प्रामणिकपरित्याग
    - अप्रामणिकस्वीकार
- निर्णय
- कथा
  - वाद
  - जल्प
  - वितण्डा
- हेत्वाभासा 5
  - सव्वभिचारः
    - साधारण
    - असाधारण
  - विरुद्ध
  - प्रकरणसम (विरुद्धाव्यभिचारी)
  - साध्यसम (आसिद्धि)
    - व्याप्यत्वासिद्धि
    - आश्रयासिद्धिः
    - स्वरूपासिद्धिः
    - अज्ञानासिद्धिः
  - अतीतकाल
- छल
  - वाक्छल
  - सामान्यछल
  - उपचारछल
- जाति
- निग्रहस्थान

# तर्किकरक्षायां जाति – निग्रहस्थानानि

## जातिः

| | | |
|---|---|---|
| प्रतिधर्मसमा | वैधर्म्यसमा | उत्कर्षसमा |
| अपकर्षसमा | वर्ण्यसमा | अवर्ण्यसमा |
| विकल्पसमा | साध्यसमा | प्राप्तिसमा |
| अप्राप्तिसमा | प्रसङ्गसमा | प्रतिदृष्टान्तसमा |
| अनुत्पत्तिसमा | संशयसमा | प्रक्रियासमा |
| हेतुसमा | अर्थापत्तिसमा | अविशेषसमा |
| उपपत्तिसमा | उपलब्धिसमा | अनुपलब्धिसमा |
| अनित्यसमा | नित्यसमा | कार्यसमा |

## निग्रहस्थानानि

| | | |
|---|---|---|
| प्रतिज्ञाहानिः | प्रतिज्ञान्तरम् | प्रतिज्ञाविरोधः |
| प्रतिज्ञासंन्यास | हेत्वन्तर | अर्थान्तर |
| निरर्थक | अविज्ञातार्थ | अपार्थक |
| अप्राप्तकाल | न्यून | अधिक |
| पुनरुक्त | अननुभाषण | अज्ञान |
| अप्रतिभा | विक्षेप | मतानुज्ञा |
| पर्यनुयोज्योपेक्षण | निरनुयोज्यानुयोग | अपसिद्धान्त |
| | हेत्वाभासाः | |

तार्किकरक्षाव्याख्याः—

(1) तर्ककारिकापराभिधायाः तार्किकरक्षायाः मूलकारेण वरदराजमिश्रेणैव कृता सारसंग्रहाख्या व्याख्या कारिकया साकमेव प्रसिद्धा या पण्डितग्रन्थमालायां (No. 21) मुद्रिता च ।

(2) प्रशस्तपादभाष्यव्याख्यायाः भाष्यनिकषायाः कर्त्रा कालिदासीयकाव्य-अमरकोश-काव्यादर्श-तन्त्रवार्तिक-लघुशब्देन्दुशेखरादीनां व्याख्याकारेण पदवाक्यप्रमाणपारावारपारीणेन आन्ध्रदेशजेन प्रौढदेवरायकालीनेन ( 1416 A. D.) पेद्दयार्य-प्रतापरुद्रीयव्याख्याकार-कुमारभवस्वामिनोः पित्रा कोलाचलमल्लिनाथसूरिणा कृता तार्किकरक्षाव्याख्या निष्कण्टकाख्या पण्डितग्रन्थमालायां (No. 21) मुद्रिता । सुन्दरवचनपूर्णा सुमधुरशैलीयुता मूलग्रन्थावबोधने उपकुर्वतीयं व्याख्या तार्किकरक्षाकारकृतां न्यायकुसुमाञ्जलिव्याख्याम्, (p. 46), मल्लिनाथीयां प्रशस्तपादीयव्याख्यानिष्कण्टिकां (pp. 76, 139), विलासकारम् (p. 129), निकषाख्यं ग्रन्थञ्च (pp. 142, 148) निर्दिशति । व्याख्येयं प्रथमपरिच्छेदान्तमेव मुद्रिता । द्वितीयतृतीयपरिच्छेदयोरपि व्याख्या लिखितेति (pp. 109, 2(7) पृष्ठाज् ज्ञायते । परं न कुत्रापि लभ्यत इति महान् विषादः ।

(3) विष्णुस्वामिशिष्येण ज्ञानपूर्णेन कृता काचन लघुदीपिकाख्या तार्किकरक्षाव्याख्या द्वितीयतृतीयपरिच्छेदयोरेव पण्डितग्रन्थमालायां ( No. 21 ) मुद्रिता । प्रथमपरिच्छेदस्य व्याख्या अतीव त्रुटिपूर्णा खण्डिता चैव लभ्यते । ज्ञानपूर्णकालः द्वादशं अथवा चतुर्दशकं शतकमिति (1200 अथवा 1400 A.D.) विमर्शकाशयभेदः ।

(4) सर्वज्ञविष्णुभट्टपुत्रेण विजयनगरमहाराजहरिहरपोषितेन आन्ध्रदेशजेन चिन्नम्भट्टाख्येन चेन्नुभट्टेन (1400 A.D.) सारसंग्रहविवरणाख्या तार्किकरक्षाव्याख्या कृता या अमुद्रिता अडयारमद्रासतिरुवनन्तपुरपुस्तकालयेषु लभ्यते । चेन्नुभट्टेन तार्किकरक्षोक्तन्यायाचार्यरीतिमवलम्ब्यैव केशवमिश्रेण तर्कभाषा कृतेति तर्कभाषायां व्यतिरेकिहेतुनिरूपणावसरे (p. 145) वर्णितम् ।

चेन्नुभट्टेन इन्द्रियलक्षणान्तां तार्किकरक्षाव्याख्यां कृत्वा व्याख्यां असमाप्यैव भौतिकशरीरं त्यक्तमिति तच्छिष्येण रामेश्वरार्येण कृतायाः व्याख्यायाः ज्ञायते ।

(5) चेन्नुभट्टेन असमापितायाः तार्किकरक्षाव्याख्यायाः समापनं तच्छिष्येण रामेश्वरार्येण (1400 A.D.) कृतम् । व्याख्याया अस्याः नाम सारसंग्रहभूषिका इति । इन्द्रियलक्षणादारब्धा निग्रहस्थानान्ता व्याख्येयं अमुद्रिता तिरुवनन्तपुरपुस्तकालये अडयारपुस्तकालये च लभ्यते ।

(6) भारद्वाजगोत्रजेन नृसिंह-बोम्मगण्डप्पयाचार्ययोः शिष्येण हरिहरदीक्षितेन कृता काचन सारसंग्रहविवृत्याख्या अमुद्रिता मद्रासतञ्जपुरपुस्तकालययोर्लभ्यते ।

(7) विनायकभट्टेन कृता न्यायकौमुद्याख्या व्याख्या बन्दरगारपुस्तकालये, नृसिंहठक्कुरेण कृता (8) प्रकाशिकाख्या, अनन्तभट्टपुत्रकृता (9) व्याख्या, सरस्वतीतीर्थकृता (10) व्याख्या चेति तिस्रः व्याख्याः बरोडापुस्तकालये, सुन्दरराजकृता काचन (11) व्याख्या अडयारपुस्तकालये चेति व्याख्या अपूर्णा अमुद्रिताश्च लभ्यन्ते ।



**तर्कभाषा**

प्रमाणप्रमेयाख्यभागद्वयविभक्तोऽयं ग्रन्थः। प्रमाणपदार्थनिरूपणे षोडश-पदार्थान् निर्दिश्य प्रमाकरणं प्रमाणमित्यारभ्य कारणत्वलक्षणप्रसंगात् कारणत्व-करणत्वे निरुच्य विभज्य अनधिगतार्थगन्तृ प्रमाणमिति मतं खण्डयति। प्रमाणानि चतुर्धा विभज्य प्रत्यक्षलक्षणमुपवर्ण्य सलक्षणे सविकल्पनिर्विकल्पप्रत्यक्षे विशदय्य षोढा संनिकर्षं व्याख्याय प्रत्यक्षविचार अवसितः। अनुमानप्रकरणे लिङ्गपरामर्शोऽनु-मानमिति निर्दिश्य स्वार्थपरार्थभेदेन विभज्य परार्थानुमानावश्यकान् पञ्चावयवान् निर्दिश्य सलक्षणं सप्रकारं हेत्वाभासं निर्दिशति। अतिदेशवाक्यार्थस्मरणसहकृतं गोसादृश्यविशिष्टपिण्डज्ञानमुपमानमिति उपमानमुपवर्ण्य, शब्दप्रकरणे आप्तवाक्यं शब्द इति शब्दलक्षणं उक्त्वा वाक्यलक्षणप्रसङ्गात् आकाङ्क्षायोग्यतासंनिधीनां लक्षणमितरसिद्धान्तखण्डनपूर्वकं विशदयति। अर्थापत्त्यनुपलब्ध्योः पृथक्प्रामाण्यं दूषित्वा प्रामाण्यस्य परतस्त्वं युक्तमिति साधितम्।

आत्मेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गभेदेन प्रमेयाणां निरूपणप्रसंगात् बुध्याद्यष्टगुणोपेतं देहेन्द्रियादिव्यतिरिक्तं प्रतिशरीरं भिन्नं विभुं नित्यमात्मानं साधयति। प्रमेयान्तर्गतं अर्थं द्रव्यादिभेदेन षोढा विभज्य तेषा-मवान्तरभेदमुपवर्ण्य सविस्तरं संशयादीनन्यानपि पदार्थान् विशदयति। अव्याप्तिं भागासिद्धे, अतिव्याप्तिं व्याप्यत्वासिद्धे, असम्भवं स्वरूपासिद्धेचान्तर्भावयति। मुद्रितोऽयं ग्रन्थः हरिदाससंस्कृतग्रन्थमालायाम् (No. 229), बाम्बेसंस्कृत-प्राकृतग्रन्थमालायाम्, (No. 84) पण्डितग्रन्थमालायाम्, अन्यत्र च।

---

अस्य रचयिता केशवमिश्रः द्वादशशतकीय इति ज्ञायते। अनेन स्वग्रन्थे न कोऽपि ग्रन्थः ग्रन्थकारो वा निर्दिष्टः। सिद्धान्तेषु उदयनाचार्यं अनुसरति। कुसुमाञ्जलीतः कानिचन उद्धरणानि उद्धृतानि। त्रयोदशशतकीयैर-न्यैश्च व्याख्यातत्वात् तत्पूर्वतन इति परं ज्ञातुं पार्यते। केचन विमर्शका एनं द्वितीयवाचस्पतिपौत्रं मैथिलं चतुर्दशशतकीयं मन्वते। अस्य शिष्यः गोवर्धनमिश्र इति ज्ञायते।

## तर्कभाषायां — पदार्थविभागः





तर्कभाषायां प्रमेयविभागः
आत्मा
शरीर
इन्द्रिय 6
अर्थ
बुद्धि
मनस्
प्रवृत्ति
दोष
प्रेत्यभाव
फल
दुःख
अपवर्ग
घ्राण
रसना
चक्षुस्
त्वक्
श्रोत्र
मनस्
अनुभव
स्मरण
यथार्थ
अयथार्थ
संशय
तर्क
विपर्यय
यथार्थ
अयथार्थ
(स्वप्ने)
धर्म
अधर्म
1 राग
2 द्वेष
3 मोह
मुख्य
गौण


तर्कभाषायां अर्थविभागः
द्रव्य 9
गुण 24
कर्म
सामान्य
विशेष
समवाय
अभाव
1 उत्क्षेपण
2 अपक्षेपण
3 आकुञ्चन
4 प्रसारण
5 गमन
1 पर
2 अपर
संसर्गाभाव
अन्योन्याभाव
प्रागभाव
प्रध्वंसाभाव
अत्यन्ताभाव
पृथिवी
अप्
तेजस्
वायु
आकाश
काल
दिक्
आत्मा
मनस्

# तर्कभाषायां गुणविभागः

- रूप
  - 1 शुक्ल
  - 2 नील
  - 3 पीत
  - 4 रक्त
  - 5 हरित
  - 6 कपिश
  - 7 चित्र
- रस
  - 1 मधुर
  - 2 अम्ल
  - 3 लवण
  - 4 कटु
  - 5 कषाय
  - 6 तिक्त
- गन्ध
  - 1 सुरभि
  - 2 असुरभि
- स्पर्श
  - 1 शीत
  - 2 उष्ण
  - 3 अनुष्ण
- संख्या
  - 1 नित्या
  - 2 अनित्या
- परिमाण
  - 1 अणु
  - 2 महत्
  - 3 दीर्घ
  - 4 ह्रस्व
- पृथक्त्व
  - एकपृथक्त्व
    - नित्य
    - अनित्य
  - द्विपृथक्त्वादि
    - अनित्य
- संयोग
  - अन्यतरकर्मज
  - उभयकर्मज
  - संयोगज
- विभाग
  - अन्यतरकर्मज 1
  - उभयकर्मज 2
  - विभागज 3
- परत्व
  - 1 दिक्कृत
  - 2 कालकृत
- अपरत्व
  - 1 दिक्कृत
  - 2 कालकृत
- गुरुत्व
- द्रवत्व
- स्नेह
- शब्द
  - 1 संयोगज
  - 2 विभागज
  - 3 शब्दज
- बुद्धि
  - 1 नित्या
  - 2 अनित्या
- सुख
- दुःख
- इच्छा
- द्वेष
- प्रयत्न
- धर्म
- अधर्म
- संस्कार
  - वेगः
  - भावना
  - स्थितिस्थापकः

# तर्कभाषायां संशयादिविभागः



## तर्कभाषायां जाति – निग्रहस्थानभेदाः

### जातिः 24

| | | |
|---|---|---|
| उत्कर्षसमा | अपकर्षसमा | साधर्म्यसमा |
| वैधर्म्यसमा | वर्ण्यसमा | अवर्ण्यसमा |
| विकल्पसमा | साध्यसमा | प्राप्तिसमा |
| अप्राप्तिसमा | प्रसङ्गसमा | प्रतिदृष्टान्तसमा |
| अनुत्पत्तिसमा | संशयसमा | प्रकरणसमा |
| अहेतुसमा | अर्थापत्तिसमा | अविशेषसमा |
| उपपत्तिसमा | उपलब्धिसमा | अनुपलब्धिसमा |
| नित्यसमा | अनित्यसमा | कार्यसमा |

### निग्रहस्थानम् 22

| | | | |
|---|---|---|---|
| न्यून | अधिक | अपसिद्धान्त | अर्थान्तर |
| अप्रतिभा | मतानुज्ञा | विरोध | प्रतिज्ञानिः |
| प्रतिज्ञान्तर | प्रतिज्ञासंन्यास | हेत्वन्तर | निरर्थक |
| अविज्ञातार्थ | अपार्थक | अप्राप्तकाल | पुनरुक्त |
| अननुभाषण | अज्ञान | विक्षेप | पर्यनुयोज्योपेक्षण |
| निरनुयोज्यानुयोग | हेत्वाभासाः | | |

तर्कभाषाव्याख्या:—

भवनाथठक्कुरपुत्रेण गोपीनाथठक्कुरेण (1700 A. D.) कृता काचन भाव प्रकाशिकाख्या उज्वलेत्यपरनाम्नी तर्कभाषाव्याख्या अमुद्रिता अडयार तञ्जपुर-तिरुवनन्तपुर मैसूरबम्बईलन्दनपुस्तकालयेषूपलभ्यते । अस्या अपि व्याख्याया: व्याख्या: तर्कतिलकाख्या अज्ञातकर्तृनामधेया मद्रासपुस्तकालये, अप्पयार्यपुत्रेण अनन्तार्येण कृता काचन न्यायविवेकाख्या मद्रास पुस्तकालये, अन्या काचन व्याख्या तञ्जपुरपुस्तकालये लभ्यन्ते ।

एवं नारायणभट्टेन विन्निभट्टेन च कृते तर्कभाषाटीके बन्दरगारपुस्तकालये, भानुचन्द्रगणिशिष्येण जैनेन सिद्धचन्द्रेण (1740 A. D.) कृता काचन तर्कभाषाटीका जैनग्रन्थावलीसूच्याम्, गङ्गाधरभट्टपुत्रेण पद्मनाभभट्टशिष्येण मुरारिभट्टेन (1700 A. D.) कृता काचन टीका मैसूरबन्दरगारतञ्जपुरपुस्त-कालयेषु लभ्यन्ते ।

एवं उमा-गोविन्ददीक्षितयो: पुत्रेण सांख्ययोगसूत्रवृत्तिकर्त्रा गणेशदीक्षितेन (1700 A. D.) कृता काचन तत्वप्रबोधिन्याख्या तर्कभाषाव्याख्या अमुद्रिता तञ्जपुर-तिरुवनन्तपुर अडयार-मद्रास-मैसूर-बाम्बेपुस्तकालयेषु लभ्यते । अस्या अपि व्याख्या पूर्वाश्रमे कालहस्तीशयज्ञाम्बयो: पुत्रेण अद्वैतिना रङ्गनाथाभिधेन स्वयंप्रकाशानन्दसरस्वत्या: प्राप्तसन्यासेन शिष्येण अद्वैतरत्नकोशव्याख्याभाव-प्रकाशिका – न्यायसिद्धान्तदीपव्याख्याचन्द्रिका – भामतीव्याख्याऋजुप्रकाशिकानां कर्त्रा अखण्डानन्दसरस्वत्या (1700 A. D.) कृता अमुद्रिता मद्रास मैसूर पुस्त-कालययोर्लभ्यते । एवं चोक्कनाथशास्त्रिण: पौत्रेण द्वादशाहेज्यसूरिपुत्रेण गंडनृसिंह शिष्येण अद्वैतरत्नकोशपूरणीकर्त्रा अग्निहोत्रसूरिणा (1650 A. D.) कृता काचन तत्वप्रबोधिनीव्याख्या तर्कोज्जीविनीति ख्याता अमुद्रिता मद्रास-बाम्बे मैसूर-तिरुवनन्तपुरपुस्तकालयेषु लभ्यते । एवं सप्तदशशतकीयेन विश्वनाथभट्टेनकृता काचन न्यायविलासाख्या तत्वप्रबोधिनीव्याख्या अमुद्रिता अडयार-मैसूर-तञ्जपुर तिरुवनन्तपुरपुस्तकालयेषु लभ्यते । गौरीकान्तसार्वभौमभट्टाचार्यस्य (1700 A. D.)

भावार्थदीपिकाख्या व्याख्या अमुद्रिता वाराणसीसंस्कृतकलाशालापुस्तकालये (Mss. 156) लभ्यते। भावार्थविवरणमित्यपि नाम दृश्यते।

एवं पद्माकरभट्टपुत्रेण दिनकरभट्टेन कृता काचन कौमुद्याख्या तर्कभाषाव्याख्या बम्बईप्रान्तीयामुद्रितग्रन्थसूच्यां दृश्यते। एवमाधुनिकेन (1943 A.D.) रुद्रधरझानामकविदुषा विरचिता काचन तर्कभाषाव्याख्या तत्वालोकाख्या सरला हरिदास संस्कृतग्रन्थमालायां (No. 299) मुद्रिता। एवं तर्कतरङ्गिण्याख्या तर्कभाषव्याख्या गुणरत्नगणिनामकेन (1700 A.D.) जैनेन कृता इति (G O.S. 15 p. 18) एवं बरोडानुसन्धानालयपत्रिकायाश्च (J. O R. B. Vol. 8. pp. 343-45) ज्ञायते।

एवं अनन्तभट्टपुत्रेण केशवभट्टपौत्रेण लौगाक्षिकुलजेन न्यायचन्द्रिकाख्य न्यायसूत्रवृत्तिकारेण (BORI, MGOML) केशवभट्टेन (1500 A.D.) कृता काचन तर्कभाषाव्याख्या तर्कदीपिकाख्या अमुद्रिता मद्रासतञ्जपुरपुस्तकालययोर्लभ्यते। अस्या व्याख्याया अपि व्याख्या भाषाप्रकाशाख्या केशवमिश्रेण कृता काचन बन्दरगारपुस्तकालये लभ्यते।

एवं तत्वचिन्तामणिकारगङ्गेशोपाध्यायपुत्रेण वर्धमानोपाध्यायेन (1400 A.D.) कृता काचन तर्कभाषाप्रकाशाख्या व्याख्या आसीदिति, तस्या अपि रुचिदत्तमिश्रेण (1600 A.D.) कृता तर्कप्रकाशाख्या व्याख्या आसीदिति च अालवारमहाराजपुस्तकालयसूच्याः ज्ञायते। एवं श्रीरामकृता तर्कभाषातात्पर्याख्या काचन व्याख्या अडयारपुस्तकालये लभ्यते।

एवं विजयश्रीबलभद्रयोः पुत्रेण विश्वनाथपद्मनाभभ्रात्रा केशवमिश्रशिष्येण न्यायबोधिनीकर्त्रा गोवर्धनमिश्रेण (1570 A.D.) कृता काचन तर्कभाषा प्रकाशाख्या व्याख्या पूनानगरे मुद्रिता। अस्या अपि जैनेन गुणरत्नगणिना कृता काचन व्याख्या तर्कतरङ्गिण्याख्या बरोडा पुस्तकालये, बालकृष्णसरस्वतीशिष्येण गौरीकान्तसार्वभौमभट्टाचार्येण कृता काचन भावार्थदीपिकाख्या व्याख्या या माधवदेवीयतर्कभाषासारमञ्जरीखण्डनपरा अमुद्रिता मद्रासतिरुवनन्त-

पुर बरोडाबन्दरगार बाम्बे अडयार मैसूर लन्दनपुस्तकालयेषु, काश्मीरिणा केनचित् कृता व्याख्या अनन्तशयनपुस्तकालये, गोपीनाथेन कृता काचन व्याख्या मैसूरुपुस्तकालये, व्यम्बेश्वरपुत्रेण चन्द्रशेखरेण कृता काचन उज्वलाख्या व्याख्या तेलुगुअकादमिसूच्यामिति व्याख्याः दृश्यन्ते ।

एवं तर्कभाषातत्वबोधिनीव्याख्यात्रा पूर्वोक्तेन अखण्डानन्दसरस्वत्या कृता काचन प्रकाशाख्या स्वतन्त्रव्याख्या तर्कभाषाया अडयार मद्रासपुस्तकालययोर्मुद्रिता लभ्यते । एवं सर्वज्ञविष्णुभट्टपुत्रेण सर्वज्ञानुजेन विजयनगरमहाराज हरिहरपोषितेन आन्ध्रजेन चिन्नम्भट्ट-चैतन्यभट्ट इत्याख्यातेन चेन्नुभट्टेन (1400 A.D.) कृता काचन प्रकाशिकाख्या तर्कभाषाव्याख्या संस्कृतप्राकृतग्रन्थमालायां (No 84) बाम्बेनगरे मुद्रिता । चिन्नभट्टीयव्याख्यारीत्या तार्किकरक्षोक्तन्यायाचार्यरीतिरेव केशवमिश्रेणावलम्बितेति व्यतिरेकिहेतुनिरूपणावसरे (p. 145) निरूपिता । कन्दलीकार (p. 211) वादीन्द्रः (p. 214) प्रकरणसमनिरूपणावसरे भूषणकारखण्डनम् (p 157) साधनाव्यापकाः रसाध्यसमव्याप्ता उपाधय इति भूषणे भासर्वज्ञः (p. 133) तार्किकरक्षा (p. 145) इत्यादिग्रन्थानां ग्रन्थकाराणञ्च निर्देश अस्या व्याख्याया विशेषः । व्याख्यायामस्यां (p. No. 211) शालिकनाथकृता प्रशस्तपादभाष्यव्याख्या निर्दिष्टा । चेन्नुभट्टीयव्याख्याया अपि व्याख्याः—पेद्धिभट्टशिष्येण विष्णुभट्टेन कृता चेन्नुभट्टीयव्याख्यागतलक्षणानां व्याख्यानपरा काचन निरुक्तिविवृत्याख्या व्याख्या अडयारमद्रासतञ्जपुरतिरुवनन्तपुरपुस्तकालयेषु लभ्यते । नरहरिमिश्रेण कृता काचन न्यायप्रकाशिकाख्या व्याख्या मद्रास पुस्तकालये लभ्यते । पेरमाम्बनृसिंहसूरिपुत्रेण रूपल्लेवेंकटबुधेन कृता काचन चिन्नम्भट्टीयव्याख्या तर्कसाराख्या विश्वभारतीअडयारमद्रासमैसूर तिरुवनन्तपुरपुस्तकालयेषु प्राप्यते । एवं अज्ञातकर्तृनामधेया काचन टिप्पणी मद्रासपुस्तकालये लभ्यते ।

एवं मुरारिभट्टशिष्येण कौण्डिन्यदीक्षितेन कृता काचन प्रकाशिकाख्या व्याख्या वाराणसीबरोडालन्दनपुस्तकालयेषु लभ्यते । बलभद्रकृता भाषा-

प्रकाशिकाख्या व्याख्या अडयारबरोडातिरुवनन्तपुरवाराणसीपुस्तकालयेषु लभ्यते । जैनेन शुभविजयगणिना कृता (1607 A.D.) काचन वार्तिकाख्या विवरणापरनाम्नी व्याख्या बरोडापुस्तकालये लभ्यते । नृसिंहराजीयाख्या काचन व्याख्या नृसिंहराजेन कृता अडयार पुस्तकालये, न्यायप्रकाशिकाख्या नरसिंहमिश्रेण कृता मद्रासपुस्तकालये च लभ्यते । दामोदरशिष्येण वाराणसीवासिना विश्वकर्मणा बाणाक्षिराममूमिते काले (1403 A. D.) कृता न्यायप्रदीपाख्या काचन तर्कभाषाव्याख्या रुचिदत्तव्याख्यां (p. 155) निर्दिशति पण्डित ग्रन्थावल्यां मुद्रिता च । रुक्माङ्गदपुत्रेण रामलिङ्गपण्डितेन (1460 A. D.) कृता काचन न्यायसंग्रहाख्या व्याख्या लन्दनपुस्तकालये लभ्यते । भास्करभट्टेन कृता दर्पणाख्या काचन व्याख्या कलकत्ताराजपुस्तकालये लभ्यते । रामभद्रतीर्थकृता काचन प्रकाशाख्या व्याख्या तञ्जपुरसरस्वती महालये, अज्ञातकर्तृनामधेयाभ्यां द्वाभ्यां व्याख्याभ्यां सहिता काचन प्रकाशिकाख्या व्याख्या मेघनादार्यशिष्येण कृता मैसूरअडयारअनन्तशयनपुस्तकालयेषु, वागीशभट्टेन कृता काचन प्रमादिन्याख्या व्याख्या बन्दरगारपुस्तकालये, नागेशभट्टेन कृता काचन युक्तिमुक्तावल्याख्या व्याख्या आफ्रेटसूच्यां, रामशास्त्रिणा कृता वादकौस्तुभा (वादरत्नावल्या)ख्या व्याख्या अडयारमैसूरपुस्तकालययोः, काशीनाथशास्त्रिकृता व्याख्या मद्रासबाम्बेसूच्याम्, गङ्गाधरभट्टकृता काचन व्याख्या बन्दरगारपुस्तकालये, गुड्डुभट्टकृता काचन व्याख्या आफ्रेट सूच्याम्, विरूपाक्षमिश्रकृता काचन व्याख्या बीकानेरपुस्तकालये, श्रीकण्ठकृता काचन व्याख्या आलवार्सूच्याम्, हर्षरत्नकृता काचन व्याख्या अमेरिकासूच्याम्, इति व्याख्याः दृश्यन्ते । एवमाधुनिकेन बद्रीनाथशुक्लेन कृता काचन व्याख्या मोतीलालबनारसीदासमुद्रणालये मुद्रिता । एवं माधवदेवपौत्रेण लक्ष्मणदेवपुत्रेण माधवभट्टेन परमानन्दशिष्येण हुताशपाथोधिद्वयेन्दुमिते शाके (1831 A. D.) कृता काचन सारमञ्जर्याख्या व्याख्या अडयारबरोडाबन्दरगारबाम्बेलन्दनपुस्तकालयेषु अमुद्रिता लभ्यते । एवं अज्ञातकर्तृनामधेया अपरा बालबोधिन्याख्या राधाकृष्णसूच्यां दृश्यते ।

# तर्कभाषा — व्याख्याः

उज्वला | कौमुदी | टीकाः | तत्वप्रबोधिनी | तत्वालोकः | तर्कतरङ्गिणी | तर्कदीपिका | तात्पर्य | दर्पण | नृसिंह-राजीय | न्यायप्रकाशिका | न्यायप्रदीप

तर्कतिलक | व्याख्या | न्यायविवेक | तर्कोज्जीविनी | व्याख्या | न्यायविलासः | भाषाप्रकाशः

नारायण भट्ट | मुरारि भट्ट | विश्वि भट्ट | सिद्धिचन्द्र

प्रकाशिकाः | प्रकाशः | न्यायसंग्रहः

चेन्नुभट्टीया | मेघनादार्यकृता | कौण्डिन्य दीक्षित | गोवर्धनकृतः | अखण्डानन्दकृतः | वर्धमानोपाध्यायकृतः | रामभद्रकृतः

व्याख्या | व्याख्या | तर्कप्रकाशः (रुचिदत्त)

तर्कतरङ्गिणी | भावार्थदीपिका | व्याख्या

निरुक्तिविवृति | न्यायप्रकाशिका | टिप्पणी | तर्कसार | काश्मीरिणाकृता | चन्द्रशेखरकृता | गोपीनाथकृता

प्रसादिनी | बालबोधिनी | भावार्थदीपिका | भाषाप्रकाशिका | युक्तिमुक्तावली | वादकौस्तुभः | वार्तिक | व्याख्याः | सारमञ्जरी

काशीनाथीया | गङ्गाधरीया | गुड्डुभट्टीया | बद्रीनाथीया | विरूपाक्षीया | श्रीकण्ठीया | हर्षरत्नीया

न्यायरत्नम्—

गौतमोक्तषोडशपदार्थेषु तर्क-अवयव-वाद-जल्प-वितण्डा-हेत्वाभास-छल-जाति-निग्रहस्थानान्येव सपरिकरं निरूपयन्नयं प्रकरणग्रन्थः मद्राससर्वकारीयहस्तलिखितपुस्तकालयग्रन्थमालायां (No. 104) मुद्रितः ।

तर्क-व्याप्ति-उपाधि-पक्षता-परामर्श-न्याय-अवयव-कथा-वाद-जल्प-वितण्डा-हेत्वाभास-छल-जाति-निग्रहस्थान-महाविद्याख्यैष्षोडशभिः प्रकरणैः पूर्णोऽयं प्रौढः ग्रन्थः । ग्रन्थेऽस्मिन् न केवलं सर्वप्रमाणानुग्राहकत्वेन परन्तु कथायां न्यायप्रयोगस्य आवश्यकतया, न्यायस्य च परामर्शप्रयोजकवाक्यरूपतया, परामर्शस्य च व्याप्ति पक्षधर्मतावैशिष्ट्यावगाहिज्ञानतया, व्याप्तिज्ञानस्य तर्काश्रिततया प्रथमं तर्कविचारः प्रस्तुतः । तर्कलक्षणम्, तर्कभेदाः तर्काभासाश्च तर्कवादे निरूपिताः । व्याप्तिविचारावसरे भूषणकारमतवर्णनपूर्वकं बहून् विकल्पानुद्भाव्य सिद्धान्तव्याप्ति निर्वचनम्, एवं सविकल्पं रत्नकोशकारलीलावतीकारमतनिरासपूर्वकं उपाधि लक्षणम्, उपाध्याभासः, पक्षतालक्षणम्, परामर्शस्यैवानुमितिजनकत्वसिद्धान्तः, मतभेदनिरास पूर्वकपञ्चावयवत्वसमर्थनम्, कथासामान्यलक्षणम्, जल्पनिरूपणप्रसंगे वैशेषिकखण्डनकारमतयं निरासः, पञ्चविधानां हेत्वाभासानां वर्णनम्, छलस्य पञ्च भेदाः, जातिलक्षणम्, चतुर्विंशति जातिभेदाः, साधर्म्यसमायाः त्रिविधत्वस्वीकारः तर्कभाषादिषु वर्णितं हेत्वन्तरमिति निग्रहस्थानं न्यायरत्नोक्तलक्षणरीत्या प्रतिज्ञान्तरे अन्तर्भवतीति न्यायरत्ने हेत्वन्तरं त्यक्त्वा एकविंशतिनिग्रहस्थानान्येव, एवं कथासु विजिगीषूणां कृते भ्रामकः महाविद्याप्रयोगश्चेति इमे विषया निरूपिताः । ग्रन्थेऽस्मिन् सामान्यलक्षणा प्रत्यासत्तिः सांकर्यस्य जातिबाधकत्वञ्च खण्डितं (pp. 25, 63, 64) दृश्यते ।

खण्डनकारः (pp. 19, 39, 150) उदयनः (p. 81) भूषणकारः (pp. 54, 69) नव्यनैयायिकाः (p. 82) रत्नकोशकारः (pp. 86, 178) कैश्चिच्छब्देन मानमनोहरकारः (p. 106) नयचिन्तामणिश्च (pp. 108, 220) निर्दिष्टाः ।

ग्रन्थस्यास्य कर्ता कथाकुतुकी पण्डितप्रकाण्डः मणिमिश्रापरनामा मणिकण्ठमिश्रः मिथिलान्तर्गततीरभुक्तिस्थानवासी उत्तरमुष्कराजधर्माधिकारी चेति ज्ञायते ।


न्यायरत्नोक्त – वादविभागः 1
तर्क
व्याप्ति
उपाधि
पक्षता
परामर्श
न्याय
अवयव
कथा
वाद
जल्प
वितण्डा
आत्माश्रय
अन्योन्याश्रय
चक्रक
अनवस्था
इतरप्रकार
तर्काभास
प्रतिज्ञा
हेतु
उदाहरण
उपनय
निगमन
साधर्म्य
वैधर्म्य
केवलान्वयी
केवलव्यतिरेकी
अन्वयव्यतिरेकी
आत्माश्रयाभास
अन्योन्याश्रयाभास
चक्रकाभास
इतरप्रकार
प्रशिथिलमूल
विपर्ययावसित
इष्टापादानत्व
अनुगुण
मिथोविरोधः
हेत्वाभास
छल
जाति
निग्रहस्थान
महाविद्या
वाक्छल
सामान्यछल
उपचारछल
प्रतिज्ञा
हेतु
उदाहरण
उपनय
निगमन
प्रतिज्ञा
हेतु
उदाहरण
उपनय
निगमन
प्रतिज्ञा
हेतु
उदाहरण
उपनय
निगमन
उपचारवृत्या प्रयुक्तस्य उपचारवृत्या दूषणम्
उपचारवृत्या प्रयुक्तस्य मुख्यवृत्या दूषणम्


न्यायरत्नोक – उपाधिविभागः 2
सन्दिग्ध
निश्चित
उपाध्याभास
साध्यव्यापकतासन्देहात्
साधनाव्यापकतासन्देहात्
उपाधिसाध्यसन्देहे
साध्यनिश्चयोपाधिसन्देहे
साध्यसन्देहोपाधिनिश्चययोः
साध्यसन्देहोपाध्यभावनिश्चययोः
उपाधिसाधनयोस्सन्देहे
साधननिश्चयोपाधिसन्देहयोः
साधनसन्देहोपाधिनिश्चययोः
साधनसन्देहोपाध्यभावनिश्चययोः
असाधारणविपर्यय
बाधितसाध्यविपर्यय
अप्रसिद्धसाध्यविपर्यय
पक्षाव्यापकविपर्यय
पूर्वसाधनव्यतिरेक
पूर्वसाधनव्याप्यव्यतिरेक
पक्षविपक्षान्यतरान्य
पक्षेतरसाध्याधार
तत्तुल्यजात्यादिः

## न्यायरत्नोक्त हेत्वाभासविभागः 3

- सव्यभिचार
  - साधारण
  - असाधारण
- विरुद्ध
- प्रकरणसम
- असिद्ध
  - आश्रयासिद्ध
  - स्वरूपासिद्ध
  - व्याप्यत्वासिद्ध
- बाधित
  - उपजीव्यबाध
    - धर्मिग्राहकमानबाधित
      - प्रत्यक्ष
      - अनुमान
      - आगम
    - साध्यग्राहकमानबाधित
      - प्रत्यक्ष
      - अनुमान
      - उपमान
      - आगम
    - हेतुग्राहकमानबाधित
      - प्रत्यक्ष
      - अनुमान
      - आगम
  - अनुपजीव्यबाध

## न्यायरत्नोक्त जातिविभागः 4

- साधर्म्यसमा
  - सिद्धविषया
  - असदुक्तिक
  - असिद्धविषया
- वैधर्म्यसमा
- उत्कर्षसमा
  - सद्विषय
  - असद्विषय
- अपकर्षसमा
- वर्ण्यसमा
- अवर्ण्यसमा
- विकल्पसमा
- साध्यसमा
- प्राप्तिसमा
- अप्राप्तिसमा
- प्रसङ्गसमा
- प्रतिदृष्टान्तसमा
- अनुत्पत्तिसमा
- संशयसमा
- प्रकरणसमा
- अहेतुसमा
- अर्थापत्तिसमा
- अविशेषसमा
- उपपत्तिसमा
- उपलब्धिसमा
- अनुपलब्धिसमा
- अनित्यसमा
- नित्यसमा
- कार्यसमा

## न्यायरत्नोक्त–निग्रहस्थानविभागः 5

- प्रतिज्ञाहानिः
  - सद्विषय
  - असद्विषय
- प्रतिज्ञान्तर
- प्रतिज्ञाविरोध
- प्रतिज्ञासंन्यास
- अर्थान्तर
- निरर्थक
- अविज्ञातार्थ
- अपार्थक
- अप्राप्तकाल
- न्यून
- अधिक
- पुनरुक्त
- अननुभाषण
- अज्ञान
- अप्रतिभा
- विक्षेप
- मतानुज्ञा
  - प्रशिथिलमूला
  - विपर्ययावसिता
  - इष्टापादन
  - मिथोविरोध
  - अनुगुण
- पर्यनुयोज्योपेक्षण
- निरनुयोज्यानुयोग
  - अनिग्रहस्थाने निग्रहोदभावना-मूलक
  - अन्यनिग्रहस्थाने अन्यनिग्रहस्थानो-द्भावनामूलक
- अपसिद्धान्त
- हेत्वाभास

ग्रन्थकारोऽयं उपाधिलक्षणनिरूपणावसरे (p· 82) यत् लक्षणं नवीनसम्मतं प्रतिपादयति, तदेव लक्षणं तत्वचिन्तामणि-दीधिति-व्याख्यावसरे गदाधरभट्टाचार्येण सौन्दडोपाध्यायस्य लक्षणमिति प्रतिपादितम् । गङ्गेशोपाध्यायश्च तत्वचिन्तामणौ उपाधिवादे "अन्येतु" (p· 1031) "यत्तु उपाधिमात्रस्य" (p· 1039) "केचित्तु साधनव्यापकोप्युपाधिः" (p· 1045), परामर्शवादे "पृथक् वह्निमत्व-स्मरणं तत्र नास्ति किन्तु व्याप्त्यवच्छेदकतया" (p· 1242), सव्यभिचारप्रकरणे "नापि पक्षातिरिक्तसाध्यवन्मात्र" (p· 1682) इत्यादिना यं सिद्धान्तं दूषयति स च सिद्धान्तः यथाक्रमं न्यायरत्ने (pp· 92, 94, 120, 166) दृश्यते। अमुद्रितायां वासुदेवसार्वभौमकृतायां तत्वचिन्तामणिव्याख्यासारावल्यां सरस्वती भवनस्थायां मणिकण्ठमतमिति च निर्दिष्टम् । तस्मात् सौन्दडोपाध्यायात् पश्चाद्-भवः तत्वचिन्तामणिकारात् प्राक्तनश्च (1200–1300 A.D) कालः मणिकण्ठ समय इति विज्ञातुं पार्यते । अनेन नयचिन्तामणिरिति न्यायचिन्तामणिरिति वा ग्रन्थः कृत इति (pp· 108, 220) ज्ञायते ।

1. न्यायरत्नव्याख्या— न्यायरत्नप्रकाशः

वत्सगोत्रजेन गिरिपतिपुत्रेण कर्ममीमांसककुलावतंसेन मैथिलेन शङ्करमिश्र-सामयिकेन चिन्तामणिप्रकाश-न्यायसूत्रोद्धार-प्रत्यक्षनिर्णय खण्डनोद्धार - अनुमान-निर्णय-शाब्दनिर्णयादीनां कर्त्रा भैरवेन्द्ररामभद्रदेवयोरास्थानपण्डितेनापि पाञ्चाल-भूपस्य चौहानवंशोत्पन्नस्य वीरभानुपुत्रस्य प्रतापरुद्रस्य महिष्या पद्मावत्या प्रोत्साहि-तेन अभिनववाचस्पतिमिश्र इति प्रसिद्धेन द्वितीयवाचस्पतिना (1410-1490 A.D.) कृतेयं न्यायरत्नप्रकाशाख्या व्याख्या अमुद्रिता बन्दरगारप्राच्यविद्यानु-सन्धान पुस्तकालये लभ्यते ।

2. न्यायरत्नव्याख्या— द्युतिमालिका

गरुडाचलस्थलक्ष्मीनृसिंहभक्तेन त्रिणयनविनायकत्रिपुरसुन्दरीभक्तेन च अहोबलश्रीलक्ष्मीनृसिंहकरुणाकटाक्षवीक्षितेन अन्नमसोमयाजिसूनुना महीशूरचाम-भूपति (1775, 1796 A.D.) सामयिकेन आन्ध्रदेशाभिजनेन अधीतसर्वशास्त्रेण नृसिंहयज्वना कृतेयं द्युतिमालिकाख्या न्यायरत्नव्याख्या मद्रपुरीसर्वकारीयप्राच्य-ग्रन्थाकयमालायां (MGOML S. 104) मुद्रिता ।

तत्वचिन्तामणि - खण्डनखण्डखाद्य-रुचिदत्तीयानुमानप्रकाश-नयचिन्तामणि-न्यायभूषणप्रकाश-शब्दार्णवाख्यान् ग्रन्थान्, भूषणकार-गदाधरमिश्र गङ्गेशोपाध्याय-जयदेवमिश्र-मानमनोहरकार-रत्नकोशकार - रुचिदत्त-श्रीहर्ष - वल्लभाचार्यादीन् ग्रन्थकारांश्च निर्दिशति ।

ब्रह्मसंवेदनादनाद्यविद्यानिवृत्तिरिति खण्डनकारोक्ति "साधूक्त"मिति भूषयन् मूलकारोक्ति "तुच्छ"मिति दूषयन् (pp. 19-20) अयं ग्रन्थः वेदान्ते स्वादरं निर्दिशति । बहुषु स्थलेषु चिन्तामणिवाक्यान्येव स्वग्रन्थे घटयति, क्वचित् मणिकारोक्तौ स्वादरं प्रकटयति च । न्यायभूषणप्रकाशाख्या गदाधरमिश्रकृता व्याख्या काचनासीदिति ग्रन्थादस्माज् (p. 54) ज्ञायते, या नेदानीं लभ्यते ।

## न्यायसिद्धान्तमञ्जरी

पण्डितनूतनग्रन्थमालायां (No. 3) मुद्रितः प्रत्यक्षानुमानोपमानशब्दाख्यैश्चतुर्भिः खण्डैर्विभक्तश्चायं न्यायप्रकरणग्रन्थः तत्वचिन्तामणिं मणिसारं शिवादित्यमिश्रं मुरारिमिश्रञ्च निर्दिशति । प्रत्यक्षखण्डे नित्यानित्यत्वेन प्रत्यक्षविभागम्, निर्विकल्पसविकल्पप्रत्यक्षयोरनित्यप्रत्यक्षेऽन्तर्भावञ्च वर्णयति । मीमांसकाभिमतं ज्ञाततावादम्, अभावस्याधिकरणात्मकत्ववादञ्च खण्डयन् प्रसङ्गात् अभावभेदान् सलक्षणमुपपादयन् सामान्यलक्षणाप्रत्यासत्तिं साधयति । अनुमानखण्डे व्याप्तिनिरूपणावसरे चार्वाक-सौगत-मीमांसकमत-खण्डनपूर्वकं साध्यसमानाधिकरणस्वसमानाधिकरणयावत्कत्वं व्याप्तिरिति व्याप्तिलक्षणम् उपपाद्य, केवलान्वयि-केवलव्यतिरेकि-अन्वयव्यतिरेकिभेदेन अनुमानं विभज्य प्रसंगात् हेत्वाभासान् निरूप्य अवान्तरभेदयुक्तान् पञ्च हेत्वाभासान् उपपाद्य उपाधिलक्षणम्, उपाधेर्हेत्वाभासान्तरत्वनिराकरणम्, परार्थानुमानस्य पञ्चावयववाक्यात्मकतां च स्वीकरोति । शब्दप्रमाणखण्डे शब्दप्रमाणस्यानुमानेनागतार्थतां प्रसाध्य पृथक्प्रमाणान्तरत्वसाधनम्, शक्तिलक्षणम्, शक्तिग्रहोपायकथनम्, जातिशक्तिविचारः, धात्वर्थविभक्त्यर्थविचाराः, शाब्दबोधौपयिकाः सारतमाः नव्यनैयायिकसिद्धान्तिता अर्थाः, स्फोटवादखण्डनम्, अर्थापत्त्यैतिह्ययोः प्रमाणान्तरत्वखण्डनमित्येते विषया वर्णिताः ।




ग्रन्थस्यास्य कर्ता आन्वीक्षकीनयतत्वविवरण-मणिमरीच्यादीनां कर्ता रामभद्रसार्वभौमगुरुः जगदीशभट्टाचार्यपिता **जानकीनाथभट्टाचार्यः** (1529 A. D.)।

**न्यायसिद्धान्तमञ्जरीव्याख्याः—**

चिन्नकृष्णानुजेन शिष्येण च सुब्रह्मण्येन कृता काचन **आमोदाख्या** व्याख्या अमुद्रिता बरोडामैसूरमद्रासतिरुवनन्तपुरपुस्तकालयेषु लभ्यते। विश्वनाथपुत्रेण शितिकण्ठापरनाम्ना श्रीकण्ठदीक्षितेन कृता काचन **तर्कप्रकाशाख्या** व्याख्या वाराणस्यां मुद्रिता, यस्यां गदाधरभट्टाचार्यादिभिः विवेचिताः विषया व्युत्पादिताः, यां व्याख्यां लक्ष्यीकृत्यैव —

" दिनकरशितिकण्ठौ यस्य कण्ठे लुठेताम् ।
स जयति शितिकण्ठं कण्ठशोषं विनैव ॥"

इत्याभाणकोऽपि प्रसिद्धः । एवं कृष्णाश्रमकृता गूढार्थदीपिकाख्या व्याख्या धारवारनगरविद्याधीशसंस्कृतपुस्तकालये, शिरोमणिभट्टाचार्यकृता टिप्पणी बरोडा-पुस्तकालये, यज्ञेश्वरदीक्षितशिष्येण मायूरक्षेत्रवासिना रायमखिपुत्रेण अप्पय्यदीक्षिता परनाम्ना अवधानियज्वना कृता काचन दिव्यपरिमलाख्या व्याख्या मद्रास तिरुवनन्तपुरतञ्जपुरपुस्तकालयेषु रामदीक्षितकृता दीपिकाख्या व्याख्या मैसूर-पुस्तकालये, नीलकण्ठपुत्रेण शङ्करेण कृता दीप्तिरिति प्रसिद्धा व्याख्या कलकत्ता-पुस्तकालये, वासुदेवकृता न्यायरत्नावल्याख्या व्याख्या बाम्बेविश्वविद्यालये, विठ्ठलव्यासपौत्रेण बाबूजीव्यासपुत्रेण जयरामन्यायपञ्चाननशिष्येण जनार्दनव्यासेन कृता प्रकाशाख्या व्याख्या बरोडावाराणसीसंकृतकलाशालापुस्तकालययोः, अपरा काचन प्रकाशाख्या लौगाक्षिभास्करकृता व्याख्या अडयार-बरोडा-बाराणसी-बन्दार-कार-मैसूर-शृंगेरीमठ-तिरुवनन्तपुरपुस्तकालयेषु, गोविन्दपुत्रेण नृसिंहपञ्चाननेन कृता बालबोधिन्याख्या अपरा व्याख्या बरोडालन्दनपुस्तकालययोः, गोविन्दन्याया-लङ्कारपुत्रेण कृष्णन्यायवागीशभट्टाचार्येण कृता भावदीपिकाख्या व्याख्या अडयार-बरोडा-बन्दारकार-मिथिला-मद्रास-लण्डन - पुस्तकालयेषु, वामनपुत्रेण केशवभट्टेन कृता भूषाख्या व्याख्या बरोडापुस्तकालये मञ्जरीमकरन्दाख्या काचन व्या-ख्या भूदेवशुक्लेन कृतेति गुणिलालगान्धीविद्याभवनपत्रिकायाम् (Vol. 18 p. 10, 1974), इति व्याख्या अमुद्रिता विद्यन्ते । व्यासनृसिम्हात्मजेन रामकृष्णशिष्येण यादवव्यासेन श्रीवत्सबालकृष्णस्य कृते कृता काचन मञ्जरीसाराख्या व्याख्या पण्डितनूतनग्रन्थमालायां (No. 3) मुद्रिता । वेङ्कटभट्टेन, पक्षधरमिश्रेण च कृते अपरे व्याख्ये विश्वभारतीअडयारसूच्योर्दृश्येते ।

न्यायसिद्धान्तमञ्जरी

आमोदः | टिप्पणी | तर्कप्रकाशः | दीपिका | न्यायरत्नावली | प्रकाशः | प्रकाशः | बालबोधिनी

गूढार्थदीपिका | दिव्यपरिमल | दीप्ति

भावदीपिका | भूषा | मञ्जरीमकरन्द | मञ्जरीसारः | व्याख्या | व्याख्या

न्यायचन्द्रिका—

न्यायवैशेषिकग्रन्थोऽयं न्यायदर्शनोक्तान् षोडशपदार्थान् सदलकृत्यं लक्षणं वर्णयन् वैशेषिकोक्तान् सप्तपदार्थान् न्यायदर्शनोक्ते प्रमेयान्तर्गते अर्थे अन्तर्भाव्य वैशेषिकपदार्थानपि सलक्षणं प्रतिपादयति । प्रसङ्गवशात् मीमांसकसिद्धान्तं खण्डयति । अनुपलब्धि-अर्थापत्ति-असम्भवादीनां पदार्थान्तरत्वं खण्डयति । चतुर्विंशति जातिस्वरूपम्, द्वाविंशति निग्रहस्थानानि सलक्षणं प्रतिपादयति ।

रत्नकोशकारम्, मणिकण्ठमिश्रम्, शिवादित्यम्, न्यायलीलावतीकारञ्च निर्दिशति । शिवादित्यप्रकाशाख्यः कश्चन ग्रन्थः निर्दिष्टः । मुद्रितोऽयं ग्रन्थ अनन्तशयने (TSS. 189) ।

अस्य रचयिता लौगाक्षिकुलोत्पन्नः केशवभट्टपौत्रः अनन्तभट्टपुत्रः केशवभट्टः षोडश–सप्तदशशतकीयः (1550–1650 A.D.) । अनेन शिवादित्यप्रकाशनामा ग्रन्थोऽपि रचित इति ग्रन्थादस्मात् (p. 19) ज्ञायते ।

तर्कामृतम्—

विषयकाण्ड–ज्ञानकाण्डभेदेन विभक्तोऽयं ग्रन्थः । तत्र विषयकाण्डे मुमुक्षुणा आत्मसाक्षात्कारजननाय श्रवणानन्तरं मननं कर्तव्यम् । तच्च मननं आत्मन इतरभिन्नत्वेन अनुमानम् । "आत्मा इतरेभ्यो भिद्यते आत्मत्ववत्वात्, यत् इतरेभ्यो न भिद्यते न तत् आत्मवत् यथा घटादि न चायं तथा" इति पञ्चावयवाक्यसिद्धम् । तत्र च भेदः भेदप्रतियोगीतरज्ञानसाध्यः । तथा च तच्च इतरदेव कियदिति ज्ञापनार्थं पदार्थनिरूपणमिति पदार्थविचारस्य परम्परया मोक्षसाधनत्वं प्रतिज्ञातम् । भावोऽभावश्चेति पदार्थद्वयविभागं कृत्वा षड्विधं भावपदार्थमुपवर्ण्य, वायोः नव, तेजसः एकादश, जलक्षितिप्राणभृतां चतुर्दश, दिक्कालयोः पञ्च, अम्बरे षट्, महेश्वरे मनसि च अष्टौ गुणाः वर्णिताः । ज्ञानकाण्डाख्ये द्वितीये स्मरणानुभवभेदेन बुद्धिविभागम्, यथार्थायथार्थभेदेन स्मरणविभागम्, प्रमा-अयथार्थभेदेन अनुभवभेदम्, प्रत्यक्षानुमित्युपमितिशाब्दभेदेन प्रमाविभागम्, संशयविपर्ययस्वप्न–अनध्यवसायभेदात् अयथार्थविभागम्, प्रसंगात् गुरुमतं नैयायिकमतञ्च उपवर्णितम् । सुलभावबोधाय परतः प्रामाण्यग्रहः स्वतःप्रामाण्यग्रहश्च विचारितौ । अनुमाननिरूपणे हेत्वाभासाः सव्यभिचार-विरुद्ध-सत्प्रतिपक्षासिद्ध-बाधिताः पञ्च स्वीकृताः । शाब्दनिरूपणावसरे "अथ शाब्दबोधप्रक्रिया" इत्यारभ्य शाब्दबोधसर्वस्वभूताः सर्वे सिद्धान्ताः अतिसंक्षिप्तया शैल्या निरूपिताः ।




अस्य ग्रन्थस्य कर्ता संक्षिप्तोक्तिप्रियः शब्दशक्तिप्रकाशिका–दीधितिव्याख्याकृत भवानन्दरामभद्रसार्वभौमशिष्यः मैथिलः जगदीशभट्टाचार्यः (1600 A.D.) इति ज्ञायते । मुद्रितोऽयं ग्रन्थः कलकत्तायां विद्याभवनग्रन्थमालायां (No. 6) वाराणस्याञ्च ।

## तर्कामृतव्याख्याः—

नीलकण्ठशिष्येण नारायणपुत्रेण मुक्तावलीव्याख्यादिनकरीकर्तुः दिनकरभट्टस्य दौहित्रेण गङ्गारामजटिना (1715–1750 A.D.) कृता काचन सुवर्णचषकाख्या तर्कामृतव्याख्या अमुद्रिता लन्दन-अडयार-तञ्जपुर-बन्दारगार-पुस्तकालयेषु लभ्यते । अस्या अपि गङ्गारामजटिनैव कृता काचन तात्पर्यटीकाख्या

व्याख्या अडयारतिरुवनन्तपुरपुस्तकालयलभ्या भवति। अन्या काचन विश्वेश्वर-मनोहरशिष्येण अनन्तगाडगिलपुत्रेण मुकुन्दभट्टेन (1800–1900 A. D.) कृता तरङ्गिण्याख्या व्याख्या बम्बईनगरे मुद्रिता। आधुनिकेन रत्ननाथशुक्लेन (1958 A. D.) कृता काचन प्रभाख्या व्याख्या वाराणस्यां मुद्रिता।




## पदार्थदीपिका—

वाराणसीग्रन्थमालायां (No. 14) मुद्रितोऽयं ग्रन्थः आत्मतत्त्वज्ञानं पदार्थतत्त्वनिर्णयाधीनमिति पदार्थतत्त्वमस्मिन् विविच्यत इत्यारभ्य भावाभावरूपेण पदार्थविभागम्, द्रव्यगुणादिभेदेन भावविभागम्, पृथिव्यादिभेदेन द्रव्यविभागम्, प्रत्येकं लक्षणञ्च वर्णयति। एतेषु लक्षणेषु वैशेषिकसूत्रारब्धानां बहुभिर्वर्णितानां सर्वेषां लक्षणानां समावेशो दृश्यते। शरीरस्य पञ्चधा विभागम्, जीवेश्वरभेदेन आत्मविभागम्, सुखाद्याश्रय अहम्प्रत्ययवेद्य इति जीवलक्षणम्, दुःखासमानाधिकरणज्ञानवान् नित्यज्ञानाश्रयो वा इति ईश्वरलक्षणम्, उद्भूतानभिभूतरूपवदालोकाभावसमूह एव तम इति तमसस्स्वरूपञ्च विशदयति।

रूपरसादिभेदेन चतुर्विंशति गुणान् उपवर्णयन्, चित्ररूपम्, चित्रगन्धस्वीकारे वर्धमानोपाध्यायादिमतभेदं लेशत उक्त्वा, पीलुपिठरपाकवादौ विविच्य, बुद्धिविचारप्रसङ्गे स्मृत्यनुभवभेदेन बुद्धेर्विभागम्, अनुभवस्य मिथ्याप्रमाभेदेन विभागम्, मिथ्यानुभवप्रसंगात् वाचस्पति-उदयनाचार्ययोः मतञ्च प्रतिपादयति। संशयविपर्ययतर्कभेदेन मिथ्याज्ञानभेदम्, यथार्थानुभवः प्रमेति प्रमालक्षणम्, प्रमाविभागावसरे चार्वाकादारब्धानां तान्त्रिकान्तानां विभागं प्रदर्शयति।

अनुमाने लिङ्गपरामर्शस्य कारणताविचारावसरे मणिकारादारभ्य सर्वेषां मतभेदं निरूपयति। परार्थानुमानवाक्यस्य पञ्चावयवताम्, असिद्धविरुद्ध

अनैकान्तिकप्रकरणसमबाधिताख्यान् पञ्च हेत्वाभासान् स्वीकृत्य, अनुमानस्य त्रेधा विभागं सोदाहरणम्, शब्दप्रमाणनिरूपणावसरे आकाङ्क्षादीनां वर्णनम्, जातिव्यक्तिशक्तिवादम्, शाब्दबोधप्रसङ्गमुत्पाद्य मीमांसकवैयाकरणनैयायिकादिसिद्धान्तान् उपवर्णयति । अर्थापत्त्यनुपलब्धिप्रमाणान्तरत्वखण्डनम्, भक्तिश्रद्धादीनां बुद्धिभेदत्ववर्णनञ्च दृश्यते । अभावस्य संसर्गाभावभेदरूपेण विभागम्, आत्यन्तिक दुःखध्वंसरूपतां मोक्षस्य, अनुमानेन ईश्वरसिद्धिं च सङ्गृह्णाति ।




अस्य रचयिता रङ्गोजीभट्टस्य पुत्रः भट्टोजीदीक्षितस्य भ्रात्रीयः वैयाकरणभूषण-भूषणसारादिकर्ता सप्तदशशतकीयः (1610 A.D.) कौण्डभट्ट इति ज्ञायते । अनेन तर्करत्नाख्यः ग्रन्थोऽपि कृत इति ग्रन्थादस्मात् (P. 51) ज्ञायते ।

## कारिकावली

प्रत्यक्षानुमानोपमानशब्दस्मरणमनोगुणाख्यैस्सप्तभिः प्रकरणैः, अष्टषष्ट्युत्तरशत (168) कारिकाभिश्च पूर्णोऽयं वैशेषिकः प्रकरणग्रन्थः भाषापरिच्छेदापरनामा मद्रास-बाम्बई-वाराणसीकल्कत्तादिषु स्थलेषु मुद्रितः । दर्शनमात्रप्रसिद्धानां पदार्थानां भाषाशब्देन व्यवहारः । ते च पदार्था अत्र लक्षणादिभिः

परिच्छिद्यन्त इति ग्रन्थस्यास्य भाषापरिच्छेद इति साम्प्रदायिकं नाम सार्थकं भवति। तर्कभाषायां गद्यात्मिकायां वर्णिता वैशेषिकदर्शनानुगताः सामान्यविषया अत्र कारिकारूपेणोपवर्णिताः। नामैकदेशे नामग्रहणमिति न्यायेन भाषाशब्देनात्र-तर्कभाषा निर्दिष्टा तद्गताश्च विषया परिच्छिद्यन्त इति भाषापरिच्छेदनाम सार्थकं भवतीति कथनमपि रोचते।

ग्रन्थस्यास्य कर्ता विश्वनाथन्यायपञ्चाननः सप्तदशशतकवर्तीति (1637 A.D) ज्ञायते। एनमधिकृत्य अधिकं न्यायसिद्धान्तमुक्तावलीविवरणप्रस्तावे ज्ञेयम्।

कारिकावलीव्याख्या—सिद्धान्तमुक्तावली—

वैशेषिकसूत्रानुसारेण तत्तलक्षणपरिष्कारपूर्वकं अनतिप्रयोजनकान् विचारान् परित्यज्य प्राच्यनव्यनैयायिकसिद्धान्तान् तत्र तत्र प्रतिपादयन्ती प्रतिपाद्यविषयानुकूलभाषया पूर्णा चेयं व्याख्या मद्रास(बालमनोरमा)बम्बईकलकत्ता वाराणस्यादिषु स्थलेषु मुद्रिता।

मङ्गलवादमुपक्षिप्य मङ्गलस्य विघ्नध्वंस एव फलं समाप्तिस्तु बुद्धिप्रतिभादि कारणकलापादेवेति विषयसिद्धान्तितः। संसारमहीरुहस्य बीजायेति मूलग्रन्थ व्याख्याव्याजेन ईश्वरानुमानं वर्णितम्। उपमानचिन्तामण्युक्तशक्तिसादृश्यादीनां अतिरिक्तपदार्थत्वाभावः, पदार्थोद्देशः, द्रव्यत्वजातौ प्रमाणम्, तमस अतिरिक्त-द्रव्यत्वाभावः, गुणकर्मोद्देशः, सामान्योद्देशलक्षणविभागः, विशेषनिरूपणम्, समवायसिद्धिः, अभावोद्देशलक्षणविभागः, पदार्थानां साधर्म्यम्, पारिमाण्डल्यादीनां कारणत्वनिषेधः, कारणलक्षणविभागौ, अन्यथासिद्धिविभागः, गुणकर्मणोस्साधर्म्य-वर्णनम्, द्रव्यसाधर्म्यकथनम्, आकाशात्मनोस्साधर्म्यनिरूपणम्, अव्याप्यवृत्ति-क्षणिकत्वयोर्विचारः, सामान्यतो द्रव्यगुणकथनम्, पृथिवीलक्षणम्, अवयविसिद्धिः, पार्थिवशरीरविचारः, पार्थिवेन्द्रियनिरूपणम्, जलनिरूपणम्, तेजोलक्षणम्, सुवर्णस्य तैजसत्वम्, वायुलक्षणविभागादिकथनम्, आकाशकालदिगात्मनिरूपणम्, आत्मनः प्राणभिन्नत्वम्, बुद्धिविभागः, प्रत्यक्षलक्षणविभागादिकथनम्, घ्राणज नयनजप्रत्यक्षवर्णनम्, ज्ञानसामान्यहेतुत्वकथनम्, निर्विकल्पकज्ञानस्यातीन्द्रियत्व-कथनम्, लौकिकसंनिकर्षनिरूपणम्, योग्यानुपलब्धिनिरूपणम्, सामान्यलक्षणा-ज्ञानलक्षणायोगजप्रत्यासत्तिकथनम्, इत्येते विषयाः प्रत्यक्षखण्डे वर्णिताः।

अनुमितिकारणपरामर्शनिरूपणम्, पूर्वपक्षसिद्धान्तव्याप्तिनिरूपणम्, पक्षतानिरूपणम्, हेतुप्रसंगात् हेत्वाभाससामान्यलक्षणविशेषलक्षणे साधारणादिव्यभिचारविरुद्ध-आसिद्ध-सत्प्रतिपक्ष-बाधानां लक्षणमित्येते विषया अनुमानखण्डे विचारिताः। परं पञ्चावयवात्मकः न्यायस्तु न प्रतिपादित इति विशेषः।

करणव्यापारवर्णनपूर्वकमुपमानं निरूपितमुपमानखण्डे। शब्दखण्डे तावत् करणव्यापारसहितशाब्दबोधवर्णनम्, शक्तिस्वरूपशक्तिग्राहकोपायवर्णनम्, जातिशक्तिवादः यौगिकादिशक्तपदविभागः लक्षणालक्षितलक्षणाविचारः लाक्षणिकपदस्याननुभावकत्ववादिनां प्राचां मतम्, तस्यानुभावकत्वमिति नवीनमतम्, समासे लक्षणयैव निर्वाहात् शक्त्यस्वीकारः कर्मधारयसमासे लक्षणानङ्गीकारे युक्तिः, शाब्दहेत्वासत्तिस्वरूपम्, आसत्तिभ्रमाच्छाब्दबोधभ्रम इति मतनिरासः खलेकपोतन्यायेन एकदा सकलपदार्थबोधः, खण्डवाक्यबोधानन्तरं महावाक्यार्थबोध इति मतद्वयवर्णनम्, प्रसङ्गात् स्फोटवादखण्डनम्, योग्यताज्ञानस्य शाब्दबोधहेतुत्वे युक्तिः, आकाङ्क्षावर्णनम्, तात्पर्यस्वरूपम्, तस्य शाब्दबोधजनकत्वे युक्तिः प्रसङ्गात् प्रलयसाधनमित्येते विषयाः वर्णिताः।

अवशिष्टेषु खण्डेषु स्मृतिः, मनस्यनुमानप्रमाणम्, मनस अणुत्वम्, गुणसामान्यलक्षणम्, गुणसाधर्म्यम्, मूर्तामूर्तगुणविभागः विशेषगुणाः रूपत्वजातिः, चित्ररूपम्, नवीनमते चित्ररूपाभावः, रसगन्धस्पर्शनिरूपणम्, पीलुपाकवादः, क्षणप्रक्रिया, अवयविपाकवादिनां पिठरपाकवादिनां नैयायिकानामाशयकथनम्, संख्यालक्षणविभागौ, परिमाणनाशः संयोगविभागौ विभागभेदाः परत्वापरत्वे प्रमाप्रमाभेदेन ज्ञानद्वैविध्यम् संशयनिश्चयौ प्रामाण्यवादे उत्पत्तिवादः निर्विकल्पकलक्षणम्, प्रामाण्यवादे ज्ञप्तिवादः, पूर्वमनुक्तः प्रामाण्यानुमितिप्रयोजकश्च व्याप्तिग्रहोपायः उपाधिनिरूपणम् शब्दोपमानयोः पृथक्प्रामाण्यस्थापनम् व्यतिरेकव्याप्तिः अर्थापत्तेः प्रमाणान्तरत्वनिरासः, सुखदुःखे, इच्छालक्षणविभागौ, यत्नः, इष्टसाधनताज्ञानस्य प्रवृत्तिजनकत्वस्थापनम्, विध्यर्थविचारः, तस्मिन्नुदयनाचार्यार्थविचारः, वेदस्य पौरुषेयत्वम्, गुरुत्वद्रवत्वस्नेहसंस्कारादीनां लक्षणम्, धर्माधर्मौ तयोर्नाशकस्य च वर्णनम्, शब्दतद्विभागौ वीचीतरङ्गकदम्बमुकुलन्यायेन शब्दसन्तानोत्पत्तिः शब्दानित्यत्ववादश्चेति विषया उपवर्णिताः। उपमानचिन्तामणिः, उदयनद्रव्यकिरणीवली, केचिच्छब्देन रत्नकोषकारः, आचार्यशब्देन उदयनश्च ग्रन्थेऽस्मिन्निर्दिष्टाः।

## 1 मुक्तावस्थां – पदार्थविभागः



## 2 मुक्तावस्थां – गुणविभागः



### 3 मुक्तावल्यां – बुद्धिविभागः

- प्रमा
- अप्रमा
  - विपर्यासः
  - संशयः
- अनुभूतिः
  - प्रत्यक्ष
    - लौकिक ( संनिकर्षज )
      - घ्राणज
      - चाक्षुष
      - श्रौत्र
      - रासन
      - स्पार्शन
      - मानस
      - 1 संयोग
      - 2 संयुक्तसमवाय
      - 3 संयुक्तसमवेतसमवाय
      - 4 समवाय
      - 5 समवेतसमवाय
      - 6 विशेषणविशेष्यभाव
    - अलौकिक
      - समान्यलक्षण
      - ज्ञानलक्षण
      - योगज
        - युक्त
        - युञ्जान
  - अनुमान
    - केवलान्वयि
    - केवलव्यतिरेकि
    - अन्वयव्यतिरेकि
  - उपमान
  - शब्द
    - यौगिक
    - रूढ
    - योगरूढ
    - यौगिकरूढ
- स्मृतिः

### 4 हेत्वाभासभेदाः

- अनैकान्तिक
  - साधारण
  - असाधारण
  - अनुपसंहारी
- विरुद्ध
- असिद्ध
  - आश्रयासिद्ध
  - स्वरूपासिद्ध
  - व्याप्यत्वासिद्ध
    - साध्याप्रसिद्धि
    - साधनाप्रसिद्धि
- सत्प्रतिपक्ष
- कालात्ययापदिष्ट

अस्य कर्ता नवद्वीपवासिनः वासुदेवसार्वभौमभ्रातृ रत्नाकरविद्यावाचस्पतेः पौत्रः विद्यानिवासस्य पुत्रः रुद्रवाचस्पतिभट्टाचार्यभ्राता न्यायालोक न्यायसूत्रवृत्ति-कर्ता विश्वनाथन्यायसिद्धान्तपञ्चाननः सप्तदशशतक (1637 A.D.) वासीति राजीवाख्यस्वशिष्यस्य दयावशंवदो भूत्वा मुक्तावलीमलिखदिति च प्रसिद्धम् ।

परन्तु बन्दरगारप्राच्यविद्यापुस्तकालये विश्वनाथन्यायसिद्धान्तपञ्चाननेन (1611 A.D.) कृता काचन उल्लासाख्या सिद्धान्तमुक्तावलीव्याख्या अमुद्रिता विद्यते । एवं आसियाटिकसोसाइटिपरिरक्षिते मुक्तावल्या आदर्शग्रन्थे—

"विष्णोर्वक्षसि कृष्णदासकृतिना सिद्धान्तमुक्तावली विन्यस्ता"

इति पाठो दृश्यते । एवञ्च विश्वनाथेन उल्लासाख्या व्याख्यैव कृता, मुक्तावली तु आलोकव्याख्याप्रसारिणीकर्त्रा कृष्णदाससार्वभौमेन (1575 A.D.) कृता स्यादिति ज्ञायते । केनापि कृष्णदासस्थाने विश्वनाथशब्द अनवधानात् लिखित इति च सम्भाव्यते । विपरीतकल्पना तु असम्भाविनी, उभयोः कालभेदात्, स्वकृत-व्याख्यायाः पुनर्व्याख्याकरणासम्भवाच्च ।

सिद्धान्तमुक्तावलीव्याख्या—चन्द्रिका

न्यायचन्द्रिकेत्यपरनामायं ग्रन्थः मूलग्रन्थाशयप्रकाशने बहूपकरोति । बहुषु स्थलेषु शिष्यबुद्धिवैशद्याय मूलग्रन्थोपरि बहवो विषया वर्णिताः । प्रसङ्गाद् बौद्धानां सांख्यानाञ्च सिद्धान्ताः सुविशदं वर्णिताः । प्राणात्मवादखण्डनावसरे—"प्राणो-ऽप्यात्मा न भवति" इत्यारब्धः मूले अदृश्यमानश्लोकः सप्रतीकं व्याख्यातो (p. 61) दृश्यते । क्वचित्स्थले व्याख्याकारेणैव उदाहरणांशः पूरितो दृश्यते । विरुद्धप्रसङ्गे—

"गोत्वादिसाध्ये हेतुर्हि यत्राश्वत्वादिको भवेत्" (p. 107) इति । व्याख्येयं काशीसंस्कृतपुस्तकमालायां (No. 16) मुद्रिता ।

अस्य कर्ता रामगोविन्दतीर्थवासुदेवपण्डितयोः शिष्यः सांख्यकारिकाटीका सिद्धान्तबिन्दुटीकायोगसिद्धान्तचन्द्रिकादिकर्ता अष्टादशशतकीयः (1702 A.D.)

नारायणतीर्थः । अदसीया अन्ये ग्रन्थाः मदीये अद्वैतवेदान्तसाहित्ये (p. 357) द्रष्टव्याः ।

सिद्धान्तमुक्तावलीटीका—

विद्यानिवासभट्टाचार्यज्येष्ठपुत्रेण दीधितिव्याख्यापरीक्षा-आलोकसंग्रहादिकर्त्रा सप्तदशशतकीयेन (1700 A.D.) रुद्रन्यायवाचस्पतिभट्टाचार्येण कृता काचन मुक्तावलीटीका अमुद्रिता राधाकृष्णसूच्यां वाराणसीसंस्कृतकलाशालासूच्यां हाल सूच्याञ्च दृश्यते ।

सिद्धान्तमुक्तावलीव्याख्या—प्रकाशः (दिनकरी)

भारद्वाजकुलजेन बालकृष्णभट्टपुत्रेण दिनकरभट्टपित्रा महादेवभट्टेन (1800 A.D.) उपमानखण्डान्तं कृता प्रकाशाख्या व्याख्या निर्णयसागरबालमनोरमा-मुद्रणालययोर्मुद्रिता ।

अत्र भाष्यवार्तिकादिगताः, गादाधरीयादिषु वर्णिताश्च प्राचीननव्यसिद्धान्ताः बहुषु स्थलेषूपवर्णिताः । व्याख्यायामस्यां सप्तपदार्थेषु षोडशपदार्थानामन्तर्भाव-वर्णनं उल्लेखार्हो विषयः । निरतिशयव्युत्पत्त्याधायकत्वात्

"दिनकरशितिकण्ठौ यस्य कण्ठे लुठेताम्
स जयति शितिकण्ठं कण्ठशोषं विनैव ॥"

इत्याभाणकश्च प्रसिद्धः । यद्यपि महादेवभट्टेन उपमानखण्डान्तमेव कृतम्, तथापि अनन्तरं तत्पुत्रेण दिनकरभट्टेन अवशिष्टो भागो व्याख्यातः । तस्मादेव कारणात् दिनकरीति प्रसिद्धिः ।

मुक्तावलीव्याख्या—दिनकरीया (प्रकाशः)

प्रकाशकर्तुर्महादेवभट्टस्य पुत्रेण तत्पित्रा अपूरितेयं व्याख्या दिनकरभट्टेन पूरिता दिनकरीयेति प्रसिद्धा शब्दखण्डगुणखण्डयोर्व्याख्या बालमनोरमानिर्णय-सागरयोर्मुद्रिता ।

दिनकरीयव्याख्या—तरङ्गिणी

रामेश्वरभट्टपुत्रेण रामरुद्रतर्कवागीशभट्टाचार्येण (1800 A.D.) कृतेयं व्याख्या रामरुद्रीयेति प्रसिद्धा मद्रासबम्बईनगरयोर्मुद्रिता ।

एवं विषमार्थप्रकाशिकानाम्नी काचन प्रकाशव्याख्या अमुद्रिता तिरुवनन्तपुरपुस्तकालये लभ्यते । व्याख्येयं रङ्गनाथविदुषा कृतेत्येव ज्ञायते नातोऽधिकम् ।

दिनकरीटिप्पणी— गङ्गारामजटीया

नीलकण्ठवंशोत्पन्नेन नारायणभट्टपुत्रेण दिनकरभट्टदौहित्रेण नीलकण्ठशिष्येण गङ्गारामजटिना (1800 A.D.) कृता काचन दिनकरीयटिप्पणी क्रोडपत्ररूपा बालमनोरमामुद्रणालये मुद्रिता । तस्यां महादेवभट्टेन प्रकाशोक्तानि विषयत्वाविषयत्वानेकत्वान्यथासिद्धत्वसंकरत्वादीनां लक्षणानि क्रोडपत्रशैल्यां परिष्कृतानि ।

न्यायसिद्धाञ्जनव्याख्यारत्नपेटिका तर्कसंग्रहदीपिकाप्रकाशिकाव्याख्या-प्रसारणाकर्त्रा तिरुप्पुक्कुषिस्वामिना कृता काचन दिनकरीटिप्पणी अपि आसीदिति प्रसारणायाः (p. 395) ज्ञायते ।

एवमन्याश्च मुक्तावलीव्याख्याः—कृष्णदत्तपण्डितेन (1800 A.D.) कृता न्यायमनोरमाख्या अमुद्रिता अलहाबादसूच्याम्, त्रिलोचनदेवेन (1800 A.D.) कृता लोचनाख्या हलप्सूच्याम्, गिरीशचन्द्रकृता (1800 A.D.) टीकाख्या, रामनाथकृता काचन व्याख्या वाराणसीस्थसंस्कृतकलाशालास्थवेणीदत्तसूच्याम्, विन्ध्येश्वरीप्रसादद्विवेदिना (1916 A.D.) कृता काचन व्याख्या वाराणसीपुस्तकालये, विश्वनाथन्यायपञ्चाननकृता उल्लासाख्या (301 - 1895 - 1902 BORI) व्याख्या, महादेवपुतनकरेण कृता प्रकाशाख्या, बालकृष्णपण्डितेन कृता योजनाख्या, विश्वनाथेन कृता विवरणाख्या, विट्ठलेश्वरकृता विवृत्याख्या, कल्याणरामेण कृता टिप्पण्याख्या च व्याख्याः बन्दरगारपुस्तकालये अमुद्रिता विद्यन्ते । एवं रङ्गनाथकृता विषमार्थ प्रकाशिकाख्या व्याख्या तिरुवनन्तपुरपुस्तकालय अमुद्रिता लभ्यते ।

मुक्तावलीव्याख्या — प्रभा

आलरिवंशजेन बालकृष्णतर्कालङ्कारभट्टाचार्यशिष्येण तर्कसंग्रहदीपिकाव्याख्यानृसिंहप्रकाशिकाकर्त्रा नृसिंहशास्त्रिणा (1800-1900 A.D.) कृता काचन प्रभाख्या व्याख्या बालमनोरमामुद्रणालये मुद्रिता। ललितपदविन्यासैः प्रतिपदं अवतारिकाप्रदानम्, विविच्य मूलभाववर्णनम्, व्याख्याभेदप्रकाशनम्, स्वोक्ति प्रामाण्याय सूत्रभाष्यारब्धेभ्यः गादाधर्यन्तेभ्यः ग्रन्थेभ्यः प्रमाणप्रदर्शनम्, मूलस्थवाक्यानां नव्यशैल्या शाब्दबोधपरिष्कारः यत्र तत्र दिनकरीयखण्डनमित्येते विषयाः व्याख्याया अस्या अवधेयाशाः।

मुक्तावलीव्याख्या — मञ्जूषा

प्रभाकर्तुर्नृसिंहशास्त्रिणशिष्येण तर्कसंग्रहदीपिकाटिप्पणीव्युत्पत्तिवादव्याख्याकर्त्रा पट्टाभिरामशास्त्रिणा (1850 A.D.) कृता व्याख्येयं "आकाशस्य तु विज्ञेयो शब्दो वैशेषिको गुण" इति आकाशग्रन्थपर्यन्तमेव बालमनोरमामुद्रणालये मुद्रिता।

मुक्तावलीव्याख्या — सुबोधिनी

भाषापरिच्छेद-मुक्तावली-दिनकरीय-रामरुद्रीय व्याख्यारूपेयं व्याख्या रहस्यार्थप्रकाशरूपा दिनकर्यादिव्याख्यातत्वार्थबोधिनी राजते। प्रतीकनिर्देशपूर्वकं व्याख्यातुमारब्धेयं व्याख्या सम्पूर्णन्यायशास्त्रस्य सारं तत्र तत्र प्रतिपादयति। क्वचित् क्वचित् मूलव्याख्यास्थानां पाठानामपि व्याख्या अस्याः महान् विशेषः। व्याख्येयं पूर्णवेदपुर्यां (Tiru punithura) मुद्रिता।

व्याख्याया अस्या रचयिता दर्शनकलानिधिः महान् परीक्षिद्रामवर्मेतिप्रसिद्धः गोश्री (कोच्चि) महाराजमहाशय आधुनिकः। अस्य शासनकालः (1896–1915 A. D.) वेदान्तपरिभाषासंग्रह-शाकुन्तलव्याख्यादीनाञ्च कर्ता।

एवं मुक्तावल्या आनन्दचन्द्रसार्वभौमेन (1896 A.D.) कृता आनन्दमयी नाम्नी व्याख्या कलकत्तायाम्, लल्लूरामशर्मणा (1912 A.D.) कृता

विषमस्थलाख्या व्याख्या बम्बईनगरे, दुर्गादत्तशास्त्रिणा (1913 A.D.) कृता मनोरमाख्या व्याख्या लाहूरनगरे, मुकुन्दशर्मणा (1914 A.D.) कृता प्रत्यक्षान्वा प्रभाख्या व्याख्या बम्बईनगरे, कुञ्जविहारीतर्कसिद्धान्तशर्मणा (1915 A.D.) कृता व्याख्या कलकत्तायाम्, अम्बिकाप्रसादशर्मणा (1921 A.D.) कृता समन्वयाख्या व्याख्या वाराणस्याम्, नृसिंहदेवेन (1924 A.D.) कृता काचन प्रभाख्या व्याख्या या छात्राणामतीवोपकरोति यस्यां न्यायसम्बद्धाः सर्वेविषयाः प्रसंगात् सर्वदर्शनसिद्धान्ताश्च सुलभशैल्या प्रतिपादिता व्युत्पादिका च सा, लाहूरनगरे, हरिदत्तशर्मणा (1928 A D.) कृता काचन कामदुघाख्या व्याख्या लाहूरनगरे, शुक्लशर्मणा (1931 A.D.) कृता शब्दखण्डस्य परं मयूखाख्या व्याख्या वाराणसीहरिदाससंस्कृतमालायाम् (No. 15), दर्भङ्गावास्तव्येन चन्द्रधरसिंहेन (1939 A.D.) कृता चन्द्रिकाख्या व्याख्या दर्भङ्गायाम्, कृष्णवल्लभाचार्येण कृता किरणावली वाराणस्याञ्च मुद्रिताः। आधुनिकेन परिभाषासंग्रहकर्त्रा लक्ष्मणशास्त्रियोगेन्द्रनाथशिष्येण कलकत्तावासिना पञ्चाननभट्टाचार्येण कृता (1961 A.D.) मुक्तावलीसंग्रहाख्या व्याख्या आगमानुसन्धानसमित्या कलकत्ता-नगर्यां मुद्रिता प्रकाशिता च।

कारिकावली व्याख्याः—अनन्तनारायणशर्मणा (1800 A.D.) कृता काचन कारिकावली व्याख्या अमुद्रिता मीरजापुरस्थव्रजभूषणपुस्तकालये, व्रज-राजगोस्वामिना (1800 A.D.) कृता काचन व्याख्या मीरजापुरस्थ गोविन्दभट्ट-पुस्तकालये, चामुद्रिता लभ्येते। एवं एकोनविंशतिशतकीयेन (1831 A.D.) कृष्णकौरमिश्रसुतेन देवीसहायमिश्रेण कृता कण्ठाभरणाख्या कारिकावलीव्याख्या निर्णयसागरमुद्रणालये मुद्रिता या कारिकावलीव्याख्याव्याजेन मुक्तावल्युक्तान् विषयान् सुगमैस्सुकुमारैश्च शब्दैः प्रदर्शयन्ती क्वचित् क्वचित् सर्वात्मना मुक्ता-वलीपंक्तीरेवानुसरन्ती दृश्यते। एवं मुकुन्दशर्मणा (1911 A.D.) कृता अन्विता-र्थप्रदीपिकाख्या कारिकावलीव्याख्या बम्बईनगरे मुद्रिता च। एवमन्या मुक्तावतंसाख्या व्याख्यापि अमुद्रिता मद्रपुरीप्राच्यपुस्तकालये लभ्यते।

## कारिकावलीमुक्तावलीव्याख्या:



**तर्ककौमुदी—**

अभिधेयाः पदार्था इत्यारभ्य द्रव्यादिरूपेण पदार्थ विभागं तेषां सामान्य-विशेषलक्षणानि विशदय्य आत्मनः जीवेश्वरभेदेन विभागं उक्त्वा संख्यादिचतुर्दश-गुणाश्रयः जीव, स च प्रतिशरीरं भिन्न इति, नित्यज्ञानादिमान् ईश्वरः, स च संख्यादिगुणाष्टकवान् इति स्वीकृत्य तस्य शरीरराहित्यम्, अस्मदीयादृष्टेनैव शरीरोत्पत्तिरिति च वर्णितम्।

बुद्धेः स्मृत्यनुभवभेदेन द्वेधाविभागं कृत्वा अनुभवस्य प्रमाप्रमाभेदेन विभागं, यथार्थानुभवः प्रमेति प्रमालक्षणम् उपवर्ण्य, प्रमाणं प्रत्याक्षानुमानभेदात् द्विविधमिति निर्दिष्टम्। न्यायसूत्रं प्रमाणीकृत्य अन्यत् उपमानशब्दयोरपि प्रामाण्यं विशदीकृतम्।




लौकिकालौकिकभेदेन प्रत्यक्षद्वैविध्यमुपवर्णयन् अलौकिकप्रत्यक्षहेतुभूतसंनि-कर्षविचारावसरे संप्रदायविदाम्, शूलपाणिमिश्राणाञ्च मतमुपवर्णितम्। केवला-न्वयि केवलव्यतिरेक्यन्वयव्यतिरेकिरूपेण भिन्नं अनुमानं स्वार्थपरार्थभेदेन पुन-र्विभक्तम्। परार्थानुमानवाक्यस्य पञ्चावयवाः स्वीकृताः। हेत्वाभासनिरूपणावस अनैकान्तिक-विरुद्धसत्प्रतिपक्ष-असिद्ध-बाधितभेदेन पञ्च हेत्वाभासाः स्वीकृताः। अर्थापत्तेरनुमानेऽन्तर्भावमुपवर्ण्य, प्रामाण्यं स्वत इति मीमांसकमतखण्डनपूर्वकं परतः प्रामाण्यं स्वीकृतम्। अन्ते पदार्थतत्त्वज्ञानस्य आत्मतत्त्वज्ञानद्वारा मोक्षसाधनत्व मुपवर्ण्य आत्यन्तिकदुःखध्वंसो मोक्ष इति मोक्षस्वरूपनिरूपिणेन ग्रन्थस्समाप्तः।

ग्रन्थेऽस्मिन् शूलपाणिर्नामग्राहं निर्दिष्टः । मुद्रितोऽयं ग्रन्थः निर्णयसागर मुद्रणालये ।

ग्रन्थस्यास्य रचयिता न्यायवैशेषिकमीमांसापण्डितः मुद्गलभट्टपुत्रः मीमांसायामर्थसंग्रहकर्ता सप्तदशशतकीयः (1650 A.D.) लौगाक्षिरित्युपनामा भास्कर-भट्ट इति ज्ञायते ।

तर्कदीपिका :—

न्यायवैशेषिकसिद्धान्तप्रतिपादकोऽयं प्रकरणग्रन्थः षट् पदार्थान् सलक्षणं प्रतिपादयन् साधर्म्यवैधर्म्याभ्यां द्रव्यादिपदार्थतत्त्वज्ञाने अनात्मभिन्नत्वेन आत्म-तत्त्वज्ञानं निःश्रेयससाधनं सिध्यतीत्यानुषङ्गिकतयैव भेदज्ञानमिहापेक्षितमिति वदन् साधर्म्यवैधर्म्याभ्यां पदार्थतत्त्वं वर्णयन्नमुद्रितस्सरस्वतीमहालयपुस्तकालये तञ्जपुरे लभ्यते ।

अस्य रचयिता कौण्डभट्टरमाम्बयोः पुत्रः महीषरवंशजः नारायणेन्द्र-सरस्वतीशिष्यः लक्ष्मीनृसिम्हः षोडशसप्तदशशतकीयः (1650–1750 A. D.) । अस्य पिता कौण्डभट्टः वैयाकरणभूषणभूषणसार–पदार्थदीपिकादिकर्ता । लक्ष्मी-नृसिंहेन भामतीकल्पतरुव्याख्या आभोगोऽपि कृत इति निरूपितमस्माभिरस्मदीये अद्वैतवेदान्तसाहित्येतिहासे (p. 393) ।

पदार्थीयदिव्यचक्षुः—

सप्त पदार्थान्, नव द्रव्याणि, चतुर्विंशतिगुणान्, पञ्च कर्माणि, परापर-भेदेन द्विविधं सामान्यम्, अनन्तान् विशेषान्, भावयोर्नित्यसम्बन्धं समवायम्, संसर्गाभावान्योन्याभावभेदेन अभावद्वैविध्यम्, इति विभागान् प्रदर्शयन्नयं वैशेषिक-ग्रन्थः मिथिलाग्रन्थमालायां (No. 13) मुद्रितः ।

ग्रन्थोऽयं वैशेषिकपदार्थग्रन्थेषु अन्यतमोऽपि वैशेषिकपदार्थग्रन्थिविमोके अनन्यतमो दृश्यते । स्थलविशेषेषु कार्यकारणभावादिप्रतिपादनं ग्रन्थास्यास्य महान् विशेषः । पञ्चविंशतिभिः विभिन्नविषयप्रधानैः दर्शनान्तैः प्रकरणैः पूर्णोऽयं-ग्रन्थः वैशेषिकसिद्धान्तान् सविचारं साधयति, ग्रन्थेऽस्मिन् बहूनां नैय्यायिकानां

मतान्युद्धृतानि । शब्दानित्यत्ववादः, चित्ररूपवादः, पीलुपिठरपाकवादः, अपेक्षाबुद्धेः द्वित्वादौ कारणतावादः, इत्यादयो वादाः सुनिपुणं वर्णिताः । रघुनाथशिरोमणेः पक्षता नामग्राहं निर्दिष्टः (p.4) ।

ग्रन्थस्यास्य कर्ता रत्नावतीरत्नपत्योः पुत्रः भवदेवादीनां शिष्यः षोडशसप्तदशशतकयोर्मध्यवर्ती (1650–1750 A. D.) उमापत्युपाध्यायः । अनेन अनुमानीयं दिव्यचक्षुः अथवा अनुभवीयं दिव्यचक्षुरिति ग्रन्थोऽपि कृत इति (p. No. 6) ज्ञायते ।

पदार्थमण्डनम् :—

सरस्वतीभवनग्रन्थमालायां (S.B.T. 30) मुद्रितोऽयं वैशेषिकसिद्धान्तप्रकरणग्रन्थः रघुनाथशिरोमणिभिः कृतस्य पदार्थतत्वनिरूपणाख्यस्य खण्डनरूपः । पदार्थतत्वनिरूपणाख्ये ग्रन्थे खण्डितानां वैशेषिकमतप्रसिद्धानां पदार्थानां पुनः युक्तिभिः संस्थाप्य मण्डनं कृतमिति पदार्थमण्डनमिति नाम सार्थकं दृश्यते ।

ग्रन्थेऽस्मिन् द्रव्यगुणकर्मधर्माभावाख्याः पञ्च पदार्थाः स्वीकृताः । द्रव्याणि नव । गुणस्तु एकोनविंशतिप्रकाराः स्वीकृताः । कर्म गमनाख्यमेकमेव, धर्मास्तु संख्यादिभेदेन नवधा, अभावस्तु द्विविध एवेति विभागो दृश्यते । रघुनाथशिरोमणिभिः खण्डिताः दिक्कालाकाशाः अत्र पुनस्स्थापिताः । रघुनाथशिरोमणिभिः कृतं केषाञ्चित् पदार्थानां खण्डनमपि ग्रन्थेऽस्मिन् स्वीकृतम् । परं श्रुतिसूत्राविरुद्धानां पदार्थानां खण्डनं न अभिमतमिति तेषां मण्डनं कृतम् । मूर्तत्वमूर्तत्वैक्यनिराकरणम्, पृथक्त्वस्य गुणान्तरत्वनिरासः पृथक्त्वस्यान्योन्याभावेऽन्तर्भाव इत्यादयो विषया ग्रन्थेऽस्मिन् उल्लेखार्हा विद्यन्ते ।

अस्य ग्रन्थस्य रचयिता मन्त्रमहोदधिकारमहीधरवंशजः लक्ष्मणभट्टपौत्रः वीरेश्वरपुत्रः कृष्णदत्तपिता अलंकारचन्द्रोदय–युक्तिविमर्श–परामर्शविमर्श–तर्कधुन्धध्वंसन – न्यायसिद्धान्तरक्षामणि – तर्कसमयखण्डन – न्यायामृततरङ्गिणीकण्टकोद्धार–निर्विकल्पकभङ्गेत्यादिग्रन्थप्रणेता मध्वसिद्धान्तानुयायी इन्दुबाणोदधिब्रह्ममितविक्रमसंवत्सरवासी (1695–1795 A.D.) वेणीदत्त इति ज्ञायते ।


पदार्थमण्डने – पदार्थविभागः
द्रव्य 9
गुणाः 19
कर्म 1
धर्माः 9
अभावः 2
पृथिवी
अप्
तेजस्
वायु
आकाश
काल
दिक्
आत्मा
मनस्
गमनम्
संसर्गाभावः
अन्योन्याभावः
संख्या
सामान्य
विशेष
विषयता
वैशिष्ट्य
कारणत्व
कार्यत्व
स्वत्व
शक्ति
रूप
रस
गन्ध
स्पर्श
परिमाण
संयोग
वियोग
गुरुत्व
द्रवत्व
स्नेह
शब्द
बुद्धि
सुख
दुःख
इच्छा
द्वेष
प्रयत्न
अदृष्ट
संस्कार

**तर्कसङ्ग्रहः :—**

न्यायवैशेषिकप्रकरणग्रन्थोऽयं न्यायवैशेषिकतत्वबुभुत्सूनां बालानामत्यन्तमुपकरोति । ग्रन्थोऽयं द्रव्याणां गुणानाञ्च लक्षणानि भेदांश्च सूत्रादारब्धान् तत्वचिन्तामणिपर्यन्तान् सङ्ग्रहेण प्रतिपादयति। गुणनिरूपणावसरे न्यायशास्त्रोक्तानि प्रत्यक्षादीनि चत्वारि प्रमाणानि बुद्धौ अन्तर्भाव्य तेषां लक्षणोदाहरणानि विशदयति । परार्थानुमानप्रसंगे पञ्चावयवान् निर्दिश्य तेषु हेतुप्रसङ्गात् हेत्वाभासांश्च सोदाहरणं विशदयति । परं जातिनिग्रहस्थानानि आत्मविचारावसरे ईश्वरानुमानादि वा नैव वर्णितानि । बहुषु स्थलेषु तर्कभाषा तार्किकरक्षादिग्रन्थैः साम्यं सर्वात्मना दृश्यते ।

तर्क्यन्ते—प्रमितिविषयिक्रियन्त इति तर्का:-द्रव्यादिपदार्थाः तेऽत्र उद्देशलक्षणपरीक्षाभिः संगृह्यन्त इति ग्रन्थस्यास्य नाम सार्थकं भवति । सप्तपदार्थान् नव द्रव्याणि चतुर्विंशति गुणान् पञ्च कर्माणि अनन्तान् विशेषान् एकं समवायम् चतुर्विधान् अभावान् निर्दिश्य तेषां लक्षणानि यथार्थानुभवकरणप्रसंगात् करणकारणयोर्लक्षणम्, कारणभेदान् कार्यलक्षणञ्चोपपाद्य प्रत्यक्षनिरूपणप्रसंगात् प्रत्यक्षज्ञानहेतून् षड्विधान् संनिकर्षान् निरूप्य अनुमानप्रकरणे परार्थानुमानप्रस्तावे पञ्चावयवान् हेतुभेदान् हेत्वाभासभेदांश्च निर्दिशति । शाब्द प्रमाणनिरूपणावसरे शब्दज्ञानहेतुभूतान् आकाङ्क्षायोग्यतासंनिधीन् विविच्य सप्तातिरिक्तपदार्थानां सप्तपदार्थेष्वन्तर्भावं सूचयति । ग्रन्थोऽयं मद्रासवाराणसी कलकत्ताबम्बईआदिस्थानेषु मुद्रितः ।

अस्य रचयिता अन्नम्भट्टः आन्ध्रदेशजः कृष्णानदीतीरोपान्तग्राम (चित्तूर) वासी अद्वैतविद्याचार्यराघवसोमयाजिकुलोत्पन्नः तिरुमलाचार्यसूनुः कौशिकगोत्रजः सिद्धान्तमुक्तावलीव्याख्या सिद्धान्तरत्नाकरकर्तुः रामकृष्णभट्टस्य सर्वदेवस्य च कनीयान् भ्राता, व्याकरणाचार्यशेषकृष्णपुत्रस्य शेषवीरेश्वरामिधस्य शेषविश्वेश्वरस्य शिष्यः वेदान्ते ब्रह्मानन्दसरस्वत्याः शिष्यश्चेति ब्रह्मसूत्रव्याख्यामिताक्षरायाः ज्ञायते । अनेन भेदनिरासः, न्यायपरिशिष्टव्याख्याप्रकाशः, न्यायसुधाव्याख्या राणकोज्जीविनी, तन्त्रवार्तिकव्याख्या सुबोधिनी, दीधितिव्याख्या सुबुद्धिमनोरमा आलोकव्याख्या सिद्धाञ्जनम्, तत्वविवेकव्याख्या, तर्कसंग्रहव्याख्यादीपिका इतीमे ग्रन्था विरचिताः । अस्य जीवन कालः (1600–1700A. D.) इति ज्ञायते । 'काशीगमनमात्रेण नान्नम्भट्टायते द्विज' इति प्रसिद्धिरपि अस्य काशीवासित्वं ज्ञापयति । मदसीया अन्ये ग्रन्था अस्मदीये अद्वैतवेदान्तसाहित्येतिहासे (p. 314) वर्णिताः ।

## तर्कसङ्ग्रहे पदार्थविभागः



## तर्कसङ्ग्रहे गुणविभाग




तर्कसंग्रहे बुद्धिविभागः
स्मृतिः
अनुभव
प्रमाजन्या
अप्रमाजन्या
यथार्थ
अयथार्थ
प्रत्यक्ष
अनुमिति
उपमिति
शाब्द
संशय
विपर्यय
तर्क
सविकल्पक
निर्विकल्पक
स्वार्थ
परार्थ
1 सादृश्य ज्ञानमूलक
2 असाधारणधर्मज्ञानमूलक
3 वैधर्म्यज्ञानमूलक
शाब्दज्ञानहेतवः
संनिकर्षभेदाः
अवयवभेदाः
वाक्यम्
पदम्
शक्ति
लक्षणा
वाक्यार्थज्ञानहेतु
1संयोग
2संयुक्तसमवाय
3संयुक्तसमवेत-
समवाय
4समवाय
5समवेतसमवाय
6विशेषण-
विशेष्यभाव
प्रतिज्ञा
हेतु
उदाहरण
उपनय
निगमन
1लौकिकम्
2वैदिकम्
ईश्वरप्रोक्तम्
1जहत्
2अजहत्
3जहदजहत्
1आकाङ्क्षा
2योग्यता
3संनिधि
केवलान्वयी
केवलव्यतिरेकि
अन्वयव्यतिरेकि
हेत्वाभासभेदाः
आप्तोक्त
अनाप्तोक्त
सव्यभिचार
विरुद्ध
सत्प्रतिपक्ष
असिद्ध
बाधित
*एवमङ्किता
व्याख्यासूक्ताः
साधारण
असाधारण
अनुपसंहारी
आश्रयासिद्ध
स्वरूपासिद्ध
व्याप्यत्वासिद्ध
शुद्धासिद्ध
भागासिद्ध
विशेषणासिद्ध
विशेष्यासिद्ध

तर्कसङ्ग्रहव्याख्या :—

1. तर्कसङ्ग्रह-दीपिका—

बह्वीषु मातृकासु शिशुहितेति नामान्तरमस्य दृश्यते । तर्क सङ्ग्रहेऽनुक्ताः न्यायवैशेषिकसिद्धान्तसिद्धाः विषयाः दीपिकायामस्यां मूलव्याख्याव्याजेन सम्यङ्नि-रूपिताः । तेषु मङ्गलवादः सुवर्णस्य तैजसत्वस्थापनम्, कार्यरूप पृथिव्यादेरुत्पत्ति-क्रमः, परमाणुसाधनम् ईश्वरसाधनम्, जीवात्मनः शरीरादिभिन्नत्वस्थापनम्, चित्र-रूपव्यवस्थापनम्, वैशेषिकनैय्यायिकमतद्वयेन पाकनिरूपणम्, अनुपलब्धेः प्रमा-णान्तरत्वनिराकरणम्, मूलग्रन्थोक्तां भूयोदर्शनस्य व्याप्तिग्राहकतां निराकृत्य व्यभिचारज्ञानाभावसहकृतसहचारज्ञानस्य व्याप्तिग्रहोपायतासमर्थनम्, चतुर्विधो-पाधेर्निरूपणम्, जातिशक्तिखण्डनम्, वृद्धव्यवहारेण शक्तिग्रहनिरूपणम्, कार्य-परत्वनिरासः लक्षणाविचारः, व्यञ्जनाया शक्तिलक्षणान्तर्भूतत्वनिरूपणम्, प्रसंगात् प्राभाकरमतखण्डनम् वेदस्य पौरुषेयत्वस्थापनम् शब्दप्रमाणस्यानुमानान्तर्भूतत्व-व्यवस्था अर्थापत्तेरनुमानान्तर्भावः, प्रामाण्यवादः अन्यथाख्यातिव्यवस्थापना षोडश-पदार्थनिरूपणम्, जातिनिग्रहस्थानानां वर्णनम्, शक्तिनिराकरणम्, विधिवादः, पदार्थतत्वज्ञानस्य मोक्षोपयोगिता ज्ञानकर्मसमुच्चयस्य निःश्रेयसहेतुता चेति इमे विषया उल्लेखार्हाः । न्यायदर्शने वैशेषिकदर्शने वा वितताः सर्वेऽपि विचाराः सङ्गृह्-यात्र प्रतिपादिताः ।

अस्या रचयिता मूलकार अन्नम्भट्ट एव । स च आन्ध्रदेशज सप्तविंशति-शतकीय इति निरूपितं प्रागेव। व्याख्येयं बालमनोरमा मद्रास–वाराणसी कलकत्ता–बम्बई प्रभृतिषु बहुषु स्थानेषु मुद्रिता ।

दीपिकाव्याख्याः—

क—दीपिका-प्रकाशिका । दीपिकाव्याख्यात्मकोऽयं ग्रन्थः न केवलं मूलार्थं दीपिकाञ्च विशदयति, परन्तु बहुत्र स्थले 'अयमाशयः' 'अयमभिप्रायः' 'अत्रेदं बोध्यम्' इत्यादिना पृथक् स्वाशयं मणिकारादिग्रन्थाशयञ्च प्रतिपादयति । ततश्च व्याख्येयं सर्वापेक्षया व्युत्पादिका विद्यते । अस्य कर्ता आन्ध्रदेशजः कौण्डिन्यगोत्रोत्पन्नः रामभट्टपुत्रः लक्ष्मीनृसिंहपिता मणिप्रभापराख्यायाः अभिनव-चिन्तामणिव्याख्यायाः, दीधितिगादाधरी-जागदीशी व्याख्यायाश्च कर्ता अष्टाद-शशतकापरार्धवासी ( 1740–1840 A. D. ) नीलकण्ठभट्ट इति ज्ञायते । मुद्रिता चेयम् ।

प्रकाशिकाव्याख्याः—

1. भास्करोदया । व्याख्येयं सहृदयहृदयाह्लादिनी सुसंस्कृता सुपरिष्कृता आशुबोधोपयिकी निर्णयसागरमुद्रणालये दीपिकया सह मुद्रिता । अस्या रचयिता कौण्डिन्यगोत्रजः रामभट्टपौत्रः दीपिकाकर्तृनीलकण्ठभट्टपुत्रः वाराणसीवासी लक्ष्मीनृसिंहभट्टः एकोनविंशतिशतकीय (1775–1875 A.D.) इति ज्ञायते । पत्नीवियोगात् जगज्जालाच्च उद्विग्नस्स्वीकृतसंन्यासः काश्यामुवास । अतएव क्वचित् आदर्शपुस्तके नृसिंहयतीन्द्र इति नामापि दृश्यते । मुद्रितेयं व्याख्या निर्णयसागरमुद्रणालये बम्बईनगर्याम् ।

2. प्रकाशिकाव्याख्या—बालप्रिया—

नाम्नोऽनुरूपं सुगमसरलशैल्यां व्याख्यागतानर्थान् विशदयन्तीयं व्याख्या बहुषु स्थलेषु तर्कसंग्रहदीपिकार्थानपि विशदयन्ती पाठकानां मन आह्लादयति । व्याख्याया अस्याः कर्ता कृष्णताताचार्यतनजः देवनाथाचार्यशिष्यः चतुश्शास्त्रविद्वान् केन्द्रीयसंस्कृतविद्यापीठप्राध्यापकः पञ्चलक्षणीव्याख्याता आधुनिकः विंशतिशतकीयः नावलपाक्कं शठकोपरामानुजताताचार्यः । व्याख्येयं टिप्पण्या साकं मद्रपुरी विश्वविद्यालयसंस्कृतविभागाध्यक्षेण प्राध्यापकेन Dr. N. वीलिनाथमहाशयेन सम्पादिता प्रकाशिता च ।

3. प्रकाशिकाव्याख्या—प्रसारणा—

व्याख्येयमज्ञातकर्तृनामधेया अडयारपुस्तकालये लभ्यते । परं मद्रपुरी विश्वविद्यालयसंस्कृतविभागप्राध्यापकेन Dr. N. वीलिनाथमहाशयेन सम्पादिता प्रकाशिता च तर्कसंग्रह - दीपिकाप्रकाशिका - बालप्रियाव्याख्याभिस्सह । अस्याः प्रसारणायाः कर्ता तिरुप्पुक्कुषिस्वामी इति सम्पादकानामाशयः । न्यायसिद्धाञ्जनस्य रत्नपेटिकेति काचन व्याख्या तिरुप्पुक्कुषिस्वामिना कृता विद्यते । रत्नपेटिकास्थानुगमैस्सह प्रसारणास्था अनुगमास्सर्वात्मना साम्यं लभन्ते । अतश्च द्वयोर्ग्रन्थयोरपि रचयिता तिरुप्पुक्कुषिस्वामीति तेषामाशयः । अनेन दिनकरीटिप्पणी च कृता विद्यते ।

4. अन्या काचन रामभद्रभट्टकृता प्रकाशिकाव्याख्यासीदिति Hall सूच्या एव ज्ञायते ।

24

ख. दीपिकाव्याख्या फक्किकानाम्नी जिनलाभसूरिप्रशिष्येण अमृतधर्मशिष्येण खरतरगच्छीयेन जैनेन क्षमाकल्याणगणिना (1772 A.D.) कृता राजस्थान-पुरातनग्रन्थमालायां मुद्रिता। फक्किकाया अपि व्याख्या रत्ननाथगणिना कृता काचनास्तीति आलवारसूच्यां दृश्यते।

ग. भवानन्दसिद्धान्तवागीशपौत्रेण रामेश्वरपुत्रेण मधुसूदनशिष्येण दिनकरीय व्युत्पत्तिवाददीधितिव्याख्यात्रा रामरुद्रभट्टाचार्येण (1700 A.D.) कृता काचन दीपिकाव्याख्या रामरुद्रीनाम्नी बालमनोरमामुद्रणालये मद्रासनगरे मुद्रिता। प्रमाण्यवादारम्भपर्यन्तमेव मुद्रिता लभ्यते। मद्रास, मैसूर, बरोडा बम्बई वाराणसी तिरुवनन्तपुरादिपुस्तकालयेषु व्याख्याया अस्या मातृकाः लभ्यते। एनामधिकृत्य जर्नल आफ आसियाटिक् सोसाईटि बेंगाल (XI 1915 p. 292) पत्रिकायां वर्णितम्।

घ. वाधूलगोत्रजेन श्रीनिवासाचार्यस्य पुत्रेण शिष्येण च वेङ्कटाचार्येण (1800 A.D.) कृता काचन न्यायदीपिकापराख्या तत्वार्थदीपिकानाम्नी दीपिकाव्याख्या अमुद्रिता अडयारमद्रासतञ्जपुरपुस्तकालयेषु लभ्यते।

ङ. आत्रेयवंशजेन बालकृष्णशिष्येण रायनरसिंहशास्त्रिणा (1800 A.D.) कृता काचनोत्कृष्टा नृसिंहप्रकाशिकाख्या व्याख्या बालमनोरमाग्रन्थमालायां (No. 4) मुद्रिता।

च—नृसिंहप्रकाशिकाकर्तृ रायनरसिंहशास्त्रिशिष्येण पट्टाभिरामेण (1900 A.D.) कृता काचन अनुगमप्रधाना दीपिकाव्याख्या पट्टाभिरामप्रकाशिकाख्या संयोगग्रन्थपर्यन्तं बालमनोरमाग्रन्थमालायां (No. 4) मुद्रिता।

छ—आन्ध्रदेशजेन कृष्णानदीतीरवर्तिवेमूरग्रामवास्तव्येन वेमूर्युपनामक-रामब्रह्मसुधान्द्रशिष्येण सूर्यनारायणशास्त्रिकन्नमाम्बयोः द्वितीयतनयेन हारीतगोत्रजेन तर्कसंग्रहसर्वस्वपञ्चलक्षणीसर्वस्वमुक्तावलीसर्वस्वसामान्यनिरुक्तिसर्वस्वादिकर्त्रा गुरु-गण्टि श्रीरामशास्त्रिणा (1928 A. D.) कृता दीपिकासर्वस्वाख्या व्याख्या मद्रासनगरे मुद्रिता। व्याख्येयं न केवलं मूलग्रन्थाववोधने बहूपकरोति परन्तु चिन्तामण्याद्युक्तान् सिद्धान्तान् तत्र तत्र प्रतिपादयन्ती अतीव व्युत्पत्त्याधायिनी राजते। पारिभाषिकपदार्थसंग्रहाख्यप्रकरणे शाब्दबोधप्रक्रियां धात्वर्थादिविचारांश्च सुविशदं विवेचयति।

ज—कृष्णयजुर्वेदाध्यायिनः साहित्यन्यायवेदान्तायुर्वेदेषु विदुषः आयुर्वेद-भिषग्वरस्य वैद्यवाचस्पतेः कौशिकगोत्रजस्य करूरवास्तव्यशामशर्मणः पित्रा भामती-विवरणकर्त्रा षड्दर्शिनीपारदृश्वना सुब्रह्मण्यशास्त्रिणा (1850–1958 A.D.) कृता काचन दीपिकाप्रकाशाख्या व्याख्या मैसूरनगरे मुद्रिता विद्यते।

एवमन्याश्च शिवरामतीर्थशिष्यनारायणतीर्थकृता प्रभाख्या व्याख्या मद्रास नगरपुस्तकालये, गङ्गाधरभट्टकृता काचन दीपिकाव्याख्या मैसूरपुस्तकालये, तर्करत्नमहोदधिनामकपण्डितेन कृता अपरा दीपिकाव्याख्या मैसूरपुस्तकालये, दक्षिणामूर्तिकृता व्याख्या मैसूरपुस्तकालये, महादेवपण्डितकृता काचन दीपिका व्याख्या बम्बईपुस्तकालये, वीरराघवेण कृतान्या दीपिकाव्याख्या R.V.कृष्णमाचार्य-सूच्याम्, अज्ञातकर्तृनामधेया प्रकाशाख्या व्याख्या आनन्दाश्रमबन्दागगार शृङ्गेरीपुस्तकालयेषु, अज्ञातग्रन्थकर्तृनामधेयं व्याख्याद्वयं बरोडामद्रासतञ्जपुर बन्दरगारपुस्तकालयेषु चेति बह्व्यो व्याख्या अमुद्रिता लभ्यन्ते।

तर्कसङ्ग्रहव्याख्याः—

2. न्यायबोधिनी—न्यायशास्त्रीयपारिभाषिकन्यायानां शीघ्रं अनायासेन बोधयन्तीयं व्याख्या बलभद्रविजयश्रियोः पुत्रेण काणादरहस्यकर्तुः पद्मनाभस्य विश्वनाथस्य च कनीयसा भ्रात्रा केशवमिश्रपद्मनाभयोः शिष्येण गोवर्धनाचार्येण (1675 A.D.) कृतेयं व्याख्या मद्रासबम्बईवाराणस्यादिषु बहुत्र मुद्रिता।

3. अन्नम्भट्टशिष्येण सुबहुबुद्धिनाम्ना (1700 A.D.) पण्डितेन कृता काचन चन्द्रिकाख्या व्याख्या निर्णयसागरमुद्रणालये मुद्रिता।

4. गौरीकान्तसार्वभौमभट्टाचार्येण पदार्थसंग्रहव्याख्या–विवरण तर्कभाषा-व्याख्याभावार्थदीपिका, – मणिदीधितिविवेचन (Ref. Mss. 156 - fol. 220 Banaras Sanskrit College) प्रभृतिग्रन्थकर्त्रा अष्टादशशतकयेन (1750 A.D.) कृता काचन तर्कसंग्रहव्याख्या Blhler सूच्यामेव दृश्यते।

5. कौशिकगोत्रजेन सामवेदीयेन वैकुण्ठदीक्षितपुत्रेण काशीनाथोपाध्याय-शिष्येण अष्टादशशतकवासिना (1774 A.D.) कृष्णधूर्जटिना कृता सिद्धान्त-चन्द्रोदयाख्या व्याख्या वाराणस्यां बम्बय्याञ्च मुद्रिता। अस्या अपि व्याख्या

वेङ्कटार्यशिष्येण रामानुजस्य कनीयसा भ्रात्रा शठकोपेन कृता काचन मद्रासपुस्तकालये अमुद्रिता लभ्यते। एवं व्यासाचार्यपुत्रेण वीरराघवाचार्यशिष्येण अष्टादशशतकीयेन (1700 A.D.) हनूमत्पण्डितेन कृता काचन प्रभाख्या व्याख्या अडयार-बरोडा-मद्रास-मैसूर-तिरुवनन्तपुरवाराणस्यादिपुस्तकालयेषु अमुद्रिता लभ्यते। व्याख्येयं सिद्धान्तचन्द्रोदयदीपिकयोरुभयोरप्यर्थं विदशयति। 6. अष्टादशशतकवासिना (1800 A.D.) केनचित् विश्वनाथपञ्चाननभट्टेन कृता काचन व्याख्या मद्रासविश्वविद्यालयबम्बईपुस्तकालययोरमुद्रिता लभ्यते। 7. अष्टादशशतकीयेन (1800–1900 A.D) मुकुन्दभट्टेन कृता अपरा चन्द्रिकाख्या व्याख्या निर्णयसागरमुद्रणालये मुद्रिता। अस्याः व्याख्या कुवलयोल्लासाख्या कृष्णताताचार्यकृता अमुद्रिता अडयारमद्रासपुस्तकालययोर्लभ्यते। 8. रामनाथपण्डितेन (1800–1900 A.D.) कृता अपरा व्याख्या अमुद्रिता वाराणस्यां वेणीदत्तशर्मणः पुस्तकालये लभ्यते। 9. अनन्तनारायणपण्डितेन (1800–1900 A.D.) कृता काचन व्याख्या अमुद्रिता मीरजापुरे ब्रह्मभूषणपुस्तकालये लभ्यते। 10. काञ्चीवासिना रायनृसिंहस्य शिष्येण पट्टभिरामशास्त्रिणा (1850 A.D) कृता अन्या वाक्यार्थबोधिन्याख्या शाब्दबोधात्मिका व्याख्या वाविल्लारामस्वामिपुस्तकालयेन मुद्रिता। 11. अपरा काचन वाक्यार्थनिरुक्त्याख्या व्याख्या बाल-नोरमावाविल्लमुद्रणालययोर्मुद्रिता। यद्यपि मुद्रिते ग्रन्थे ग्रन्थारम्भे अन्ते वा ग्रन्थकर्तुर्नाम न दृश्यते। परं सिद्धान्तमुक्तावलीव्याख्यामञ्जूषाकर्त्रा नृसिंहप्रकाशिकाकर्तृरायनृसिंहशिष्येण पट्टभिरामेण कृता स्यादिति निश्चीयते। अज्ञातकर्तृनामधेया वाक्यार्थनिरुक्तिव्याख्यापि काचन अडयारपुस्तकालये लभ्यते। 12 वृन्दावनगोवर्धनपीठस्थगोवर्धनरङ्गाचार्येण (1900 A.D.) कृता काचन न्यायार्थलघुबोधिन्याख्या व्याख्याऽमुद्रिता मद्रास पुस्तकालये लभ्यते। 13. विन्ध्येश्वरीप्रसादेन वाराणसीवास्तव्येन (1916 A.D.) कृता काचन तरङ्गिण्याख्या व्याख्या वाराणस्यां कस्यचिदधीना अमुद्रिता राजते। 14. गुरुदत्तसिंहशिष्येण चन्द्रजसिंहेन (1900 A.D.) कृता पदकृत्याख्या तर्कसंग्रहोक्तलक्षणगतपदफलमावेदयन्ती अन्वर्था व्याख्या तारामुद्रणालये बम्बईनगर्याम्, वाविल्लापुस्तकालये मद्रासनगरे वाराणस्याञ्च मुद्रिता। 15. वामाचरणभट्टाचार्येण

(1888–1961 A.D.) कृता काचन किरणावल्याख्या व्याख्या वाराणस्यां मुद्रिता । 16. तेनालीपाठशालाध्यापकेन पञ्चलक्षणीसर्वस्वदीपिकासर्वस्वमुक्तावलीसर्वस्वसामान्यनिरुक्तिसर्वस्वादिकर्त्रा आधुनिकेन (1924 A.D.) रामब्रह्मसुधीशिष्येण सूर्यनारायणशास्त्रिद्वितीयपुत्रेण पारिभाषिकपदार्थसंग्रहकर्त्रा गुरुकंटि श्रीरामशास्त्रिणा कृता काचन अतिसुलभा बालानां सुखबोधकरी च तर्कसंग्रहसर्वस्वाख्या व्याख्या विजयवाडानगरे मुद्रिता । 17. तर्कार्णव-पण्डितरत्नादिबिरुदाङ्कितेन कुसुमाञ्जलिविस्तरवैशेषिकरसायनादिकर्त्रा आधुनिकेन (1934 A.D.) उत्तमूर वीरराघवाचार्यस्वामिना दाक्षिणात्येन कृता काचन व्याख्या मद्रासनगरे मुद्रिता । 18. शिवनारायणशास्त्रिणा (1940 A. D.) कृता अपरा व्याख्या बम्बईनगर्यां मुद्रिता । 19. एवं R. C. झा महोदयेन कृता काचन विरलाख्या व्याख्या ग्रन्थकर्त्रैव (1960 A.D.) प्रकाशिता । 20. प्रभुदत्तशास्त्रिपुत्रेण वाराणसीवासिना शिवदत्तमिश्रेण (20th cent.) कृता काचन गङ्गाख्या व्याख्या वाराणस्यां मुद्रिता । 21. न्यायाचार्य आनन्द झा (20th cent.) महोदयेन कृता काचन सीताख्या व्याख्या वाराणस्यां मुद्रिता । 22. एवमाधुनिकेन (20th cent.) गुरुप्रसादशास्त्रिणा कृता परिमलाख्या व्याख्या वाराणस्यां मुद्रिता । 23. भामती व्याख्याकर्तुस्सुब्रह्मण्यार्यपुत्रेण वैद्यवाचस्पतिना करूरग्रामवासिना पण्डितरामशर्मणा (20th cent.) कृता काचन बालोपकारिणी शक्तिसञ्जीविन्याख्या व्याख्या करूरनगरस्य नवनीतग्रन्थमालायां (No.33) प्रकाशिता । अस्या न्यायशिरोमणिना शङ्करनारायणशर्मणा कृता टिप्पणी च मुद्रिता । 24. एवं परमहंसेत्यादिबिरुदभूषितानां सुजयीन्द्रतीर्थश्रीपादानां पूर्वाश्रमपुत्रेण राजा—गिर्याचार्येण (20th cent.) प्रणीता तर्कसंग्रहगतप्रतिवाक्यं साम्प्रदायिकशाब्दबोधात्मिका व्याख्या बृन्दावनं मन्त्रालयेन प्रकाशिता । 25. विंशतिशतकीयेन (20th cent.) दुण्ढिराजशास्त्रिणा कृता काचन हेत्वाभासोद्धारणाख्यव्याख्या वाराणस्यां मुद्रिता ।

एवमेव कृष्णशास्त्रिकृता 26. गुप्तार्थदीपिनी अथवा गूढार्थदीपिनीति प्रसिद्धा व्याख्या ओट्टप्पालनामकस्थाने, जीवरामशास्त्रिकृता 27. चन्द्रोदयाख्या व्याख्या बम्बईनगर्याम्, 28. पट्टाभिरामकृता टिप्पण्याख्या व्याख्या पालघाटे ग्रन्थलिप्याम्, बालमनोरमामुद्रणालये च, 29. मुरलीधरशास्त्रिकृता तर्कविलासिन्याख्या व्याख्या बम्बईनगर्याम्, शुक्लरत्ननाथकृता 30. न्याय-

बोधिन्याख्या व्याख्या तेलुगुलिप्यां (बरोडा - बन्दरगारपुस्तकालययोरमुद्रिता) मेरुशास्त्रिकृता वाक्यवृत्तिरिति प्रसिद्धा 31. उपन्यासाख्या कलकत्तायां मद्रासबालमनोरमायाम् , माधवपट्टाभिरामकृता 32. वाक्यार्थनिरुक्त्याख्या व्याख्या बम्बईनगरे च मुद्रितास्सन्ति ।

एवमेव पुरुषोत्तमभट्टकृता 33. अर्थप्रकाशिकाख्या व्याख्या अडयार-मद्रास-तिरुवनन्तपुरपुस्तकालयेषु, रामेश्वरशुक्लकृता 34. कौतुकाख्या व्याख्या बरोडापुस्तकालये, मदनभट्टोपाध्यायकृता 35. टीका कलकत्तारायलासियाटिक्-पुस्तकालये, वैद्यनाथगाडकीलकृता 36. तर्कचन्द्रिकाख्या व्याख्या बम्बई-उज्जै पुस्तकालययोः, चण्डेश्वरकृता 37. तकप्रकाशिन्याख्या बम्बईपुस्त-कालये जगन्नाथशास्त्रिकृता 38. निरुक्त्याख्या व्याख्या Rice सूच्याम्, रामचन्द्रभट्टाचार्यकृता 39. निरुक्त्याख्या व्याख्या विश्वभारतीपुस्तकालये, रामचन्द्रकृता 40. न्यायरत्नप्रकाशिकाख्या व्याख्या मैसूरपुस्तकालये, चिदानन्दाश्रमयतिकृता 41. बालबोधिन्याख्या व्याख्या बरोडामद्रासतिरुवनन्त-पुस्तकालयेषु, रामनारायणकृता 42. बालबोधिन्याख्या आलवारपीटर्ससूच्याम्, श्रीधरकृता 43. भावदीपिकाख्या मिथिलापुस्तकालये, रामदत्तकृता 44. मार्ताण्डाख्या बम्बईपुस्तकालये, हरिहरपण्डितेन कृता वृत्त्याख्या बरोडा तिरुवनन्तपुरपुस्तकालययोः शङ्करपण्डितकृता 45. व्याख्या अलहाबाद मद्रासन्तनन्तशयनपुस्तकालयेषु, अनन्त भट्टकृता 46. व्याख्या वेबरसूच्याम्, बलभद्रकृता 47. व्याख्या उदयपुरपुस्तकालये, 48. शेषाचार्यकृता व्याख्या मैसूरपुस्तकालये चेतीमाः व्याख्या अमुद्रिताः लभ्यन्ते ।

तथा अलब्धाज्ञातकर्तृनामधेयाः व्याख्याः । 49. कालिङ्गपरिभाषाख्या बन्दरगारपुस्तकालये, 50. तत्वप्रकाशाख्या अडयारपुस्तकालये, 51. न्याय-चन्द्रिकाख्या अलहाबादसूच्याम्, 52. बालबोधिन्याख्या बम्बईरायलासियाटिक् पुस्तकालये, 53. भावन्यासाख्या बरोडापुस्तकालये, 54 वाक्यवृत्त्याख्या मैसूरपुस्तकालये, 55. वाक्यार्थाख्या आनन्दाश्रमपुस्तकालये 56. वाक्यार्थ-निरुक्त्याख्या आलवारसूच्याम्, 57. विवृत्याख्या अनन्तशयनपुस्तकालये, 58. व्याख्या मद्रासतञ्जपुरअडयारपुस्तकालयेषु अमुद्रिताः लभ्यन्ते ॥

## तर्कसंग्रहव्याख्यापरम्परा

- दीपिका
  - प्रकाश
    - सुब्रह्मण्यकृतः
    - अज्ञातकर्तनामा
  - प्रकाशिका
    - पट्टाभिरामकृता
    - नीलकण्ठप्रकाशिका
      - प्रसारणा
      - बालप्रिया
      - भास्करोदया
    - रामभद्रभट्टकृता
  - फक्किका
    - व्याख्या
  - नृसिंहप्रकाशिका
  - न्यायदीपिका
  - प्रभा
  - रामरुद्रीया
  - व्याख्याः
    - गङ्गाधर भट्टकृता
    - तर्करत्न कृता
    - दक्षिणामूर्ति कृता
    - महादेवपण्डित कृता
    - वीरराघव कृता
    - अज्ञात नाम
    - अज्ञात नाम
  - सर्वस्वम्

## तर्कसङ्ग्रह-व्याख्या परम्परा II




तर्कसङ्ग्रह - व्याख्या परम्परा III
वाक्यवृत्ति
अज्ञातनामा
मेरुशास्त्रीया
वाक्यार्थ
वाक्यार्थनिरुक्ति
पट्टाभिरामीया
व्याख्या
माधवपदीया
अज्ञातनामा
वाक्यार्थबोधिनी
वाक्यार्थलघुबोधिनी
विरला
विवृति
वृत्ति
व्याख्या
शक्तिसञ्जीवनी
टिप्पणी
शाब्दबोध
सर्वस्व
सिद्धान्तचन्द्रोदय
प्रभा
व्याख्या
सीता
हेत्वाभास
अनन्तनारायण
अनन्तभट्ट
उत्तमूर वीरराघव
गौरीकान्त
बलभद्र
रामनाथ
विश्वनाथ पञ्चानन
शङ्कर
शिवनारायण
शेषाचार्य
अज्ञात नाम

पदार्थरत्नमाला :—

उद्देशलक्षणपरीक्षाणां स्वरूपं परिष्कुर्वन्नयं न्यायसिद्धान्तगतप्रमाणप्रमेयादि षोडशपदार्थान् व्याकुर्वाणश्चायं प्रकरणग्रन्थः अभ्युपगमसिद्धान्तोदाहरणावसरे वैशेषिकसिद्धान्तानपि प्रदर्शयति । ग्रन्थोऽयं मीमांसकान् वेदबाह्यान् बौद्धांश्च तत्तत्सिद्धान्तप्रदर्शनपूर्वकं तत्तत्प्रसंगे खण्डयति। व्याकरणसांख्यवेदान्तिनां च मतं प्रसंगवशात् भेदप्रतिपादनाय वर्णयति ।

प्रायशः न्यायवार्तिकतात्पर्यटीकामेव प्रधानतया प्रमाणीकरोति । क्वचित् स्थले लक्षणपरिष्कारादिविषये नूतनां पद्धतिं अनुसरन्नपि स्वसिद्धान्तस्य प्राचीनाचार्याणां सम्मतिं च प्रदर्शयति । प्रसंगात् शाब्दबोधप्रक्रियां कटाक्षयन्नयं ग्रन्थः प्राचीनग्रन्थच्छायायुतश्च राजते। पठनीयः व्युत्पादकश्चायं ग्रन्थः पण्डितग्रन्थमालायां (No. 27) अपूर्णः मुद्रितः ।

ग्रन्थोऽयं आकरम्, मणिपरीक्षाम्, प्रज्ञाकरगुप्तम्, मणिकृतम्, रत्नकोशकृतम्, दिङ्नागम्, वार्तिकम्, लीलावतीकारम्, कुसुमाञ्जल्युपायस्वरसम्, शूलपाणिम्, पदार्थप्रवेशकृतम्, अमरनाथभट्टाचार्यम्, च निर्दिशति। स्थलद्वये परं ग्रन्थकारः " अस्मद्गुरवः " इति गुरुग्रन्थनिर्देशं विना सिद्धान्तमेव प्रतिपादयति ।

मुद्रिते ग्रन्थे ग्रन्थकारस्य नाम न निर्दिष्टम् । परं उमेशमिश्रः रघुनाथविद्यालङ्कार इति वदति। Potter तु व्रजभूषणमिश्र इति वदति । सर्वथायं सप्तदशशतकादर्वाचीन इति परं ज्ञायते । यतो हि मणिपरीक्षां निर्दिशति । मणिपरीक्षा तु बलभद्रविजयश्रियोः पुत्रेण पद्मनाभमिश्रेण (1600 A.D.) कृता । अस्मद्गुरव इति स्थलद्वये (pp. 11, 12) निर्दिशति। परं कोऽयं गुरुः ? को वा तदीयो ग्रन्थ इति न ज्ञातुं पार्यते। केवलं तदीयाशया एव वर्णिताः । अमरनाथ भट्टाचार्य इति कश्चन निर्दिशति ।

न्यायसिद्धान्ततत्त्वामृतम् :—

ग्रन्थोऽयं मुक्तावल्यादिवत् न्यायवैशेषिकदर्शनयोः संग्रहरूपोऽपि वैशेषिकाभिमतपदार्थानां निरूपण एव महान्तमादरं प्रदर्शयति । न्यायाभिमतः प्रमाणचतुष्टयवादः स्पष्टं निर्दिष्टः परं लक्षणादिविवरणं न कृतमत्र। पदार्थानां लक्षणान्यपि

नानुक्रान्तानि । परन्तु "लक्षणग्रन्थे वक्ष्यामः" (p. 7) प्रमाणग्रन्थे वक्ष्यामः (p. 7) इत्येव निर्दिष्टम् । प्रतिद्रव्यं विद्यमानानां गुणानां पृथक् पृथक् वर्णनं करोति । तेषां वर्णनावसर एव गुणानां लक्षणं विभागांश्च प्रतिपादयति । प्रतिद्रव्य-विचारं अन्ते पद्येनैकेन संक्षिप्तवर्णनं अस्य ग्रन्थस्य विशेषः ।

गुणेऽपि केचन गुणमङ्गीकुर्वन्ति, ह्रस्वदीर्घयोर्मानाभावः, एकतरकर्मज-उभयकर्मजसंयोगयोर्भेदाभावः, अवयवपरम्परायास्त्रुटावेव विश्रामः, वैशेषिकाणां चित्रस्वीकारः, धर्माधर्मादयो व्याप्यवृत्तिगुणाः, कायव्यूहे मानाभावः, इत्यादयो विषयाः अन्यतार्किकग्रन्थेभ्यो भिन्नाः तत्र तत्र वर्णिताः विद्यन्ते ।

प्राचीनैर्गदाधरादिभिः सूक्ष्मतया वादग्रन्थेषु निर्दिष्टाः ज्ञानप्रभेदाः अभाव-प्रभेदा इत्यादयो विषयाः ग्रन्थेऽस्मिन् सरलया शैल्या प्रतिपाद्यन्ते । ब्रह्ममीमांसा शास्त्रोक्ताकाशाधिकरणप्रामाण्यात् आकाशाभ्युपगमः ग्रन्थस्यास्य अन्यो विशेषः । तार्किकस्सन् वेदान्तसूत्राणां प्रामाण्यस्वीकारः ग्रन्थस्यास्य महत्त्वं निर्दिशति ।

ग्रन्थेऽस्मिन् दीधितिकारः लीलावतीरहस्यम्, शशधराचार्यः, मिश्रप्रभृतयः, नृसिम्हाश्रमाः (p. 60) इत्येवमादयो निर्दिष्टाः । प्रसंगवशात् बौद्धाः, चार्वाकाः, भाट्टमीमांसकाः, प्रभाकरमिश्रमतम्, वेदान्तिनः, नव्या वेदान्तिनश्च क्वचित् दूषिताः भूषिताश्च । ग्रन्थोऽयं मद्रासप्राच्यविद्यापुस्तकमालायां (MGOMLS 19) मुद्रितः ।

ग्रन्थस्यास्य प्रणेता अनन्ताचार्यनप्ता श्रीनिवासाचार्यपुत्रः कथककविः श्रीनिवासः । भेदधिक्कारकर्तारं नृसिंहाश्रमम् (1500–1600 A. D.) निर्दिशन् (p.60) अयं तस्मादनन्तरसामयिक इति ज्ञायते । लीलावतीरहस्यम् (pp.6,17) जैमिनीयसिद्धान्तसारश्च (p.38) अदसीयौ कृत्यन्तराविति ज्ञायते ।

न्यायसारः—

द्रव्यादिपदार्थविवेचक इत्यपरनामायं ग्रन्थः वैशेषिकोक्तद्रव्यादिपदार्थान् सलक्षणं विविच्य तत्र तत्र न्यायसिद्धान्तान् विशदयति । पण्डितग्रन्थमालायां (No 1) एवं पण्डितपत्रिकायां (Vols 25-26) च मुद्रितोऽयं ग्रन्थः रुद्रभट्टाचार्यं गौरीकान्तभट्टाचार्यञ्च निर्दिशति ।

अस्य कर्ता धारापुरनिवासी लक्ष्मणदेवात्मजः तर्कभाषा व्याख्या-सारमञ्जरी-दीधितिव्याख्या,— लीलावतीव्याख्याभावपरिच्छेद,— गुणरहस्यटिप्पणी,— समवायवादादिकर्ता माधवदेवः अष्टादशशतक (1831 A.D.) वासीति ज्ञायते ।

लक्षणराजिः—

उदयनाचार्यकृतलक्षणावलिमार्गानुसार्ययं वैशेषिको ग्रन्थः मतान्तरखण्डनपूर्वकं पदार्थानां लक्षणं प्रतिपादयति । आकाङ्क्षाविचारे उदयनाचार्यम्, अवयवविचारे गङ्गेशोपाध्यायम्, केवलान्वयिविचारे रुचिदत्तं, आत्माश्रयदोषविचारे गणेशदीक्षितञ्च खण्डयति । मुद्रितोऽयं तञ्जपुरसरस्वतीमहालये ।

अस्य रचयिता वादीन्द्रापरनामकस्य चिट्टिभट्टविदुषः पुत्रः तिम्माभट्टः तर्कभाषाव्याख्यातुर्गणेशदीक्षितादर्वाचीन अष्टादशशतकीय (1800 A.D.) इति ज्ञायते ।

एवमन्ये केचन ग्रन्था इदानीं न लभ्यन्ते तथापि ग्रन्थकाराणां नामानि तत्र तत्र निर्दिष्टानि तेषां मतवादादि खण्डितञ्चेति तदेव तत्कृतग्रन्थसद्भावे प्रमाणमस्माकम् । तेषु जीवनाथमिश्रः कश्चन । जीवनाथमिश्रोऽयं आत्मतत्त्वविवेकव्याख्यातुश्शङ्करमिश्रस्य पितृव्यः, भवनाथभ्राता च । एतदीयं पक्षलक्षणं शङ्करमिश्रेण वादविनोदे (p. 61) वैशेषिकसूत्रोपस्कारे (9–2–1) च निर्दिष्टम् । तस्मात् सम्भाव्यते यः कोऽपि न्यायवैशेषिकग्रन्थ अनेन कृतस्स्यादिति । एवं सरस्वतीभवनस्थेऽमुद्रिते विद्यानिवासभट्टाचार्यकृते तत्त्वचिन्तामणिविवेचने (fol 53a) गङ्गादित्यानुमतस्तत्त्वचिन्तामणिपाठः निर्दिष्टः । ततश्च गङ्गादित्यकृतः कोऽपि न्यायवैशेषिकग्रन्थ आसीदिति सम्भाव्यते । एवं पूर्वोक्ते तत्त्वचिन्तामणिविवेचने (fol47a), कलकत्तमुद्रिते चिन्तामणिमाथुरीग्रन्थे (B.I.S. 98 pp. 207-8) च घटेशोपाध्यायमतं परिशीलितम् । तस्माच्च सम्भाव्यते मैथिलेन घटेशोपाध्यायेनापि चिन्तामणिव्याख्या अन्यस्स्वतन्त्रग्रन्थो वा रचित इति । एवमन्यः कश्चन गङ्गेशोपाध्यायस्य तत्त्वचिन्तामणिसमालोचनकारः अज्ञातनामा न्यायलोचनकारः, तस्य व्याप्ति-पदलक्षणानि च ग्रन्थान्तरेषु परिशीलितानि दूषितानि च दृश्यन्ते । तस्य व्याप्तिलक्षणं शङ्करमिश्रेण वादविनोदे (p. 57) वाचस्पतिमिश्रद्वितीयेन तत्त्वालोके (II-2-58 fol. 153a) वासुदेवसार्वभौमेन सारावल्यपराभिधे मणिपरीक्षाग्रन्थे

(fol. 28b, 85a), हरिदासन्यायालङ्कारेण मणिप्रकाशे (fol. 91b) च निर्दिष्टानि। ततश्च न्यायालोचनग्रन्थसत्ता अनुमीयते।

एतावता न्यायवैशेषिकसिद्धान्तप्रतिपादनपराः प्रकरणग्रन्थाः प्रतिपादिताः। अधुना केचन अन्ये तादृशाः न्यायवैशेषिकतिलकायमानाः प्रकरणग्रन्थाः प्रतिपाद्यन्ते ये आत्मवादप्रधानाः, आत्मसाधनैकपरायणाः अनात्मवादिमतखण्डनपराश्च। यद्यपि इमे ग्रन्थाः न्यायवैशेषिकतत्वान्तर्भूतात्मविचारपरा इति

"शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम्।
आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः" ॥ इति,

"शास्त्रैकदेशस्य प्रक्रिया प्रकरणमिति" वा वचनात् प्रतिपिपादयिषितात्म तत्वनिर्णयोपयोगिनीनां सरलानां जटिलानाञ्च समस्यानां विचारपरा इति प्रकरण-ग्रन्थयोग्यतामर्हन्ति तथापि प्रकरणग्रन्थेभ्येऽपि उत्कृष्टतमं स्थानमेवैतेषां ग्रन्थाना-मिति नापरेक्षम्। तत्रैतादृशानां ग्रन्थानामुत्पत्तेः कारणं पश्यामः।

बौद्धचार्वाकादिप्रतिस्पर्धिभिः आक्रान्तेषु तत्वेषु परमात्मतत्वम्, आत्म-तत्वञ्चेति तत्वद्वयमेव विशेषतस्समाक्रान्तमासीत्। प्रत्यक्षानुमानाभिधं प्रमाणयुगलं अङ्गकुर्वतां सौगतानां तावद् वक्ष्यमाणचतुर्विधभावनया परमपुरुषार्थस्वीकारात् माध्यमिकः, योगाचारः, सौत्रान्तिकः, वैभाषिक इति चतस्रः संज्ञाः प्रसिद्धाः। भगवतो बुद्धस्यैकस्यैव बोधयितृत्वेऽपि बोद्धव्यमतिवैचित्र्यात् चातुर्विध्यमुपपन्नम्, यथा च गतोऽर्कमस्त इत्युक्ते जारचौर अनूचानादयः यथाक्रमं स्वस्वेष्टार्थानुसारेण अभिसरण–परस्वहरण–सदाचरणादिसमयं बुध्यन्ते।

तत्र कदाचिदुपसन्नान् शिष्यानवधाय सर्वं क्षणिकम्, क्षणिकम्, सर्वं दुःखम्, दुःखम्, सर्वं स्वलक्षणम्, स्वलक्षणम्, सर्वं शून्यम्, शून्यम्, इति भावनाचतुष्टयं परमाचार्येणोपदिष्टम्। एतादृशभावनाचिन्तनबलात् निखिलैहिकामुष्मिकविषयवासना-निवृत्तौ शून्यात्मकं परनिर्वाणं सेत्स्यतीति वयं कृतार्था नास्माकं उपदेश्यं किञ्चिदतः परमस्ति। अन्तेवासिभिश्चाप्राप्तस्य प्राप्तये पर्यनुयोगरूपो योगः, गुरूक्तस्यार्थस्याङ्गी-करणस्वरूपाचारश्चेति द्वयं कर्तव्यमित्याकर्ण्य कैश्चिच्छात्रैः गुरूक्तस्याङ्गीकारेण उत्तमा इत्येवं माध्यमिकसंज्ञा सम्प्राप्ता स्वीकृतञ्च सर्वशून्यत्वम्।

एतेषामयमाशयः—घटादिपदार्थानां सत्त्वेन क्षणिकत्वमनुमातव्यम् “ यत् सत् तत् क्षणिकम्, यथा जलधरपटलम्, सन्तश्चामी सर्वे भावा ” इति। न चायमसिद्धो हेतुरर्थक्रियाकारित्वस्य सत्वस्य घटादिपदार्थेषु प्रत्यक्षसिद्धत्वात्, व्यापकनिवृत्त्या व्याप्यनिवृत्तिरिति न्यायेन व्यापकक्रमाक्रमनिवृत्तौ अक्षणिकत्वात् सत्वनिवृत्तेः सिद्धत्वाच्च, तच्चार्थक्रियाकारित्वं क्रमाक्रमाभ्यां व्याप्तम्, न च क्रमाक्रमाभ्यामन्यो विधिस्सम्भवति—

परस्परविरोधे हि न प्रकारान्तरस्थितिः।
नैकतापि विरुद्धानां उक्तिमात्रविरोधतः॥ इति

न्यायेन व्याघातस्य सम्भवात्। तौ क्रमाक्रमौ स्थायिनोर्वर्तमानौ अर्थक्रियाकारित्वमपि व्यावर्तयन्तौ क्षणिकत्वपक्ष एव सत्वं व्यवस्थापयत इति। तदुक्तम्—

यत्सत्तत्क्षणिकं यथा जलधरास्सन्तश्च भावा अमी।
सत्ताशक्तिरिहार्थकर्मणि मितेः सिद्धेषु सिद्धा न सा॥
नाप्येकैव विधाऽन्यथा परकृतेनापि क्रियादिर्भवेत्।
द्वेधापि क्षणभङ्गसङ्गतिरतः साध्ये च विश्राम्यति॥ इति

सामान्यविशेषसमवायानां असत्वप्रसङ्गात् सत्तासामान्ययोगित्वरूपं सत्वं न सम्भवति, अनुवृत्तप्रत्ययश्च अन्यापोहालम्बन एवेति सर्वं क्षणिकमिति भावनीयम्। एवं सकलस्य संसारस्य दुःखात्मकता सर्वशास्त्रकृत्सम्मता, अन्यथा तन्निविवृत्सूनां तन्निवृत्युपाये प्रवृत्यनुपपत्तेः। अतश्च सर्वं दुःखमित्यपि भावनीयम्। ईदृशी प्रज्ञा साधकदृष्टान्ताभावात् कथं सिध्येदिति न शङ्कनीयम्, स्वलक्षणानां क्षणानां सलक्षण्याभावादेतेन सदृशमिदमिति दृष्टान्तस्य वक्तुमशक्यत्वात्, अत एव स्वलक्षणं स्वलक्षणमिति तृतीया भावना कर्तव्या। एवं शून्यमित्यपि भावनीयम्, स्वप्ने जागरणे च न मया दृष्टमिदं रजतादि इति विशिष्टनिषेधस्योपलम्भात्। यदि दृष्टं सत्, तदा तद्विशिष्टस्य दर्शनस्य इदन्ताया अधिष्ठानस्य च अध्यस्तस्य रजतत्वादेः तत्सम्बन्धस्य समवायादेश्च सत्वं स्यात्, न चैतदिष्टं कस्यापि, न चार्धजरती युक्ता, तस्मादध्यस्त - अधिष्ठान - तत्सम्बन्धदर्शनद्रष्टॄणां मध्ये एकस्यानेकस्य वा असत्वे निषेधविषयत्वेन सर्वस्यासत्वं बलादापतेदिति।

आचार्योपदिष्टं भावनाचतुष्टयं बाह्यार्थशून्यत्वञ्च उररीकृत्य आन्तरस्य विज्ञानस्य कथं शून्यत्वमुपदिष्टं प्रथमया भावनयेति पर्यनुयोगकरणात् इतरेषां योगाचार इति प्रथा सञ्जाता । एतेषां मते स्वसंवेदनं विज्ञानमेवार्थ अन्यथा जगदान्ध्यापत्तिः—अत एवोक्तम्—"अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति" इति । ग्राह्यस्तु बाह्योऽर्थो नास्त्येव, ज्ञानग्राह्यस्योत्पन्नस्य तस्य स्थित्यभावात् अनुत्पन्नस्य च असत्वात् । वर्तमानतावभासविरोधात् अतीतार्थोऽपि ज्ञानजनकोऽर्थो न सम्भवति । एवमतीन्द्रियत्वात् कृत्स्नैकदेशवृत्तित्वासम्भवाच्च परमाणुरूपोऽवयविरूपो वा अर्थोऽपि न प्रमाणपदवीमधिरोढुमर्हतीति स्वभिन्नग्राह्यत्वाभावात् तदात्मिका बुद्धिः स्वात्मरूपप्रकाशिका प्रकाशवदिति सिद्धम् । अत एवोक्तम् वार्तिकालङ्कारे—

नान्योऽनुभाव्यस्तेनास्ति तस्यानुभवोऽपरः ।
तस्यापि तुल्यचोद्यत्वात् स्वयं सैव प्रकाशते ॥
नीलादिरूपस्तस्यासौ स्वभावोऽनुभवश्रमः ।
नीलाद्यनुभवःख्यातः स्वरूपानुभवोऽपि सन् ॥

इत्यादि विज्ञप्तिमात्रतासाधकप्रकरणे । यत् वेद्यते येन वेदनेन तत् ततो न भिद्यते यथा ज्ञानेनात्मा, वेद्यन्ते तैश्च नीलादय इत्यनुमानेन ग्राह्यग्राहकयोरभेदश्च साधनीयः। भेदे हि तादात्म्यस्य नियामकस्य अभावात् अर्थस्याधुना सम्बन्धोऽनेन न भवेत् उत्पत्तेरनियामकत्वात् । ग्राह्यग्राहकसंवित्तिभेदावभासस्तु एकस्मिंश्चन्द्रे द्वितावभास इव भ्रमात्मकः । एवञ्चोक्तम्—

सहोपलम्भनियमादभेदो नीलतद्धियोः ।
भेदश्च भ्रान्तिविज्ञानैर्दृश्यतेन्दाविवाद्वये ॥ इति ।

तस्माद् बुद्धिरेवानादिवासनावशादनेकाकारा अवभासत इति । ततश्च प्रागुक्तभावनाभ्यासबलात् निखिलवासनोच्छेदविगलितविविधविषयाकारोपप्लवविशुद्धविज्ञानोदयो महोदय इति ।

रूप - विज्ञान - वेदना - संस्कार संज्ञाख्यपञ्चस्कन्धात्मकं सर्वं बाह्याभ्यन्तरं तत्वं दुःखं दुःखायतनं दुःखसाधनञ्चेति विभाव्य तन्निरोधोपायं तत्वज्ञानं साधयेत् । एवञ्च दुःख - समुदय - निरोध - मार्गाश्चत्वार एव सुगता-

भिमता पदार्थाः। तत्र दुःखं प्रसिद्धमेव बाधनापीडापरपर्यायम्। समुदयो दुःखकारणम्। प्रत्ययोपनिबन्धनहेतुनिबन्धनभेदेन द्विविधस्य दुःखस्य निवृत्तिः निरोधः। तन्निरोधोपायश्च मार्गः। स च तत्त्वज्ञानमेव, तच्च प्रागुक्तसर्वशून्यत्वभावनाबलात् एव उत्पद्यते, तदनन्तरं विमलज्ञानोदय एवापवर्गः इति सूत्रस्यान्तं पृच्छतां अन्तेवासिनां "भवन्तः सूत्रस्यान्तं पृष्टवन्तः सौत्रान्तिका भवन्त्विति भगवता बुद्धेन अन्वर्थसंज्ञाविधानात् सौत्रान्तिका इति प्रसिद्धिरभूत्। सौत्रान्तिकास्तु प्रमाणाभावात् बाह्यं वस्तुजातं नास्तीति पूर्वोक्तं मतं नाद्रियन्ते। न च सहोपलम्भनियमस्तत्र प्रमाणमिति वाच्यम्। वेद्यवेदकयोरभेदसाधकस्य तस्य अप्रयोजकत्वेन सन्दिग्धविपक्षव्यावृत्तिकत्वात्। ज्ञानस्वरूपोऽपि नीलाद्याकारः भ्रान्त्या बहिर्वदवभासत इत्यप्ययुक्तम्। बाह्यार्थाभावे तदनुत्पत्तिराहित्येन बहिर्वदित्युपमानोक्तेरयुक्तत्वात्। नहि चैत्रो वन्ध्यापुत्रवदिति कश्चित् प्रेक्षावानाचक्षीत। भेदप्रतिभासस्य भ्रान्तत्वे अभेदप्रतिभासस्य प्रामाण्यम्, तत्प्रामाण्ये च भेदप्रतिभासस्य भ्रान्तत्वमित्यन्योन्याश्रयाच्च। न च ज्ञानातिरिक्तकालस्यार्थस्य ग्राह्यत्वमयुक्तमिति वक्तव्यम्। इन्द्रियसंनिकृष्टस्य विषयस्य उत्पाद्ये ज्ञाने स्वाकारसमर्पकतया समर्पितेनाकारेण अर्थस्यानुमेयतोपपत्तेः। तथाहि—ये यस्मिन् सत्यपि कादाचित्कास्ते तदतिरिक्तसापेक्षाः विवक्षुपुरुषान्तरसापेक्षा विवक्षुमद्वचनप्रतिभासादिवत्, विवादास्पदाश्चेते प्रवृत्तिप्रत्यया आलयविज्ञाने सत्यपि कदाचिदेव नीलाद्युल्लेखिन इति। तस्मादालयविज्ञानसन्तानभिन्नः कादाचित्कप्रवृत्तिहेतुर्बाह्योऽर्थो ग्राह्य एव, न वासनाकादाचित्कत्वहेतुक इति संक्षेपः।

अपरे बाह्येषु गन्धादिषु आन्तरेषु च पञ्चस्कन्धेषु विद्यमानेष्वपि तत्रानास्थामुत्पादयितुं सर्वं शून्यमिति प्राथमिकविनेयान् उपदिश्य आचार्यो द्वितीयान् विज्ञानमात्रग्रहाभिनिविष्टान् विज्ञानमेवैकं तत्त्वम्, बाह्यन्तु शून्यमेवेत्याख्याय तृतीयानुभयं सत्यमित्यङ्गीकुर्वतो विज्ञेयमनुमेयमिति विरुद्धां भाषामुपवर्णयामासेति—वर्णयन्तः वैभाषिकाख्यया विख्याता बभूवुः। इयं हि वैभाषिकाणां परिभाषा—सौत्रान्तिकमतेन अर्थस्यानुमेयत्वे कस्यचिदपि प्रात्यक्षिकस्यार्थस्याभावेन व्याप्तिग्रहासम्भवात् अनुमानप्रवृत्त्यनुपपत्तिः, सार्वजनीनानुभवविरोधश्च। स चार्थो ग्राह्याध्यवसायभेदात् द्विविधः। तत्र ग्रहणं निर्विकल्पकं प्रमाणं कल्पनापोढत्वात्। अध्यवसायस्तु सविकल्पकाख्यो न प्रमाणं कल्पनात्मकत्वात्। अत एवोक्तम्—

कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम् ।
विकल्पो वस्तुनिर्भासादसम्वादादुपप्लवः ॥
ग्राह्यं वस्तु प्रमाणं हि ग्रहणं यदितोऽन्यथा ।
न तद्वस्तु न तन्मानं शब्दलिङ्गेन्द्रियादिजम् ॥
देशना लोकनाथानां सत्त्वाशयवशानुगाः ।
भिद्यन्ते बहुधा लोके उपायैर्बहुभिः पुनः ॥
गम्भीरोत्तानभेदेन क्वचिच्चोभयलक्षणा ।
भिन्ना हि देशनाऽभिन्ना शून्यताद्वयलक्षणा ॥ इति

बोधिसत्त्वविवरणोक्तवाक्यजातैरन्तेवासिनां बुद्धिवैलक्षण्येन देशनानां भेदसम्भवेऽपि शून्यताद्वयत्व एव आचार्योपदेशतात्पर्यं सिध्यति । अत एव विवेकविलासे सौगत मततत्त्वमित्थमभ्यधायि —

बौद्धानां सुगतो देवः विश्वं च क्षणभङ्गुरम् ।
आर्यसत्याख्यया तत्त्वचतुष्टयमिदं क्रमात् ॥
दुःखमायतनञ्चैव ततस्समुदयो मतः ।
मार्गश्चेत्यस्य च व्याख्या क्रमेण श्रूयतामतः ॥
दुःखं संसारिणः स्कन्धाः ते च पञ्च प्रकीर्तिताः ।
विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च ॥
पञ्चेन्द्रियाणि शब्दाद्याः विषयाः पञ्च मानसम् ।
धर्मायतनमेतानि द्वादशायतनानि तु ॥
रागादीनां गणो यस्मात् समुदेति नृणां हृदि ।
आत्मात्मीयस्वभावाख्यः स स्यात्समुदयः खलु ॥
क्षणिकास्सर्वसंस्काराः इति या वासना स्थिरा ।
स मार्ग इति विज्ञेयः स च मोक्षोऽभिधीयते ॥
प्रत्यक्षमनुमानञ्च प्रमाणद्वितयन्तथा ।
चतुष्प्रस्थानिका बौद्धाः ख्याता वैभाषिकादयः ॥
अर्थो ज्ञानान्वितो वैभाषिकेण बहुमन्यते ।
सौत्रान्तिकेन प्रत्यक्षग्राह्योऽर्थो न बहिर्मतः ॥

आकारसहिता बुद्धिर्योगाचारस्य सम्मता ।
केवलां संविदं स्वस्थां मन्यन्ते मध्यमाः पुनः ॥

रागादिज्ञानसन्तानवासनोच्छेदसम्भवा ।
चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्तिता ॥ इति

यद्यपि सौगतानां देहाद्यतिरिक्तः पञ्चस्कन्धातिरिक्तो वा आत्मा नास्तीत्येवोपलब्ध-तद्ग्रन्थेभ्यः प्रतीतेस्सर्वेषां तथैव विश्वासः, तथापि सम्मितीयाः वज्जिपुत्तकाश्च पुद्गलवादिनो बौद्धाः शरीराद्यतिरिक्तस्य नित्यस्य आत्मनस्साधका अप्यासन्निति इतिहासदृष्ट्या स्फुटमुन्नीयते । वज्जिपुत्तकाः मूलसङ्घात् पुरैव भेदमापन्ना इति तेषां प्राचीनत्वे न कोऽपि सन्देहः । संयुत्तनिकायाख्ये (25) सुत्तपिटकान्तर्गत-ग्रन्थविशेषे भारहारसूत्राभिधं किमपि सूत्रमुपलभ्यते, भार–तद्धारक–तदुपहण–तत्यागरूप-वस्तुचतुष्टयं साधु प्रतिपादितम् । तत्र भारस्य पञ्चस्कन्धात्मकतया व्याख्या-तत्वात् तद्धारकस्य पुद्गलत्वं, स्कन्धाद्यतिरिक्तत्वञ्चेति व्यक्तं प्रतिभासते, तृष्णैव च भारग्रहणम्, उपरमात्मा तृष्णाच्छेद एव तत्यागः । बुद्धघोष–वसुबन्धु–चन्द्रकीर्ति–यशोमित्रादिभिः सूत्रस्यान्यथा व्याख्यातत्वेऽपि स्कन्धाद्यतिरिक्तात्मसिद्धवेवास्य तात्पर्यमिति उद्योतकरकृतोक्तसूत्रव्याख्यानदर्शनादपि (न्यायवार्तिक pp. 339-342-113 B.I.S.) निर्धार्यत इति आधुनिकानामाशयः ।

एवं बौद्धानां आत्मवादस्य नितरां विद्विष्टत्वात् आत्मतत्वविवेके उदयनाचार्यैः तेषां आत्मविषयकविप्रतिपत्तीनां समुद्धरणं विमर्दनञ्च कृतम् । उदयनाचार्येणेव तत्पूर्वमपि काश्मीरकमहामाहेश्वराचार्येण सोमानन्दपादान्तेवासिना अभिनवगुप्तपादगुरुणा उत्पलदेवेन ईश्वरसिद्धिः, अजडप्रमातृसिद्धिरिति च ग्रन्थद्वयं विनिर्मितम् । अनन्तरं श्रीभाष्यकृद्रामानुजाचार्यस्य परमगुरुणा यामुनाचार्येणापि स्वनिबद्धे सिद्धित्रये चिदात्मन ईश्वरस्य साधनं कृतम् । अर्वाचीननैयायिकेषु गङ्गेशोपाध्यायः ईश्वरसाधकानुमानप्रणाली ईश्वरवादे स्फुटं निबबन्ध, सा च सर्वथोदयनकृतग्रन्थानुसारिणी क्वचिद्भाषायामपि ।

अजडप्रमातृसिद्धौ पुनरुत्पलदेवेन त्रिकदर्शनमतमनुसृतम् । तत्रात्मनो विशुद्धसंविदात्मकत्वात् स्वभावतः परिच्छेदराहित्यात् परमेश्वरत्वेऽपि परिच्छेददशायां प्राणादीनां प्रमेयाणां अवभासनपूर्वकं प्रमातृत्वेनावस्थामात् लब्धसंकोचजीवभावा-

पत्तिः । प्राणादीनामवभासनञ्च विश्वक्रीडोल्लासननिमित्तमेव, तत्रापि तस्य स्वेच्छयैव-मूलम् । स्वातन्त्र्यापरपर्याया स्वेच्छाऽप्यात्मनः स्वरूपभूता नित्योदिता शक्तिः । तामाश्रित्य स्वतश्शुद्धोऽपि चिदात्मा विश्वलीलामुद्घाटयन् देशकालाद्यात्मकं परिच्छेदं परिगृह्य मितशक्तिरणुभूतो जीवत्वमापन्नः । स्वरूपतश्च चिदात्मा प्राणादिभिः प्रमेयजातैरनिरुद्धत्वात् विश्वनिर्भरितात्मकः, अत एव पूर्णस्स्वतन्त्रश्च । द्विविधोऽप्ययमात्मा प्रकाशात्मकत्वात् भावाभावानां सर्वेषामेवार्थज्ञानानां पर्यन्तभूमिः । परस्मादात्मनो जीवस्य कोऽपि भेदो नास्ति । उभयोरपि पौर्वापर्यानुसन्धातृत्वेन संविन्मात्रस्फुरणस्यैव स्वरूपत्वात् । अहम्प्रकाशस्य विश्वभेदप्रत्यवमर्शरूपत्वात् स एव सर्वज्ञानानां विश्रामभूमिरिति तस्माद् व्यतिरिक्तस्य जडस्य सत्त्वं न सम्भवति । एक एव परः प्रमाता स्वस्वातन्त्र्येण स्वस्मादभिन्नान् भावान् स्वस्मिन्नेव उद्भासयति विलापयति चेति तस्य स्वात्मस्थितिः कदापि च्युतिं नावहति । विमर्शाभावेन जडत्वप्रसङ्गात् व्यवच्छिन्नप्रकाशग्रहवशात् प्राणपुर्यष्टकप्रमातुः जीवाख्यस्य मितात्मनो वेद्यत्वमेव, न तु पारमार्थिकं प्रमातृत्वम् । तथापि स एव प्राणादिकृतानां संकोचानां अपसारणतः परप्रमात्रात्मक ईश्वरव्यपदेशभाक् प्राणादीनामपि चित्प्रकाशात्मकत्वात् । ईश्वर एव स्वेच्छया पशुभूमिकां गृहीत्वा आणवभागमुपगत इति जीवस्य ईश्वरभावाभेदः । अनवच्छिन्नप्रकाशानन्दमयपूर्णाहन्तास्फुरत्तामय एव ईश्वरावभासः । तस्य निरोधः सङ्कुचितशक्तिकेन जीवेन कदापि न साध्यः । तथा सति जीवस्य स्वसत्तापि विलीयेत, अपरिच्छिन्नस्वशक्तिविकासाऽप्रथनस्यैव जीवत्वात् ।

त्रिकदर्शनविदः स्वातन्त्र्यवादिनः । तत्रायं क्रमः—जडभावानां संविन्निरपेक्षं स्वतन्त्रं सत्त्वं नास्ति । ते च स्वभावतोऽप्रकाशरूपाः प्रकाशात्मकज्ञातुः सम्बन्धादेव सत्तावन्तः । अत एव केवला संविदेव स्वभावस्य उच्छलत्वात् स्वकीयमायाशक्त्युल्लासितविश्ववैचित्र्ये जडत्वेन वेद्यत्वेन वेदकत्वेन च स्वरूपानतिरिक्तापि स्वरूपातिरिक्तेव स्फुरति । इदमेव तस्याः स्वातन्त्र्यम् । तच्च संयोजनवियोजनात्मकम् । एतद्विहाय जडस्य प्रकाशः कदाप्यनुभवपदवीं नारोहति । प्रत्यवमर्शस्येदमेव माहात्म्यं यदनेन स्वात्मन्यभिन्नतया अवतिष्ठमानं विश्वं इदन्तया उद्भास्यते, तथा उद्भास्यमानं तत् पुनः पराहन्तायां विलाप्य तत्राभिन्नं सम्पाद्यते । माया चात्मनः शक्तिः, तस्मादभिन्नापि तस्य स्वरूपगोपनात्मिका क्रीडामयी । तत एवेदं विश्वमद्वयातिमयमाभाति । तत्र चिदात्मनो व्यतिरिक्तं किमपि कारणं न सम्भवति, प्रकाशस्वभावात्तस्मात्तस्य व्यतिरेकेऽप्रकाशमानतया असत्त्वापत्तिप्रसंगात् । अत

एव विश्वाभासनिर्मातृत्वमेव चिदात्मन ईश्वरत्वमिति स्पष्टम् । इयं परा पारमेश्वरी शक्तिरेकैव प्रमातृप्रमाणादिमूतं स्वसंवेदनात्मकं तत्त्वम् । विविधविच्छिन्नज्ञानानां नीलादिप्रतीतीनां संयोजने वियोजने च पूर्वापरादिकोटिद्वैकत्र्यानुसन्धानस्य इयमेव आधारभूता । संविदात्मके पूर्णाहन्तापरामर्शसारे प्रमातरि सर्वे पदार्थाः व्यवस्थिताः । सदा स्वतन्त्रस्य तस्य सर्वत्रैवानुसन्धानात्मकं व्यापकत्वं उपलभ्यते, जडस्य पुनः विमर्शसारानात्मकत्वेन नास्ति स्वातन्त्र्यम्, नापि व्यापित्वम् । संविदोऽभिन्नानामेव भास्यानां भासमानत्वात् विश्वं जगत् संविद्द्वयमयं चित्प्रकृतिकमिति न कोऽपि संशयावकाश इति त्रिकदर्शनवादिनः ।

यामुनाचार्येण तु स्वनिर्मितात्मसिद्धिनिबन्धे विशिष्टाद्वैतसिद्धान्तं शठकोपनाथमुन्यादिभिः परिगृहीतं बोधायनटङ्कद्रमिडाचार्यादिभिस्समुपबृंहितं आश्रित्य आत्मनिरूपणं कृतम् । तत्र चात्मा स्वतस्सिद्धः । विशुद्धेन योगाभ्यासजनितप्रत्यक्षेणैव तस्य प्रकाशनं भवति । आत्मभावः पुनर्बोधोपाधिः । ज्ञानं तु ज्ञातुः स्वरूपप्रयुक्तमेव, अत एवात्मनो नित्यत्वात् तस्यापि नित्यत्वम् । स्वात्मावभासकं तत् संसारे च अपवर्गे च सममेव तिष्ठति । सर्वकरणोपरमदशायामपि चैतन्यस्य सत्त्वं न छिद्यते । तेन चैतन्यं आत्मनस्स्वभावत्वेन व्यपदिश्यमानं शास्त्रेषु दृश्यते । निश्चयसंशयादयः तस्यैव प्रकारभेदाः । आत्मनश्चैतन्यधर्मत्वेऽपि तस्य विवेकात्मकस्फुटप्रकाशरूपस्फुरत्ताभावात् उपपादनार्थं अनुमानानां आप्तवचनानाञ्च संग्रहः क्रियते । परन्तु तस्यापरोक्षज्ञानोदयस्तु योगानुष्ठानपूर्वकनिरोधाभ्यासजन्यसत्त्वोद्रेकसापेक्षः । एवञ्चात्मनस्सिद्धिरनन्यापेक्षेति निर्विवादम् । आत्मनः प्रकारभूतं चैतन्यं अर्थविशेषसंसर्गात् घटज्ञानादिरूपतां प्रतिपद्यते । घटज्ञानादयश्चैतन्यस्य दशाभेदाश्चेतयितुरात्मनो धर्मविशेषत्वात् तस्यापरोक्षा इति वर्णितम् ।

परं पूर्वोक्तेषु सिद्धान्तेषु बौद्धसिद्धान्तस्य खण्डने बौद्धन्यायानां दलने च तादृशी प्रक्रिया न दृश्यते यादृशी उदयनाचार्येण आत्मतत्त्वविवेके समादृता । कुसुमाञ्जलिप्रकरणे तावत् चार्वाकादिनिरीश्वरवादिनां मतविमर्शनं कृतम्, यस्योपासनया जीवात्मा निःश्रेयसमधिगच्छति स भगवानीश्वरः परमात्मपदाभिधेयः सविस्तरं व्यवस्थापितः । आत्मतत्त्वविवेके तावत् न्यायसरणिमनुसृत्यैव आत्मस्थापनं कृतम् । न्यायनये एवं वैशेषिकनये च आत्मना नित्यत्वम्, विभुत्वम्, ज्ञानेच्छादिविशेषगुणसमवायित्वञ्च सिद्धम् । तत्र विशेषगुणानां तु अदृष्टवशादेव समवायः, स्वरूप-

ज्ञानकृतात् तन्नाशात् तेषां सम्यगुच्छेदे च आत्मनः स्वभावस्थितिरेव मोक्षः। सुख दुःखयोरपि विशेषगुणान्तःपातित्वात् मोक्षे तयोरभाव एव। ज्ञान धुद्‌यासम्भवेन नित्यज्ञानाद्यनभ्युपगमेन नैयायिकानामात्मा ज्ञानादिसमवाययोग्यत्वात् स्वभावतोऽजडोऽपि जडकल्प एव। स तु नित्योऽपि विभुरपि नित्यज्ञानादिमतः परमेश्वरात् विलक्षण इति स्वीक्रियते।

तत्र नैरात्म्यवादिनां चतुर्विधबौद्धानां नैयायिकाभिमतदेहादिसंघातातिरिक्तस्थिरात्मसाधने क्षणभङ्गः, बाह्यार्थभङ्गः, गुणगुणिभेदभङ्गः, अनुपलम्भश्चेति विप्रतिपत्तिचतुष्टयमेव बाधकं भवति। तथा च श्रुतिसमधिगतेऽप्यात्मनि अस्थिरतानिवृत्तये आन्वीक्षिकीप्रतिपाद्यन्यायमयं गावश्यकता। न्ययेन अवधारणञ्च उक्तविध स्यात्मनो बाधकनिराकरणं विना नाङ्गं धारयतीति तन्निरासायैव प्रथमं उदयनाचार्यैः आत्मतत्वविवेकाख्ये ग्रन्थे परिकरो बद्धः।

अत्र बौद्धानामभिप्रायः—क्षणभङ्गे नित्यत्वभङ्गः, बाह्यार्थभङ्गे गुणगुणिभेदभङ्गे च ज्ञानभिन्नस्यात्मनोऽसिद्धिः, अनुपलम्भे च स्वरूपासिद्धिरिति। उदयनाचार्यश्च बौद्धोक्तास्सर्वाः विप्रतिपत्तीः आत्मतत्वविवेके खण्डयति।

आत्मतत्वविवेकः :—

बौद्धाधिकार-बौद्धधिक्कारापरनामायं ग्रन्थः कलकत्तायाम्, (B.I.S. 170) वाराणस्याम् (Ch.S S 64, 84) च मुद्रितः। गुरुगरिम्णा लेखप्रौढया च महनीयोऽप्ययं ग्रन्थः पठनपाठनादिसम्प्रदायरहितः न तादृशीं प्रसिद्धिं लेभे यादृशी युज्यते, विषयस्य दुरवगाहता, इदानीं बौद्धपण्डितानामभावात् तन्मतालोचने च आग्रहाभावश्च कारणम्।

ग्रन्थेऽस्मिन् क्षणभङ्गनिरासः, बाह्यार्थभङ्ग इति द्वितीयविप्रतिपत्तिनिरासः, गुणगुणिभेदभङ्गोवेति तृतीयविप्रतिपत्तिनिरासः, अनुपलम्भो वेति चतुर्थविप्रतिपत्ति निरासश्चेति चत्वारः परिच्छेदाः दृश्यन्ते। तत्र प्रथमपरिच्छेदे सत्वेन क्षणिकत्वनिराकरणम्, विनाशित्वेन क्षणिकत्वसाधननिराकरणम्, आत्मनस्स्थैर्यसाधनम्, अपोहखण्डनम्, सौत्रान्तिकमतनिराकरणम्, जातिबाधकनिराकरणनित्यवान्तराणि षट् प्रकरणानि विद्यन्ते। बाह्यार्थभङ्गो वेति द्वितीयपरिच्छेदे ज्ञानज्ञेययोरभेद

खण्डनम्, चित्रज्ञानखण्डनम्, विश्वशून्यताखण्डनम्, बाह्यार्थसाधनम्, अवयविसाधनम्, परमाणुसाधनम्, विज्ञाननिराकरणमित्यवान्तरप्रकरणानि विद्यन्ते। गुणगुणभेदभङ्ग इति तृतीयपरिच्छेदे आत्मसाधनम्, गुणगुणिभेदखण्डनमिति प्रकरणद्वयं विद्यते। अनुपलम्भनामकचतुर्थपरिच्छेदे स्थिरात्मसाधनम्, विज्ञानात्मवादखण्डनम्, आत्मधर्माः, आम्नायप्रामाण्यम्, ईश्वरसिद्धिः, सर्वज्ञसिद्धिरित्यवान्तरप्रकरणानि विद्यन्ते।

तत्र क्षणभङ्गनिरासप्रधाने प्रथमपरिच्छेदे सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गादेः भेदसाधकत्वाभावात् यत् सत् तत् क्षणिकमिति प्रतिबन्धासिध्या क्षणिकत्वनिराकरणम्, क्रमयौगपद्याभ्यां स्थिरे बीजे अङ्कुरोत्पादासम्भवमूलकक्षणिकत्वस्य खण्डनम्, सहकारिसमवधानासमवधानाभ्यामेव बीजात् अङ्कुरोत्पादसम्भवे क्षणिकेऽपि कुर्वद्रूपदृष्टान्तेन तत्कल्पना व्यर्थेत्याशयेन भावानामुत्पत्तिविनाशस्वभावत्वनिरसनम्, सव्यतिरेकविवरणं क्षणिकत्वसत्त्वयोर्व्यतिरेकव्याप्त्यसिध्या क्षणिकत्वखण्डनम्, बौद्धाभिप्रेतायाः विनाशस्वभावतायाः खण्डनम्, प्रत्यभिज्ञानेन क्षणिकत्वानुपपत्त्या च स्थिरात्मसाधनम्, अतद्व्यावृत्तिरूपेण अन्यापोहेनैव अनुगतबुद्धिसम्भवे विधिरूपातिरिक्तजातिपदार्थो नावश्यक इति पूर्वपक्षिमतखण्डनम्, शब्दलिङ्गविकल्पानामलीकविषयत्वखण्डनम्, बाह्यार्थत्वादिनो विज्ञानाकारवादिनः सौत्रान्तिकस्य निरसनम्, जातिबाधकनिरासः, अपोहवादखण्डनम्, आत्मनि क्षणभङ्गरूपबाधकनिराकरणञ्चेतीमे विषया वर्णिताः।

बाह्यार्थभङ्ग वेति योगाचारीयद्वितीयविप्रतिपत्तिनिरासके द्वितीयपरिच्छेदे ग्राह्यग्राहकतादात्म्यखण्डनम्, काल्पनिकभेदनिरासपूर्वकं तयोर्वास्तविकभेदसाधनम्, चित्राकारविज्ञानवादिरत्नकीर्तिमतनिराकरणम्, आश्चर्यरूपत्वात् चतुष्शिखरशून्यं चित्रमिति चित्राद्वैतमतस्य प्रतिबन्ध्या खण्डनम्, प्रसङ्गात् विश्वस्य विचारासहत्वात् शून्यत्ववादिमाध्यमिकमतखण्डनम्, बाह्यत्वस्य ग्राह्यत्वस्थापनम्, विश्वशून्यतासाधकप्रतिज्ञाहेतुदृष्टान्तानां खण्डनम्, वस्तुनिषेधभेदनिराकरणपूर्वकं स्वरूपभेद–इतरेतराभाव–वैधर्म्याख्यत्रिविधभेदानां लक्षणकथनम्, विरुद्धधर्माध्यासरूपपञ्चविधावयविबाधकयुक्तीनां खण्डनम्, चित्रावयविबाधकयुक्तिखण्डनम्, परमाणुबाधकनिरासपूर्वकं परमाणुस्थापनम्, परमाणुनिवृत्तिमूलकसर्वविलोपात् शून्यत्वमिति माध्यमिकमत-

निरासः, अवयविभिन्नस्थूलद्रव्यनिराकरणम्, निरवयवत्वानुमानखण्डनपूर्वकं निरवयव विज्ञानवादिमतखण्डनञ्चेतीमे विषया विवेचिताः।

गुणगुणिनोरभेदात् क्षणिकज्ञानातिरिक्त आत्मा नास्तीत्यभिप्रायेण गुणगुणिभेदभङ्गो वेतितृतीयविप्रतिपत्तिनिरासके तृतीयपरिच्छेदे प्रतिसन्धानस्यात्मविषयत्वस्थापनपूर्वकं गुणगुणिनोस्सहोपलम्भनियमदूषणम्, नैरात्म्यवादखण्डनञ्चेतीमे विषया वर्णिताः।

शशशृङ्गवदनुपलम्भात् आत्मसत्त्वाभाव इति मन्वानानां बौद्धानामनुपलम्भो वेति चतुर्थविप्रतिपत्तिनिरासपरे चतुर्थपरिच्छेदे अनुपलब्धिप्रामाण्यनिरासातिदेशेन तुरीयविप्रतिपत्तिनिरासः, प्रत्यक्षेणात्मसद्भावसाधनम्, अहम्प्रत्ययस्य वासनामात्रजन्यत्वेन अवस्तुकत्वमित्याक्षेपस्य खण्डनम्, अहम्प्रत्ययस्य सवस्तुकत्वसाधनम्, प्रतिसन्धानात्मकानुमानेन (दर्शनस्पर्शनाभ्यां एकार्थग्रहणादित्यादिना गौतमोक्तं योऽहं घटमद्राक्षम्, सोऽहं स्पृशामीत्याद्यनुसन्धानमेव स्थिरैककर्त्रात्मसाधकमित्यर्थः। प्रतिसन्धानमनुसन्धानम्। तथा च प्रयोगः—अहमितिप्रत्ययालम्बनं स्थिरं ताद्रूप्येण प्रत्यभिज्ञायमानत्वात् घटादिवत्) स्थिरात्मसाधनम्, आलयभेदात्प्रतिसन्धानमित्यस्य खण्डनम्, स्मृत्यन्यथानुपपत्त्या अनुभवितृस्मर्त्रोरभेदसाधनम्, भूतेन्द्रियात्मवादखण्डनम्, परलोकफलोपभोक्त्रनादिविभ्वात्मसाधनम्, आम्नायप्रामाण्यस्थापनम्, आम्नायप्रामाण्यादात्मन उपादेयता, प्रपञ्चमिथ्यात्वादिदोषैराम्नायप्रामाण्यासम्भवस्य निरासः, ईश्वरसाधकानुमानदोषोद्धारः, ईश्वरे सार्वज्ञ्यसाधनम् ईश्वरे वेदवक्तृत्वस्थापनम्, वेदे महाजनपरिगृहीतत्वस्थापनम्, परिग्रहशब्दार्थकथनपूर्वकं सौगतागमे महाजनपरिगृहीतत्वाभावोपपादनम्, वेदसम्प्रदायस्य नित्यत्वस्थापनम्, बौद्धागमहेयत्वे युक्तिः, दुःखनिवृत्तेः परमपुरुषार्थत्वसाधनपूर्वकं नित्यसुखात्मकमुक्तिवादखण्डनम्, आत्मस्वभावकथनपूर्वकं आत्मोपासनोपसंहारः, न्यायशास्त्रस्यैवापवर्गमार्गत्वस्थापनमित्येते विषया वर्णिताः।

ग्रन्थेऽस्मिन्नधिकतया ज्ञानश्रीमतमेव खण्डितं दृश्यते। बहुत्र प्रतिबन्दीमुखेनैव प्रतिवादी ज्ञानश्रीमित्रः खण्डितः। क्वचित् युक्तिप्रतिपादने प्रतिबन्दिता, कुत्रचित् प्रतिवादीयवाक्यानुवादपूर्वकं तेषु वाक्येषु पदान्तरनिक्षेपपूर्वकं स्वीयसिद्धान्तप्रतिपादनपरा प्रतिबन्दिता च स्वीकृता—

आत्मतत्त्वविवेके (p. 186 C.S.S. 84) अपोहखण्डनावसरे रत्नकीर्तिमत-खण्डनप्रसङ्गे ज्ञानश्रीरत्नकीर्त्योर्गुरुशिष्यसम्बन्धं जानता उदयनाचार्येण "आगमश्च न किञ्चिद्वदतीति स्वयैव ग्राहितश्शिष्यः। न चैवं चेतनो ग्राहयितुमपि शक्यते, स्ववाग्विरोधस्योद्भटत्वात् तथाहि—

शब्दस्य कस्यचिदपि वस्तुनि मानसिद्धा
बाधाविधिव्यवहृतिः क्वचिदस्ति नो वा।
अस्त्येव चेत् कथमियन्ति न दूषणानि
नास्त्येव चेत् स्ववचनप्रतिरोधसिद्धिः॥ इति पद्यं

(p. 186 BSS. 84)

धर्मस्य कस्यचिदवस्तुनि मानसिद्धा
बाधाविधिव्यवहृतिः क्वचिदस्ति नो वा।
क्वाप्यस्ति चेत् कथमियन्ति न दूषणानि
नास्त्येव चेत् स्ववचनप्रतिरोधसिद्धिः॥

(ज्ञानश्रीनिबन्धावली p. 89 क्षणभङ्गाध्याये)

इति रत्नकीर्तिपद्यस्य प्रतिबन्दिरूपम्। ज्ञानश्रीमित्रस्य "न खलु शास्त्रमनुभवं परिभूय भवितुं क्षममिति (p. 203 अपोहप्रकरणे) वाक्यस्य प्रतिबन्दितया नह्यनुभवमवधूय भवितुं क्षमम् (शास्त्रम्) इति वाक्यमुक्त्वा खण्डयति। एवं ये पुनरगोऽपोहे गोशब्दसंकेतविधावन्योन्याश्रयणं ग्राम्यजनबन्धीकरणमुद्भावयन्ति तेऽपि (अपोहप्रकरणे p. 203) इति वाक्यस्य प्रतिबन्दिवाक्यम्-इतरेतराश्रयत्वमुक्तम्। सङ्केते सञ्चार्य यत् परिहृतं ज्ञानश्रिया तदेतत् ग्राम्यजनबन्धीकरणम् (आत्मतत्त्वविवेके p. 119) इति दृश्यते। एवं यज्ज्ञानं यत्र भावाभावसाधारणप्रतिभासं न तेन तस्य विषयवत्त्वम्, यथा गोज्ञानस्याश्वेन (अपोहप्रकरणे p. 212) इति वाक्यं 'अस्तु निपुणम्मन्यो विकल्पमेव पक्षयति स्म यज्ज्ञानं यद्भावाभावसाधारणप्रतिभासं न तेन तस्य विषयित्वम्, यथा गोज्ञानस्याश्वेनेत्यादि, तद्यदित्यादिना अनूद्य आत्मतत्त्वविवेके (p. 129) खण्डितम्। "तदयमाकारस्य बाह्यगदव्यवनिनो भेदसाधनविधिस्तपनीयमपनीय वाससि ग्रन्थिकरणवृत्तान्तमनुहरति (अद्वैतबिन्दुप्रकरणे p. 356)। अस्य वाक्यस्य प्रतिद्वन्द्विवाक्यन्तु—अन्यथा तपनीयमपनीय-

वाससि ग्रन्थिकर्तारमुपहससि स्वयञ्च कनकमुपादाय गगनाञ्चले ग्रन्थिं करोषि (आत्मतत्वविवेके p, 211) इति दृश्यते । एवं

नाकारभेदमवधूय धियोऽस्ति वृत्तिः
तद्बाधने बलिनि मध्यनये जयश्रीः ।
नोचेदनिन्द्यमिदमद्वयमेव चित्रं
चेतो निराकृतिमतस्य तु कोऽवकाशः ॥

(साकारसिद्धौ p. 386)

इतीदं पद्यं पदान्तरप्रक्षेपपूर्वकम्—

न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिः
तद्बाधने बलिनि वेदनये जयश्रीः ।
नो चेदनिन्द्यमिदमद्वयमेव विश्वम्
तथ्यं तथागतमतस्य तु कोऽवकाशः ॥ इत्युक्त्वा

आत्मतत्वविवेके (p. 230) बौद्धमतं खण्डितं विद्यते ।

ग्रन्थेऽस्मिन् बहवो न्यायाश्च तत्र तत्र निर्दिष्टाः । यो ध्रुवाणि परित्यज्याध्रुवाणि निषेवते । ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥ (p. 36) कफोणि गुडायितन्यायः (p. 90), शतं शिरश्छेदेऽपि न ददाति विंशतिपञ्चकन्तु प्रयच्छति (p. 108), तृणकुब्जीकरणन्यायः (p. 112), सुभगाभिक्षुकन्यायः (p. 195), उष्ट्रलगुडन्यायः (p. 197), भीतैः क्षेत्रनिलयन्यायः (p. 197), क्षीरं विहाय रुचिररोचकग्रस्तस्य सौवीर इति न्यायः (p. 201) रामायणं मिथ्येति वदन् बालवानर इति न्यायः (p. 220) वेदान्तसिद्धान्तचिन्तायां नास्तिकानामनधिकारनिरूपणावसरे आर्द्रकवणिजो वहित्रचिन्तान्यायः (p, 223), बौद्धीयप्रतिज्ञा स्वरूपासम्भवनिरूपणावसरे स्वविषमूर्छिता भुजङ्गी आत्मानमेव दशतीति न्यायः (p. 238), चौरापराधेन माण्डव्यनिग्रहन्यायः (p. 250), सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामत इति न्यायः (p. 259), यो येन संयुज्यते विभज्यते वा स तत्कार्यद्रव्येणापि (p. 262) वधूमाषमापवृत्तान्तन्यायः (p. 309), गारुडवदनुष्ठानन्यायः (p. 376), विडालव्रतन्यायः (p. 418), अन्यथाकरणे चास्य बहुभ्यस्त्यान्निवारणमिति न्यायः (p. 421), कण्ठचामीकरन्यायः (p. 442),

अलाभे मत्तकाशिन्या दृष्टा तिर्यक्षु कामितेति न्यायः (p. 445), लक्ष्येण धनुषा योगो वारणस्यासम्मतन्यायः (p. 451) इति न्याया निर्दिष्टा विद्यन्ते ।

धर्मकीर्तिमतं (pp. 117, 431) दिङ्नागमतं (117), तार्किकगर्ववाहशब्देन केचन बौद्धाः (p. 382), उत्तरगतीय तन्तुवाय-शरभ-काणाचार्य-शौण्डिक-सुभूति-प्रज्ञाकरगुप्ताख्याः बौद्धाः (p. 431), ज्ञानेन्द्रभिक्षुः जगदिन्दुरिति द्वौ बौद्धौ (p. 430), सामान्यश्रमणक-दीपंकरसुषिरदर्शिबालिशशब्दैः केचन बौद्धाः (p. 431) निपुणम्मन्यशब्देन (p. 129) क्वचित् नाम निर्देशपूर्वकं च ज्ञानश्रीमित्रः (p.p. 117, 156, 129, 210), रत्नकीर्तिश्च (p. 202) निर्दिष्टाः खण्डिताश्च । तात्पर्याचार्यशब्देन वाचस्पतिमिश्रः (p. 316) प्रमाणीकृतः ।

अस्य रचयिता तर्कधुरन्धरः न्यायप्रतिष्ठापनगौरवान्वितः मैथिलः आत्मानं बहुतरपरतन्त्रप्रान्तरध्वान्तभीतिस्तिमितपथिकरक्षासार्थवाहं निर्दिशन् कुसुमाञ्जल्या-दिकर्ता उदयनाचार्यः । नैयायिकोऽपि वेदान्तपक्षपातीति ज्ञायते । तत्रेमानि कारणानि । बाह्यार्थभङ्गवादे (p. 230) पद्यमिदं दृश्यते—

न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिः
तद्बाधके बलिनि वेदनये जयश्रीः ।
नो चेदनित्यमिदमीदृशमेव विश्वम्
तथ्यं तथागतमतस्य तु कोऽवकाशः ॥ इति ।

तत्र ग्राह्यभेदं—घटादिबाह्यार्थं तिरस्कृत्य घटादिरूपाकाराभिन्नरूपेण ज्ञानस्य वृत्तिः-सम्बन्धः कापि नास्ति । घटादिबहिरर्थबाधके अद्वैतब्रह्मरूपाधिष्ठान-साक्षात्कारे जाते तु, बलिनि—सर्वेभ्यो द्वैतवादिमतेभ्यो बलवति वेदनये-वेदान्त-दर्शने-(अनिर्वचनीयसिद्धान्तनये), जयश्रीः-जयोत्कर्षकाष्ठा, तस्मात् बौद्धमतापेक्षया तार्किकमते जयः, तदपेक्षया सांख्यादिमते आत्मनोऽसङ्गत्वादिस्वीकारात्, तदपेक्षया वेदान्तिमते द्वैतमिथ्यात्वादिस्वीकारात, अतो जयोत्कर्षकाष्ठा । यदि तु निष्कामकर्मानुष्ठानात चित्तं न शुद्धं तदा श्रवणादौ सत्यपि तादृशसाक्षात्का-राभावेन विश्वमनित्यतया प्रतीयमानमपि तथ्यमेव व्यावहारिकसत्यत्वात् , तत्रा-पाततः तार्किकादिभिः विश्वं ब्रह्मवत् परमार्थसत्यमिति वक्तुं शक्यम् , तथागतस्य बौद्धस्य मतस्य ज्ञानात् अभिन्नं जगदलीकमित्येवंरूपस्य कोऽवकाश इति गौड-ब्रह्मानन्दसरस्वत्या लघुचन्द्रिकायां ( p. p. 226-230 N. S. Press Edn )

व्याख्यातम् । किञ्चोक्तवाक्यं बौद्धमतनिराकरणपरम्, न त्वद्वैतमतनिराकरणपरम्, अद्वैतमतस्य सर्वमतश्रेष्ठतया बैद्धाधिकार एवोक्तत्वात्...... वेदान्तदर्शने तदन्यसर्वदर्शनेभ्य उत्कर्ष आचार्याभिप्रेत" इति प्रथमपरिच्छेदे मिथ्यात्वमिथ्यात्वनिरुक्ति विचारान्ते निर्दिष्टम् । एवं "अस्तु तर्हि शून्यतैव परमं निर्वाणमिति चेन्नेत्यारभ्य शून्यवादखण्डनावसरे (p. 223) आत्मतत्वविवेके" तदास्तां तावत् किमार्द्रकवणिजो वहित्रचिन्तयेति । तस्मादनुभवव्यवस्थितौ अनात्मापि स्फुरतीत्यवर्जनीयमिति, प्रविश वाऽनिर्वचनीयख्यातिकुक्षिम्, तिष्ठ वा मतिकर्दममपहाय न्यायानुसारेण नीलादीनां पारमार्थिकत्वे" इति ग्रन्थस्यापि यथा शूर्पादिपात्रे आर्द्रकाणि स्थापयित्वा विक्रीणतो वणिजः वहित्रमनुपयुक्तम्, प्रत्युत कार्यविरोधि च, द्वैतखण्डनयुक्तीनां मिथ्यात्वग्राहकमानस्य च तत्र पुरस्कारात् तथापि वहित्रमिव वेदान्तदर्शनं पुरुषधौरेयस्य प्रयोजनं साधयत्येवेति वेदान्तदर्शने तदन्यसर्वदर्शनेभ्य उत्कर्ष उदयनाचार्याभिप्रेत इति च गौडब्रह्मानन्दसरस्वत्या पूर्वोक्तस्थले व्याख्यातम् । एवञ्च ब्रह्मानन्दसरस्वतीमतेन उदयनाचार्यस्य वेदान्तदर्शने महती श्रद्धा इति प्रतीयते । एवं विश्वशून्यतानिराकरणप्रकरणे (p. 220) आत्मतत्वविवेके तत्वोपप्लववादी विचारसागरं लङ्घयित्वा सत्वेन असत्वेन वा प्रपञ्चस्य तत्वनिरूपणं कृतवतां विदुषां वचांसि श्रुत्वा स्वयमपि तत्वनिरूपणाय विचारे प्रवृत्तः तत्करणाशक्तः विचारासहमेव विश्वतत्वोपप्लवकाष्ठा इति वदन् समुद्रलङ्घनादिविषयकहनूमत्पराक्रमवचनं श्रुत्वा स्वयमपि तत्कर्तुमुपक्रम्य असमर्थत्वात् महार्णवे पतित्वा अपार एवायं सागरः, हनूमतस्तल्लङ्घनेन अपारप्राप्त्यादिकथया रामायणं मिथ्यैवेति वदता बालवानरेण तुल्य इत्यर्थकं वाक्यम् 'सोऽयं पवनतनयवार्तामुपश्रुत्य स्पर्धया बालवानरः कियदपि दूरमुपप्लुत्य महार्णवे पतितः प्राह—अपार एवायमकूपारः, मिथ्या रामायणमिति ।' वेदान्तिप्रोक्तमनिर्वचनीयसिद्धान्तस्य वास्तविकं तत्त्वमज्ञात्वा वेदान्तिनेव बौद्धेनोक्तः जगत् स्वयं ज्ञातुं परं प्रति निर्वक्तुं वा अशक्यमित्यनिर्वचनीयतावादोऽपि निष्प्रयोजन इति खण्डयति । अनेनापि सन्दर्भेण पवनतनय—वेदान्तिसादृश्यवर्णनञ्च उदयनाचार्यस्य वेदान्तिसिद्धान्ते महतीं श्रद्धां गौरवबुद्धिञ्चाविर्भावयति । उदयनचार्यमधिकृत्य अन्यविषयाः (pp. 23-24) निर्दिष्टाः ।

प्रसङ्गात् सुलभावबोधाय दर्शनभेदः नास्तिकदर्शनतत्त्वानि आत्मनः स्वरूपञ्च निर्दिश्यन्ते । एतेषां विस्तरस्तु प्रमाणप्रमेयविचारे भविष्यति ।



दर्शनम्
वैदिकम् (आस्तिकम्)
अवैदिकम् (नास्तिकम्)
सांख्य
योग
वैशेषिक
न्याय
पूर्वमीमांसा
वेदान्त
चार्वाक
जैन
बौद्ध
शाङ्कराद्वैतम्
शैवम्
विशिष्टाद्वैतम्
द्वैतम्
शुद्धाद्वैतम्
दिगम्बर
श्वेताम्बर
महायान
हीनयान
वैभाषिक
काश्मीरशैव
(प्रत्यभिज्ञा)
शिवाद्वैत
वीरशैव
शैवसिद्धान्त
निम्बार्क
वल्लभ
सौत्रान्तिक
योगाचार
माध्यमिक
चिदचिद्विष्टाद्वैत
(रामानुज)
शक्तिविशिष्टशिवाद्वैत
(श्रीकण्ठ)
तन्त्राणि
शैवतन्त्र
शाक्ततन्त्र
वज्रयान
बौद्ध
कालामुख
कापालिक
पाशुपत


चार्वाकदर्शने आत्मा—तत्त्वानि च
प्रमाणम्
प्रत्यक्षम्
प्रमाता (आत्मा)
ज्ञानाश्रयो देह:
प्रमेयम्
ईश्वर:
(राजा)
वाद:
भूतचैतन्यवाद:
सङ्घातवाद:
पृथिवी
आप:
तेज:
वायु:
अर्थ:
काम:
जगत्

## जैनदर्शने आत्मा तत्त्वानि च



## बौद्धदर्शने सामान्यतत्त्वानि आत्मा च

- आर्यसत्यम्
  - दुःखम्
  - दुःखसमुदयः
    - अविद्या
    - संस्कारः
    - विज्ञानम्
    - नामरूपे
    - षडायतनम्
    - स्पर्शः
    - वेदना
    - तृष्णा
    - उपादानम्
    - भवः
    - जातिः
    - जरामरणे
  - दुःखनिरोधः
  - दुःखनिरोधगामिनी प्रतिपद्
- आर्याष्टाङ्गिको मार्गः
  - सम्यज् ज्ञानम्
  - सम्यग् सङ्कल्पः
  - सम्यग् वचनम्
  - सम्यग् कर्मान्तः
  - सम्यगाजीवः
  - सम्यग् व्यायामः
  - सम्यग् स्मृतिः
  - सम्यग् समाधिः


बौद्धदर्शनसामान्यतत्त्वानि आत्मा च
त्रिरत्नम्
निर्वाणसाधनम्
शीलम्
समाधिः
प्रज्ञा
पूर्वजन्मस्मरणम्
जीवोत्पत्तिविनाश ज्ञानम्
चित्तबाधकानां ज्ञानम्
श्रुतमयी
चिन्तामयी
भावनामयी
गृहस्थशीलम् 5
भिक्षुशीलम् 10
कामास्रवः
भवास्रवः
अविद्यास्रवः
अपराह्ण भोजनत्यागः
मालात्यागः
सङ्गीतत्यागः
सुवर्णरजतत्यागः
खट्वात्यागः
अहिंसा
सत्यभाषणम्
ब्रह्मचर्यम्
अस्तेयम्
सुरात्यागः
अहिंसा
अस्तेयम्
सत्यभाषणम्
ब्रह्मचर्यम्
सुरात्याग.

# बौद्ध दर्शनतत्त्वानि आत्मा च




विज्ञानवादियोगाचारमते तत्त्वानि आत्मा च
प्रमाणम्
प्रमाता आत्मा
(क्षणिकविज्ञानरूपः)
ज्ञानम्
स्वप्रकाशकं
विज्ञानम्
अज्ञानम्
विषयाणां
दुःखदत्वमतिः
प्रत्यक्षम्
अनुमानम्
विज्ञानम्
मोक्षः
(आलयविज्ञान
धारानुवृत्तिः)
आलयविज्ञानम्
(अहमित्याकारकम्)
मनोविज्ञानम्
(नीलपीताद्याकारकम्)



शून्यवादिमाध्यमिकमते तत्त्वानि आत्मा च
प्रमाणम्
प्रमाता (आत्मा)
( शून्यम् )
प्रमेयम्
( शून्यात्मकमिदं जगत् )
ज्ञानम्
(शून्यमिति भावना)
प्रत्यक्षम्
अनुमानम्
अज्ञानम्
(ज्ञेयं ज्ञानम् ज्ञाता अस्तीति भावना)
मोक्षः
(सर्वव्यवहारोच्छेदः)




अनात्मवादि वैभाषिकमते तत्त्वानि आत्मा च
प्रमाणम्
प्रमाता (आत्मा)
पञ्चस्कन्धात्मक विज्ञानम्
अज्ञानम्
(स्थिर एक आत्मा
इति ज्ञानम् )
ज्ञानम्
(क्षणिकं सर्व
मिति भावना)
प्रमेयम्
नानात्मक
मिदं जगत्
प्रत्यक्षम्
अनुमानम्
रूप
वेदना
संज्ञा
संस्कारः
विज्ञान
आत्मा
निर्वाणम् (संयोजकधातुक्षयः)
धर्मः
सोपाधिक
(जीवन्मुक्तिः)
निरुपाधिक
(विदेहमुक्तिः)
सास्रवः
अनास्रवः

## क्षणिकवादि सौत्रान्तिकमते तत्त्वानि आत्मा च






आत्मतत्वविवेकव्याख्या— 1. नारायणीया ।

अत्रिगोत्रोद्भवेन कृष्णाचार्यपुत्रेण नारायणाचार्येण कृतेयं व्याख्या सौगतमत-तन्निरासरहस्यमधिगन्तुं उत्सुकानां महदुपकुरोति । मूलग्रन्थाक्षरान्वययोजना-भाव-स्पष्टीकरणादिभिः सर्वाङ्गपूर्णेयं व्याख्या चौखाम्बायां (ch. S. S. 85) मुद्रिता । रायलासियाटिकपुस्तकालयस्थादर्शपुस्तके अस्य प्रतिलिपिकालः 1406 संवदिति ज्ञायते ।

आत्मतत्वविवेकव्याख्या— 2. दीधितिः ।

नवद्वीपवासिना वासुदेवसार्वभौमशिष्येण श्रीचैतन्यसहाध्यायिना षोडशशतकीयेन (1475–1550 A. D.) तत्वचिन्तामणिदीधितिकर्त्रा रघुनाथशिरोमणिना कृता दीधित्याख्या गम्भीरा भावपूर्णा च व्याख्या चौखाम्बामुद्रणालये, बिब्लियोथिका ग्रन्थमालायाञ्च भागशः (B. I. S. 170) मुद्रिता ।

दीधितिव्याख्याः—वङ्गदेशीयेन जीवाचार्यपुत्रेण हरिरामतर्कवागीशशिष्येण चिन्तामणिदीधित्यादीनां व्याख्यात्रा गदाधरभट्टाचार्येण कृता आत्मतत्व-दीधितिव्याख्या टीकाख्या वाराणस्यां (ch. S. S. 84) कलकत्तायाञ्च (B I S 170) मुद्रिता । गदाधरभट्टाचार्यमधिकृत्याधिकं (p. 48) निरूपितम् । मधुसूदनठक्कुर-शिष्येण गौडेन आलोकादिव्याख्यात्रा गुणानन्दविद्यावागीशेन कृता आत्मतत्वविवेक दीधितिव्याख्या अमुद्रिता आलवार - बरोडा - मिथिलासूच्यां दृश्यते । जर्नल आफ् आसियाटिक् सोसाइटि बेंगाल न्यूसीरीज़ (Vol. XI p. 279) पत्रिकायां विस्तृता च । मथुरानाथपित्रा रघुनाथशिरोमणिशिष्येण श्रीरामतर्कालङ्कारेण कृता काचन आत्मतत्वविवेकदीधिति व्याख्या वाराणस्यां (ch. S. S. 63) मुद्रिता । भवानीभवनाथयोः पुत्रेण मैथिलेन कणादसूत्रोपस्कारन्यायलीलावतीकण्ठाभरण कणादरहस्यादिकर्त्रा पञ्चदशशतकीयेन शङ्करमिश्रेण कृता काचन कल्पलताख्या दीधितिव्याख्या वाराणस्यां (ch. S. S. 392) (B. I. S. 170) च भागशो मुद्रिता ।

आत्मतत्वविवेकव्याख्या— 3. नरहरीया ।

यज्ञपतिपुत्रेण जयदेवमिश्रशिष्येण महेश्वरविशारदापराख्येन नरहरिपण्डितेन कृता काचन व्याख्या अमुद्रिता उमेशमिश्रसंकलने अलहाबादनगरे लभ्यते ।

आत्मतत्वविवेकव्याख्या— 4. प्रकाशिका ।

जलद इत्युपनामकेन भगीरथशर्मणा (1600 A. D.) कृता काचन प्रकाशिकाख्या व्याख्या कलकत्तायां (B. I. S. 170) भागशो मुद्रिता ।

आत्मतत्त्वविवेकव्याख्या— 5. रहस्यम् ।

मथुरानाथतर्कवागीशेन श्रीरामतर्कालङ्कारपुत्रेण रघुनाथशिरोमणिशिष्येण कृता काचन रहस्याख्या व्याख्या कलकत्तायां (B. I. S. 170) भागश मुद्रिता । एवं गोविन्दभट्टाचार्यचक्रवर्तिना कृता काचन आत्मतत्त्वविवेक— 6. टीका अमुद्रिता नवद्वीपसूच्यां हरप्रसादशास्त्रिसूच्याञ्च दृश्यते ।

एवमन्या काचन आत्मतत्त्वविवेक— 7. साराख्या व्याख्या रामानन्द तीर्थकृता अमुद्रिता मैसूरसूच्यां कलकत्तासंस्कृतसाहित्यपरिषत्सूच्याञ्च दृश्यते । परमियं शाङ्करात्मतत्त्वविवेकसार एव न तु न्यायग्रन्थ इति निश्चयः । पदवाक्यरत्नाकरकारेण गोकुलनाथोपाध्यायेन कृता काचन विवरणाख्या व्याख्यापि अस्तीति पदवाक्यरत्नाकरात् (p 227) ज्ञायते । परन्तु प्राप्तिस्थानादि न ज्ञायते ।




आत्मतत्त्वविषये नैयायिकानां नास्तिकाः बौद्धाः केवलं प्रबलप्रतिवादिन आसन् । परं ईश्वरतत्त्वविषये आस्तिकत्वेन प्रसिद्धाः सांख्याः मीमांसकाश्च, नास्तिकत्वेन प्रसिद्धाः चार्वाकबौद्धजैनाश्च प्रतिबन्दिन आसन् । एतेषां सर्वेषां मतखण्डनाय ईश्वरसाधनाय च प्रवृत्तोऽयं न्यायकुसुमाञ्जलिग्रन्थः ।

तत्रेश्वरसाधनविषये नैयायिकानामयमाशयः—अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादिश्रुतिवाक्यैः वैदिकानां अग्निहोत्रादिकर्मणां स्वर्गादिफलोत्पादकत्वं अवगतं भवति । स्वर्गश्च सुखविशेषः, यत्र दुःखमेव नास्तीत्यादि—

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम् ॥ इति प्रसिद्धम् ।

स च सुखविशेष अस्मिन् लोके न सम्भवति, यतोऽत्र दुःखवर्जनेन सुखयोगस्यासम्भवात् । ततश्च स्वर्गादिफलं कालान्तरे लोकान्तरे वा अवश्यम्भावीति वक्तव्यम्, तत्र च अग्निहोत्रादिकं साधनं शास्त्रप्रामाण्यात् । अग्निहोत्रादिकर्म क्रियारूपं उत्पन्नध्वंसि, तच्च स्वर्गप्राप्तिकालपर्यन्तं नावतिष्ठते । अनवस्थितात् कारणात् कार्योत्पत्तिस्तु न सम्भवति । तस्मात् स्वर्गपर्यन्तस्थायी कश्चन अग्निहोत्रादिजन्यः व्यापारः स्वीकर्तव्यो भवति । तेन व्यापारेण विनष्टस्यापि अग्निहोत्रादेः स्वर्गहेतुत्वं उपपद्यते । लोके च दृश्यत एव चिरातीतस्याप्यनुभवस्य संस्कारद्वारा कालान्तरे स्मृतिहेतुत्वम् । स च अग्निहोत्रादिजन्यः व्यापार अदृष्टमिति धर्म इति पुण्यमिति च गीयते । तच्च पुण्यं अचेतनं विना चेतनाधिष्ठानं न फलजनकं भवति । अचेतनं रथशकटादि चेतनाधिष्ठितं सदेव फलजनकं दृश्यते । जीवात्मनां अदृष्टस्यातीन्द्रियत्वात् अदृष्टगोचरापरोक्षज्ञानाभावात् अदृष्टाधिष्ठानत्वं न सम्भवति । तस्मात् यः पुरुषधौरेय अदृष्टगोचरापरोक्षज्ञानवान् अदृष्टमधितिष्ठति स एवेश्वरः इत्यदृष्टाधिष्ठातृतया ईश्वरसिद्धिः । एवं वेदकर्तृतया क्षित्यादिकर्तृतया च ईश्वरसिद्धिरिति नैयायिकं युक्तिपूर्वकं मतम् ।

अत्र चार्वाका एवं प्रत्यवतिष्ठन्ते—तेषामयमाशयः । यदि अदृष्टं नाम किञ्चित् स्यात् तदा तदधिष्ठातृतया ईश्वरसिद्धिर्भवितुमर्हति । अदृष्टमेव नास्ति तत्र प्रमाणाभावात् । इन्द्रियाविषयत्वात् अदृष्टं न प्रत्यक्षविषयं भवति । न अनुमानादपि अदृष्टसिद्धिर्भवितुमर्हति अनुमानस्याप्रमाणत्वात् । सर्वत्र व्यभिचारसंशयेन अव्यभिचरितसम्बन्धज्ञानाधीनस्य अनुमानस्यासम्भवात् । अनुमानस्याप्रामाण्ये च तदधीन संकेतग्रहाधीनबोधजनकस्य शब्दस्यापि नास्ति प्रामाण्यम् । देहातिरिक्त आत्मापि नाम कश्चिन्नास्ति यस्य परलोके स्वर्गादिभोगः स्यात् । किन्तु देह एवात्मा तस्यैव चैतन्यमिति ।

कुसुमाञ्जलिग्रन्थवर्णितं ईश्वराभाववादनिराकरणन्त्वेवम्—इह जगति न सर्वो जनस्समानः । सुखी दुःखीत्यादिकं वैचित्र्यं जगति बहुलं उपलभ्यते । कारणमन्तरेण वैचित्र्यं न वक्तु शक्यम् । वैचित्र्यस्य कार्यतया कारणजन्यत्वनियमात् । तत्र दृष्टं किञ्चित्कारणं नास्तीत्यवश्यं अदृष्टमेव कारणं वाच्यम् । यदि अदृष्टं नाम न स्यात् तर्हि बहुवित्तव्यायाससाध्ये वैदिके कर्मणि प्रेक्षावतां

प्रवृत्तिरपि न सम्भवति । तैश्च कर्मभिः दृष्टं फलं किमपि न क्रियते । लाभस्य ख्यातेः संमानस्य वा प्राप्तये धर्माचरणमित्यपि न वक्तुं शक्यते । लाभादिनिरपेक्षैरपि गिरिगुहारण्यवासिभिरपि निर्जनस्थानेऽपि कर्माचरणदर्शनात् । धर्माभावे धर्माचरणात् लाभादिकमपि न सम्भवति । लोके हि धर्मबुध्यैव धार्मिकेभ्यो धनं ददाति । अन्यथा अतिश्रमेणोपार्जितस्य धनस्य त्यागानुपपत्तेः । कश्चित्प्रतारकः स्वर्गादि-फलकतया यागादिकं परिकल्प्य परेषां विश्वासार्थं स्वयमपि तदनुष्ठितवान् ततस्तेन प्रतारित एव लोको यागादौ प्रवर्तत इत्यादि कल्पयितुं न शक्यते । को नाम जन्तुरेवं भवेत् यः परप्रतारणार्थं बह्वायासार्जितस्य धनस्य अस्थान एव व्ययं करोति उपवासादिना च आत्मानं क्लिश्नाति । नहीदृशात् दुःखराशेः परप्रतारणसुखं गरीयः स्यात् । तस्मात् प्रतारणाय वैदिककर्माणि कल्पितानीतिवादोऽपि अयुक्तिकः ।

अनुमानमपि प्रमाणमेव । व्यभिचारसंशयेन हि अनुमानस्याप्रामाण्यं चार्वाकैरिष्यते । व्यभिचारसंशयश्च अनुमानाधीन एव । एकमुदाहरणं विशदी-कुर्मः—वह्निमान् धूमादित्येकं उदाहरणमनुमानस्य । धूमो हि वह्निं न व्यभिचरति । अतश्च धूमेन वह्निरनुमीयते । तत्र वह्निधूमयोः व्यभिचारसंशयेन अनुमानस्याप्रामा-ण्यमभिमन्यते । तत्रेदं वक्तव्यम् । दृष्टयोस्तावद् वह्निधूमयोः प्रत्यक्षेणोपलम्भात् न व्यभिचारसंशयस्सम्भवति । किन्तु अदृष्टयोस्तयोः कालान्तरे देशान्तरे वा व्यभि-चारशङ्का स्यात् । कालान्तरस्थयोर्देशान्तरस्थयोश्च वह्निधूमयोः ज्ञानन्तु न प्रत्यक्षेण, किन्तु अनुमानेनैव । तस्मात् प्रत्यक्षातिरिक्तं अनुमानमपि प्रमाणमिति अनिच्छतापि स्वीकर्तव्यमेवेति सिद्धम् । व्यभिचारसंशयेन हेतोर्न साधकत्वमित्यपि अनुमानेऽसति वक्तुमशक्यम् ।

यदि देह एवात्मा स्यात् तदा बाल्ये अनुभूतस्य वार्धके स्मरणं न स्यात् । बाल्यवार्धकयोश्शरीरभेदात् । न खलु अन्येन दृष्टं अन्यः स्मरति इत्येवमाविकारेण आत्मापि देहव्यतिरिक्तोऽङ्गीकर्तव्य इति ।

मीमांसका अपि ईश्वरं न स्वीकुर्वन्ति । तेषामयमाशयः—वेदो नित्यः, न केनचित् वेदः कृत इति वेदकर्तृतया ईश्वरसिद्धिर्न भवितुमर्हति । वेदस्य नित्यत्वे प्रमाणन्तु य एव वेदो देवदत्तेनाधीतः स एव मैत्रेणाप्यधीत इति प्रत्यभिज्ञानमेव । स एवायं गकार इति प्रत्यभिज्ञाबलात् वर्णानामपि नित्यत्वमित्युक्ते तत्समुदायस्य पदस्य तत्समुदायस्य वाक्यस्य च नित्यत्वं सुतरां सिध्यति इति ।

मीमांसकमतनिराकरणन्तु—एवम्—वाक्यत्वादेव हेतोः इतरवाक्यानीव वेदवाक्यान्यपि जन्यान्येव न तु नित्यानि। वाक्यञ्च वक्तुर्भ्रमप्रमादादिदोषवशादप्रमाणं भवति। वेदवाक्यञ्च प्रेक्षावद्भिः महाजनैः परिगृहीतत्वेन प्रमाणम्। अतस्तद्वक्ता प्रमादिशून्य एवास्ति। स एव भगवानीश्वरः। गकारादयो वर्णाः अपि न नित्याः, उत्पन्नो गकारः विनष्टो गकारः, श्रुतपूर्वो गकारो नास्तीति प्रत्यक्षत एव तदुत्पत्तिविनाशयोरनुभवात्। एवञ्च व्यक्तीनामुत्पत्तिविनाशित्वस्य प्रत्यक्षसिद्धत्वात् स एवायं गकार इत्यादि प्रत्यभिज्ञा गत्वादिजातिविषयिणीति वक्तव्या, सैवेयं दीपशिखेतिवत् छिन्नपुनर्जातकेशादौ त एवामी केशा इत्यादिवच्चेति।

ईश्वरानङ्गीकर्तॄणां बौद्धानां मतन्त्वेवम्—प्रत्यक्षानुपलम्भबाधिते तावदनुमानं न प्रवर्तते। तथा च ईश्वरस्य प्रत्यक्षानुपलम्भबाधितत्वात् न अनुमानेनेश्वरसिद्धिः। किञ्च यो हि कर्ता भवति स शरीरी भवतीति लोके दृश्यते। ईश्वरस्तु अशरीरी। तस्मात् शरीराभावान्नेश्वरः कर्ता भवितुमर्हतीति क्षित्यादिकर्तृत्वेनेश्वरसिद्धिर्न भवितुमर्हति। एवं योहि किञ्चित् करोति स किञ्चित्प्रयोजनमभिसन्धाय प्रवर्तत इति लोके दृष्टम्। ईश्वरश्चाप्तकाम इति स्वीक्रियते। आप्तकामस्य किञ्चिदपि प्रयोजनं न सम्भवति, यमभिसन्धाय स कर्ता भवेत् इति ईश्वरो नास्तीति।

बौद्धमतनिराकरणन्त्वेवम्—प्रत्यक्षानुपलम्भबाधिते अनुमानं न प्रवर्तत इति तु सत्यम्, परन्तु उपलम्भयोग्यस्यानुपलम्भेन अभावनिश्चयो न तु अनुपलम्भमात्रेणाभावनिश्चयः। तथा सति अतीन्द्रियाणामाकाशादीनामपि अभावनिश्चयः स्यात्। ईश्वरस्तु न प्रत्यक्षोपलम्भयोग्य इति प्रत्यक्षानुपलम्भादीश्वराभाव इति कथनमयुक्तम्। कस्मिंश्चिदाश्रये कस्यचिदनुमानं भवति। यथा पर्वते वह्निः। शरीराभावात्प्रयोजनाभावाच्च ईश्वरे कर्तृत्वाभावानुमाने आश्रयस्य अङ्गीकारप्रसंगः। तदनङ्गीकारे कुत्र कर्तृत्वाभावानुमानम्? योहि कर्ता भवति तेन अवश्यं शरीरिणैव भवितव्यमित्यत्रापि प्रमाणं नास्ति। विपक्षे बाधकाभावात्। यत्र धूमस्तत्र अवश्यं वह्निना भवितव्यमित्यत्र तु वह्निधूमयोः कार्यकारणभाव एव विपक्षबाधकः। ईश्वरस्य आप्तकामत्वात् निजप्रयोजनाभावेऽपि भूतानुग्रहः प्रयोजनमिति सिध्यति ईश्वरः।

जैनास्तु एवं वदन्ति—नैयायिकोक्त ईश्वरो न प्रमाणम्। प्रमाणपदं यदि करणे व्युत्पन्नम् तर्हि प्रमाकरणबोधकम्। यदि कर्तरि व्युत्पन्नं तर्हि प्रमाकर्तृबोधकम्। अस्मदादिप्रमायां ईश्वरस्य करणत्वे मानाभावात् ईश्वरस्तावत् न प्रमाकरणं

भवितुमर्हति । ईश्वरज्ञानञ्च नित्यं सर्वविषयञ्चेति नैयायिकाभिप्रायः । न नित्यस्य वस्तुनः करणं कर्ता वा भवितुमर्हति । ततश्च ईश्वरः स्वज्ञानस्यापि करणं कर्ता वा न भवितुमर्हति । ईश्वरज्ञानञ्च न प्रमा । यद्धि ज्ञानं अज्ञाते विषये जायते सैव प्रमा । ईश्वरस्य च सर्वज्ञस्य अज्ञातो विषयो नास्ति यस्मिन् विषये तस्य ज्ञानं प्रमा भवेत् । तस्मात् ईश्वरज्ञानं न प्रमा नापीश्वरः प्रमाणम्, तथा च अप्रमाण-पुरुषस्य वचसि का श्रद्धा इति ।

जैनमतनिराकरणन्तु एवम्—ईश्वरज्ञानस्य नित्यत्वेऽपि तदाश्रय ईश्वरो भवत्येव । क्रियाश्रयस्यैव कर्तृत्वात्, सुतरां ईश्वरः प्रमाणम्, कर्तृव्युत्पन्नप्रमाण-शब्दस्य प्रमाकर्तरि प्रवृत्तेः अज्ञातविषये यत् ज्ञानं जायते सैव प्रमा इत्यपि न । एकविषयकधारावाहिकबुद्धीनां उत्तरासां अप्रमात्वप्रसङ्गात् । शुक्तिकायां इदं रजतमिति भ्रमज्ञानस्यापि प्रमात्वप्रसङ्गात् । किन्तु यथार्थोऽनुभवः प्रमेत्येव लक्षणम् । स्मृतिस्तु नानुभव इति न प्रमा । ईश्वरज्ञानञ्च यथार्थं अनुभवश्चेति तत् प्रमा भवत्येव ।

सांख्यास्त्वेवं मन्यन्ते—ईश्वरसद्भावे प्रमाणमेव नास्ति । जगत्कर्तृतया ईश्वरानुमानं न सम्भवति । प्रकृतेरेव जगतः कर्तृत्वात् । उपासनाविधिपरत्वेन वेदस्य, स्वार्थे तात्पर्याभावात् वेद ईश्वरसद्भावे न प्रमाणम् । इति ।

सांख्यास्त्वेवं निराक्रियन्ते—तथाहि—यथा घटादिकार्यं कर्तृजन्यं तथा क्षित्यादिकमपि कार्यम् । यश्च क्षित्यादिकर्ता स एवेश्वरः । न च प्रकृतिः कर्त्री भवति । जडायाः प्रकृतेः कर्तृत्वासम्भवात्, कर्तुश्च चैतन्यनियमात् । एवं सर्गाद्यकालीनद्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्मापि ईश्वरप्रयत्नादेव जायते । कर्मणा चेतनप्रयत्नजन्यत्वनियमात् । ईश्वरमुपासीत इत्यादिवेदवाक्यान्यपि ईश्वर-सद्भावे प्रमाणम् । तत्र ईश्वरादिपदं स्वार्थद्वारैव विधिपरम्, यथा स्वर्गकामो यजेत इत्यत्र स्वर्गपदं स्वार्थद्वारा विधिपरं तद्वत्, अन्यथा स्वर्गोऽप्यनाश्वासप्रसङ्गादिति ।

एवंविधाभिः प्रबलयुक्तिभिः ईश्वरसाधनपरेषु इदानीमुपलभ्यमानेषु न्याय-ग्रन्थेषु मान्यतमः ग्रन्थः न्यायकुसुमाञ्जलिः ।

ग्रन्थोयं सांख्यमीमांसकैश्चाभिमतं निरीश्वरवादं खण्डयित्वा अद्वैत—द्वैतवादिनां ईश्वरविषयकविवादे मध्ये सेतुर्भूत्वा ईश्वरतत्त्वं अनुमानद्वारा पञ्चमस्तबके

उभयाविरुद्धं साधयति। ग्रन्थोऽयं बिब्लियोथिकाग्रन्थमालायां (B. I. S. 123), काशीसंस्कृतग्रन्थमालायम्, (C. S. S. 30), तिरुपतिनगरे, सरस्वतीभवनग्रन्थमालायम्, (S. B T. 4) आशुतोषग्रन्थावल्यां कलकत्तानगरे (Ash. S. S. 4), शास्त्रकल्पवल्लीमालायां (No. 1) तिरुपतिनगरे च मुद्रितः। अत्र पञ्च स्तबकास्सन्ति।

तत्र प्रथमस्तबके अलौकिकस्य परलोकसाधनस्याभाव इति चार्वाकस्य प्रथमा विप्रतिपत्तिः मतान्तरालोचनपूर्वकं निरस्यते। प्रसङ्गात् कार्यकारणभावव्यवस्थापनम्, कार्यकारणप्रवाहस्यानादित्वम्, आकस्मिकत्ववादनिरसनम्, मीमांसकाभिमतशक्तिपदार्थदूषणम्, ब्रह्मकारणवादनिराकरणम्, प्रकृतिकारणतावादखण्डनम्, अदृष्टस्य भोक्तृनिष्ठत्वम्, अभावस्य कारणत्वसमर्थनम्, बुद्धेः कर्तृत्वनिराकरणम्, आत्मनः कर्तृत्वस्थापनम्, क्षणभङ्गवादनिराकरणम्, कारणत्वस्य स्वाभाविकत्वौपाधिकत्वविचारः, नित्यविभोरपि कारणत्वव्यवस्थापनमित्येते विषया वर्णिताः।

द्वितीयस्तबके ईश्वरं विनापि यागादेः स्वर्गसाधनत्वस्य वेदगम्यत्वात् परलोकसाधनानुष्ठानसम्भवात् ईश्वरो नावश्यक इति मीमांसकस्य द्वितीया विप्रतिपत्तिर्निरस्यते। शब्दानित्यत्वस्थापनम्, कपिलादीनामनीश्वरत्वप्रतिपादनम्, प्रसंगात् प्रमायाः गुणजन्यत्वस्थापनम, प्रलयव्यवस्थापनम्, वेदादिसंप्रदायस्य क्रमिकह्रासप्रदर्शनम् इत्यादयो विषयाः विशदीकृताः।

तृतीयस्तबके अनुपलब्धिसहकारेण चक्षुरादित एव ईश्वराभावस्य लौकिकप्रत्यक्षगोचरतया क्षित्यादिकार्यत्वप्रयुक्तानुमानं बाधितमिति बौद्धानां तृतीया विप्रतिपत्तिर्दूष्यते। प्रसङ्गात् अलीकस्य नाभावप्रतियोगित्वम्, नवा अभावाधिकरणत्वम्, योग्यानुपलब्धिः, ईश्वरबाधकानुमानखण्डनम्, अनुमानाभावेऽपि सम्भावनामात्रात् प्रवृत्तिरिति चार्वाकमतखण्डनम्, अनुमानप्रामाण्यव्यवस्थापनम्, तर्कस्य शङ्कानिवर्तकत्वकथनम्, सादृश्यस्य पदार्थान्तरत्वखण्डनम्, मीमांसकाभिमतोपमानखण्डनम्, नैयायिकाभिमतोपमाननिरूपणम्, उपमानस्य प्रमाणान्तरत्वस्थापनम्, शब्दस्यानुमानत्वखण्डनम्, लौकिकशब्दो न प्रमाणमिति प्रभाकरमतखण्डनम्, शब्दस्य प्रमाणान्तरत्वस्थापनम्, अर्थापत्तेः प्रमाणान्तरत्वनिरसनम्, अनुपलब्धिप्रामाणान्तरत्वनिरसनम् आकाङ्क्षालक्षणम्, अन्विताभिधानवादखण्डनम्, इत्यादयो विषयाः निरूपिताः।

चतुर्थस्तबके तावत्—ईश्वरज्ञानं न प्रमाणम्, अनधिगतार्थगन्तृ हि प्रमाणमिति प्रमाणज्ञाः वदन्ति। ईश्वरस्य यदि सर्वज्ञत्वमभ्युपेयते तर्हि तज्ज्ञानस्य सकलविषकत्वाभ्युपगमे ईश्वरस्य अधिगतार्थगन्तृत्वेनाप्रामाण्यमिति सर्वज्ञः अनधिगतार्थगन्ता चेति व्याहतमिति जैनानां विप्रतिपत्तिः खण्ड्यते। प्रसङ्गात् प्रमालक्षणम्, ज्ञातताखण्डनम्, ज्ञानस्य विषयव्यवस्थोपपादनम्, प्रमातृप्रामाण्ययोर्निरूपणमितीमे विषयाश्चोपवर्णिताः।

पञ्चमे स्तबके तु, ईश्वरसाधकं प्रमाणमेव न, तत्साधकत्वेनोपन्यस्तं श्रुत्यादि तु अन्यार्थपरमिति सांख्यानां पञ्चमी विप्रतिपत्तिः खण्डिता। कार्यायोजन धृत्यादिभिः हेतुभिरीश्वरसाधनञ्च कृतम्। एवं प्रसङ्गात् वेदस्यापौरुषेयत्वम्, ईश्वरबाधकानुमानापेक्षया साधकानुमानस्यानुकूलतर्ककथनपूर्वकं बलवत्त्वस्थापनम्, प्रतिकूलतर्काणामाभासत्वव्यवस्थापनम्, विधिपदार्थनिरूपणम् प्रवर्तकज्ञानविचारः, भावनापदार्थनिरूपणम्, आख्यातस्य यत्नार्थकत्वनिरूपणम्, कृत्स्नस्य वेदस्य ईश्वरपरत्वम् शरीरलक्षणम्, कार्यत्रैविध्यम्, चेष्टालक्षणम्, पदार्थवाक्यार्थलक्षणम्, तात्पर्यार्थिलक्षणानि, भगवतो महेश्वरस्य षडङ्गानि विधिपदार्थनिर्णयः, आख्यातस्य कर्तृशक्तिवादिनां वैयाकरणानां मतखण्डनम, सप्तदशभिरनुमानैरीश्वरसाधनम्, इत्येते विषयाः वर्णिताः।

ग्रन्थेऽस्मिन् सर्वे विषयाः प्रथमं कारिकया सङ्क्षेपेणोक्ताः, अनन्तरं गद्येन विस्तरेण च तद्विचारः कृतोऽस्ति॥

तत्रेश्वरसाधकहेतवस्तु—

कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः।
वाक्यात् संख्याविशेषाच्च साध्यो विश्वविदव्ययः॥

इति पद्येन अष्टौ निर्दिष्टाः। तत्र कार्यत्वहेतुविचारः—"न बाधोऽस्ये" त्यारभ्य—आगमा बोद्धव्या इत्यन्तः (pp. 30-53 ch. S. S. Edn)। अयोजनादिति हेतुविचारः "स्वातन्त्र्ये जडताहानि" रित्यारभ्य—तपामीत्यन्तः (pp. 54-58) धृतेरिति हेतुविचारः (pp. 58-59), पदादिति हेतुविचारः (pp. 60-61), प्रत्ययत इति विचारः (p. 62) श्रुतेरिति हेतुविचारः (pp. 62-65) संख्याविशेषाच्चेति हेतुविचारः (pp. 62-65) कृतः। व्याप्तिस्तम्भनार्थं विपरीतव्याप्तिप्रदर्शनार्थञ्च उद्भाविता आश्रयासिद्धि व्याप्यत्वासिध्यादयो दोषाः प्रत्यक्षबाधानैकन्तिकत्वादयश्च

दोषा दूरीकृताः। ईश्वर अकर्ता अशरीरत्वात्, क्षित्यादिकं अकार्यम् शरीराजन्यत्वात् इत्यादीन्यनुमानानि खण्डितानि। एवञ्चायम् ईश्वरसाधनत्वप्रकारः—क्षित्यादिकं कर्तृपूर्वकम्, जगदपि कार्यम् तस्मात् सकर्तृकम्। कार्यत्वं नाम सावयवत्वम्। कर्तृत्वं नाम इतरकारकाप्रयोजकत्वे सति सकलकारकप्रयोक्तृत्वलक्षणं ज्ञानचिकीर्षाप्रयत्नाधारत्वम्। तत्र साध्यसाधनज्ञानं—ज्ञानम् साधनोपयोगेच्छा चिकीर्षा। साध्यप्राप्तिनिमित्तं कर्म प्रयत्नः। ततश्च क्षित्यङ्कुरादिकं कर्तृपूर्वकं कार्यत्वात्। कर्तृपूर्वकत्वञ्चोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वमिति कार्यत्वेन हेतुना जगतः कर्तुरीश्वरस्य सिद्धिः।

क्षित्यङ्कुरादिकं सकर्तृकम् आयोजनात्। आयोजनं नाम प्रेरणम। परमाण्वादयः चेतनयोजिताः प्रवर्तन्ते अचेतनत्वाद् वास्यादिवत्। एवं आयोजनं नाम कार्यारम्भकसंयोगजनकं कर्म। एवं च सर्गाद्यकालीन द्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म चेतनप्रयत्नपूर्वकं कर्मत्वात् अस्मदादिशरीरक्रियावत् इत्यायोजनत्वेन हेतुना जगत्कर्तृत्वसिद्धिः।

क्षित्यादि सकर्तृकं—कर्तृप्रयत्नाधिष्ठितम् धृतेः—पतनाभावात्। धृतिश्च गुरुत्ववतां पतनाभावः। एवञ्च क्षित्यादि ब्रह्माण्डपर्यन्तं जगत् परम्परया वा साक्षात् विधायकप्रयत्नाधिष्ठितम् गुरुत्वे सति अपतनधर्मकत्वात् वियति विहङ्गमशरीरवत्। ब्रह्माण्डादि पतनप्रतिबन्धकीभूतप्रयत्नवदधिष्ठितम्, धृतिमत्वात्, वियति विहङ्गमधृतकाष्ठवत् इति धृतित्वेन हेतुना ईश्वरसिद्धिः। आदिशब्दात् संहरणं गृह्यते। एवञ्च क्षित्यादि जगत् प्रयत्नवद्विनाश्यं विनाश्यत्वात् पाट्यमानपटवत् इति हेत्वन्तरेणापि संहारहर्तुरीश्वरस्य सिद्धिः। एवं पदादिति हेतुः। पद्यते—गम्यते व्यवहाराङ्ग अर्थ इति वृद्धव्यवहारः पदमित्युच्यते। एवं च कुविन्दादीनां पटादिनिर्माणनैपुण्यं यत् तत्, व्यक्तवाचां यः वाग्व्यवहारः सः, बालानां लिपितत्क्रमव्यवहारः यः सः, स्वतन्त्रपुरुषविश्रान्तः व्यवहारत्वात्, आधुनिकशिल्पादिव्यवहारवदिति वा पदत्वेन हेतुना व्यवहारप्रयोजकेश्वरसिद्धिः।

प्रत्ययतश्चेश्वरसिद्धिः। प्रत्ययतः—समाश्वासात्, प्रमात्वविषयकज्ञानाद्वेत्यर्थः। ततश्च आगमादिसम्प्रदायोऽयं कारणगुणपूर्वकः प्रमाणत्वात् प्रत्यक्षादिवत्, वेदजन्यं ज्ञानं कारणगुणजन्यं प्रमात्वात् प्रत्यक्षादिप्रमावत् इत्यनुमानेन कारणभूतस्य सिद्धिः।

श्रुतेश्चेश्वरसिद्धिः। श्रुतेरित्यस्य वेदादित्यर्थः। तथाच वेदाः सर्वज्ञप्रणीताः वेदत्वात् यन्नैवं तन्नैवं यथा इतरवाक्यम् इति व्यतिरेक्यनुमानेनेश्वरसिद्धिः। एवं वेदः पौरुषेयः वेदत्वात् आयुर्वेदवत् इत्यनुमानेन च वेदकर्तृत्वेनेश्वरसिद्धिः। तत्र पौरुषेयत्वं नाम सजातीयोच्चारणानपेक्षत्वे सति प्रमादिशून्यपुरुषोच्चारणजन्यत्वम्, अनुपलभ्यमानमूलान्तरत्वे सति महाजनपरिगृहीतवाक्यत्वं वा इति परिष्कारः।

वाक्त्वेन हेतुना चेश्वरसिद्धिः। वाक्यादित्यस्यान्वयत इत्यर्थः। वेदवाक्यानि पौरुषेयाणि वाक्यत्वात् अस्मदादिवाक्यवदित्यनुमानेन, वेदः पौरुषेयः वाक्यत्वात् भारतादिवदित्यनुमानेन च तादृशपुरुषस्येश्वरस्य सिद्धिः।

संख्याविशेषादिति हेतुनापीश्वरसिद्धिः। परमाणुगतद्वित्वं संख्याविशेष इत्यस्यार्थः। द्व्यणुकारम्भकपरमाणुगतद्वित्वसंख्याविशेषत, एवं त्र्यणुकारम्भक-द्व्यणुकगतत्रित्वसंख्याविशेषादित्यर्थः। एवञ्च द्व्यणुकत्र्यणुके परिमाणवती द्रव्यत्वात्, तच्च परिमाणं कार्यम् कार्यगुणत्वात्, तच्च कार्यं सकर्तृकं, स च कर्ता ईश्वर इत्यनुमानेनेश्वरसिद्धिः।

विश्वविद्व्यय इति विशिष्टस्याव्ययत्वम्। तेन ईश्वरे नित्यसर्वविषयक ज्ञानसिद्धिः।

स्वभावो दुरतिक्रमः, किमत्र क्रियतां विधेर्दुर्लङ्घ्यत्वात्, पूर्वं ऋतवृत्तयो ब्राह्मणाः प्रायोतिषत, ततोऽमृतवृत्तयः सम्प्रति मृतप्रमृतसत्यानृतकुसीदपाशुपाल्य श्ववृत्तयो भूयांसः, पूर्वं अमृतभुजः, ततो विघसभुजः, ततोऽन्नभुजः, सम्प्रत्यघमभुज एव, तस्मादायुरारोग्यबलवीर्यश्रद्धाशमदमग्रहणधारणादिशक्तेरहरहरपचीयमानत्वात् स्वाध्यायानुष्ठाने शीर्यमाणे कथञ्चिदनुवर्तते, प्रकृतिपरिणतेरिति सांख्यानां मते शोभते, ब्रह्मपरिणतेरिति भास्करगोत्रे युज्यते, अतीन्द्रियार्थदर्शनोपायो भावना, घटायोन्मीलितं चक्षुः पटं नैव प्रदर्शयेत्, मीमांसको तोषयितव्यो भीषयितव्यश्च, बालस्य प्रदीपकलिकाक्रीडयेव नगरदाहः, विश्वतश्चक्षुरित्यादिमन्त्रस्य ईश्वरपरतया व्याख्या, तथाचास्मरणे कालिदासादेरस्मरणात् कुमारसम्भवादेरकर्तृकत्वप्रसङ्गः,

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य॥

स्वव्यापारे च कर्तृत्वं सर्वत्रैवास्ति कारके। इत्यादीनि वचनानि हृदयङ्गमानि न्यायसुत्राणि च दृश्यन्ते।

कुसुमाञ्जलिग्रन्थे वर्णिता एव युक्तयस्तर्काश्च जयन्तभट्टेन न्यायमञ्जर्यां ( pp. 191 - 203 - 240, V. S. S. Edn. ) सर्वात्मना स्वीकृताः । ईश्वरस्य जगत्कर्तृत्वे अनुपपत्तिप्रदर्शनपूर्वकं पूर्वपक्षमुद्भाव्य ईश्वरसाधकहेतोः विरुद्धत्व बाधितत्वसत्प्रतिपक्षत्वादिदोषनिरसनपूर्वकं ईश्वरस्य सर्वज्ञत्वसाधकप्रमाणम्, ईश्वरज्ञानादेर्नित्यत्वम्, ईश्वरस्य जगन्निर्माणे नैष्फल्याक्षेपपरिहारः, ईश्वरस्यैकत्वम्, ईश्वरकर्तृकत्वज्ञानादेव वेदेषु प्रामाण्यव्यवहारश्चेत्येते विषयाः वर्णिता दृश्यन्ते ।

उदयनाचार्ययुक्त्या चमत्कृतः खण्डदेवः (1700 A. D.) मीमांसकोऽपि भाट्टदीपिकायां शाबरभाष्यदुष्टीकानुसारेण ईश्वरनिराकरणपराणि मीमांसासूत्राणि व्याचक्षाणोऽपि अन्ते भीतभीतः "ममत्वेवं वदतोऽपि जिह्वा दूषयतीति हरिस्मरणमेवात्र शरणमिति प्रायश्चित्तं विदधौ ।

अस्य कुसुमाञ्जलिप्रकरणस्य कर्ता न्यायप्रतिष्ठापनाचार्यगौरवान्वितः तर्कधुरन्धरः श्रीवत्सशिष्य इति प्रसिद्धः मैथिल आत्मतत्वविवेक—न्यायपरिशिष्ट—न्यायवर्तिकतात्पर्यटीकापरिशुद्ध—लक्षणावल्यादीनां कर्ता श्रीउदयनाचार्यः दशमशतकीयः ।

यथा उदयनाचार्यैः कुसुमाञ्जल्यां प्रबलतरयुक्तिभिरीश्वरस्साधितस्तथैव तस्मात्पूर्वतनैर्बहुभिरास्तिकनैयायिकैरीश्वरसाधकयुक्तिपूर्णाः स्वतन्त्राः ग्रन्थाः, न्यायभाष्यव्याख्यारचनाव्याजेन वा ईश्वरसाधकयुक्तयश्च विरचिता इति ज्ञायते । एवञ्च ईश्वरवादोपज्ञातार उदयनात् प्राचीना बहव आसन्नित्यत्र बहूनि प्रमाणानि दृश्यन्ते ।

तेषु पण्डितजितारिशिष्येण दुर्वेकमिश्रेण धर्मोत्तरप्रदीपाख्ये स्वग्रन्थे ( p.p. 175, 246 ) रुचिटीकाख्यन्यायभाष्यव्याख्यातारं अध्ययनाचार्यं निर्दिशति । एवं तत्वटीकायाः न्यायभाष्यव्याख्यायाः कर्तारम् अविद्धकर्णाचार्यम्, तत्प्रतिपादितं "तनुभुवनकरणोपादानानि चेतनवदधिष्ठितानि स्वकार्यमारभन्ते इति प्रतिजानीमहे रूपादिमत्वात् तन्त्वादिवत्" इति ईश्वरसाधकानुमानञ्च अनूद्य बौद्धश्शान्तरक्षितस्स्वीये तत्वसङ्ग्रहे (p 78, Verse No 49) खण्डयति । अविद्धकर्णकृतायाः न्यायभाष्यव्याख्यायास्तत्वटीकेति नाम स्यादिति तत्वसङ्ग्रहव्याख्यापञ्जिकायाः (p. 432) ज्ञायते । एवं न्यायमञ्जरीकर्त्रा जयन्तभट्टेन आगमडम्बरे चतुर्थेऽङ्के (p.p 81-98) नैयायिकतिलकोपाधिभूषितः कश्चन धैर्यराश्याख्यः तस्य भाषणानि च वर्णितानि । "महानैयायिको धैर्यराशिरिति प्रथितापरनामा भट्टसाहटः" (p. 79).

वक्ता तीक्ष्णमतिः सतां बहुमतो विद्यापगासागरो
विद्वत्संसदि पण्डितोत्तमतया प्राप्तः प्रतीतिं पराम् ॥ (p. 80)
कोऽसावस्ति नयो न योऽत्र परमां काष्ठां गतो वर्तते ।
लोकोऽनारतमाह साहटसमः सत्यं न जातो नरः ॥ (p. 98)

इति दृश्यते । परमियं कविकल्पनापि स्यात् । एवं ईश्वरसाधनदूषणाख्ये स्वग्रन्थे (p. 35) रत्नकीर्त्या, एवं ज्ञानश्रिया च स्वग्रन्थेषु आस्तिकनैयायिकानां ईश्वरसाधकयुक्तयः अनूदिताः खण्डिताश्च । तेषु अन्यतमो **नरसिंहाख्यो** नैयायिकः । नरसिंहोऽयं खण्डनोद्धारे (p. 40) वाचस्पतिद्वितीयेन च निर्दिष्टः । एवमात्मवादक्षणभङ्गवादअवयविवादेषु उद्योतकराचार्यानुयायी **भाविविक्तः** (भाविवेकः) दिङ्नागादिमतं खण्डयति । भाविवेकमतं खण्डयन् दिङ्नागमतं मण्डयन् धर्मकीर्तिः वादन्यायमलिखत् । शान्तरक्षितेन तत्सङ्ग्रहे, कमलशीलेन पञ्जिकायाञ्च व्यधिकरणत्वनिग्रहस्थानादिविचारेषु भाविवेकः (pp. 88, 96, 140) खण्डितः । अदसीयो ग्रन्थः न्यायभाष्यटीका स्यादिति "भाविविक्तेन भाष्यटीकाया" मिति शान्तरक्षितस्य विपञ्चितार्थाख्यात ग्रन्थाद् (p. 88) ज्ञायते । एवं ईश्वरसाधन दूषणाख्ये ग्रन्थे रत्नकीर्तिना, ईश्वरवादाख्ये ग्रन्थे (pp. 235, 237, 242, 243, 255, 260) पूर्वपक्षनिरूपणावसरे ईश्वरवाददूषणावसरे च **वित्तोकाख्यः** कश्चन आस्तिकनैयायिकः तस्य वाक्यानि चोद्धृत्य खण्डितानि दृश्यन्ते । एवं दुर्वेकमिश्रेण न्यायबिन्दुटीका व्याख्यायां धर्मोत्तरप्रदीपाख्यायां (p. 175) "यदपि न्यायभाष्यटीकावार्तिकयोर्विश्वरूपोद्योतकरावाहतुः" इत्यादिना विश्वरूपाचार्याशयः निर्दिष्टः । जयन्तभट्टेन आगमडम्बरे (p. 15) विश्वरूपप्रभृतयो महाविद्वांस इति निर्दिष्टम् । तार्किकरक्षायां (p. 347) वरदराजमिश्रेण च विश्वरूपो निर्दिष्टः । एवञ्च **विश्वरूपोऽपि** कश्चनास्तिकनैयायिकः, येन **न्यायभाष्यटीका** कृता यस्यां ईश्वरसाधकयुक्तयश्चोद्भाविता इति ज्ञायते । एवं ज्ञानश्रिया क्षणभङ्गाध्याये (p. 11) "यदाह शङ्करः, प्रत्यक्षेणैव स्थितिविपर्यासभावस्य सिद्धत्वादिति" "अत्र शङ्करः" इति (pp. 18, 21, 23, 30, 33, 65, 66, 79, 87, 88) बहुत्रस्थले, ईश्वरवादे (pp. 257, 258) च शङ्करमतमनूद्य खण्डितम् । अमुद्रितायां मिथिलापुस्तकालये रक्षितायां वाचस्पतिमिश्रकृतायां तात्पर्यटीकायां (III-2-17, p. 387) एवमुदयनाचार्यकृतायां तात्पर्यटीकापरिशुध्याम्, प्रबोधपरिशुध्यपराख्ये न्यायपरिशिष्टे च शङ्करस्य वादा अनूदिता दृश्यन्ते । जैनेन विद्यानन्देन आप्तपरीक्षायां शङ्करस्य मतं खण्डितम् । जयन्तभट्टेन च न्यायमञ्जर्यां (p. 393) शङ्करो निर्दिष्टः ।

रत्नकीर्त्या स्थिरसिद्धिदूषणाख्यः ग्रन्थः कृतः । स च शङ्करेण कृतस्य स्थिरसिद्ध्याख्यग्रन्थस्य दूषणपरः । एवमेवेदं ज्ञायते—शङ्करस्वामिना स्थिरसिद्धिरिति ग्रन्थ आरचितः, यस्मिन् ईश्वरप्रतिष्ठां युक्त्या कृतवान् इति, आसीच्चास्य मौलिकत्वं युक्तिप्रयोग इत्येतावदेवाधुना निश्चेतुं शक्यते । एवं ईश्वरास्तित्वविषये शतानन्दाख्यस्य नैयायिकस्य मतमपि महता प्रबन्धेन ज्ञानश्रिया खण्डितम् । कौसाम्बी महोदयास्तु पालसम्राजां सभाकविरयं शतानन्दः अभिनन्दजनकः, अस्य कालः (828 A.D.) इति च सम्भावयतीति ज्ञानश्रीनिबन्धावल्यां (p. 55) दृश्यते । एवं न्यायवार्तिकटीकाव्याख्यायां परिशुध्यां (2.1-68, 3-1.27, 3.2-66, 5-2.11) श्रीवत्साचार्यस्तस्य मतञ्च उदयनाचार्येण समालोचितम् इत्यस्माभिरत्र ग्रन्थे (p. p. 100-101) प्रतिपादितम् । प्रशस्तपादीयभाष्यव्याख्याकारस्स्यादिति च सम्भावितम् । ईश्वरविषये स्वीयं मतं प्रतिपादितं स्यादित्यपि सम्भाव्यते । एवं कथाविषयकविचारे प्रौढ गौड नैयायिकमते चतस्रः कथाः सप्रतिपक्षस्थापनाहीनो वितण्डा (1-2-3) इत्यत्र जल्पवद् वादस्यापि परामर्शात् पुरुषाभिप्रायानुरोधेन चतुर्थोदाहरणस्याप्युपपत्तेरिति सनातनिरित्यमुद्रितायां न्यायपरिशुध्यां (1-11 1) उदयनाचार्येण निर्दिश्यते । एवं वर्धमानोपाध्यायेनापि सूत्रकारस्यैव क्रमविन्यास इति पूर्वाचार्यैस्सनातनिप्रभृतिरप्यभिधानात् इति तत्वबोधे निर्दिष्टः । शङ्करमिश्रेण वादविनोदे, (p. 2 ) द्वितीयवाचस्पतिमिश्रेण तत्वालोके, जयरामन्यायपञ्चाननेन न्यायसिद्धान्तमालायाञ्च निर्दिष्टोऽयं सनातनिः । तस्मान्न्यायसूत्राणां अथवा पञ्चमाध्यायस्य ईश्वरविषयकयुक्तीनां वा व्याख्याता सनातनिरिति वक्तुं शक्यते ।

तथा च न्यायकुसुमाञ्जलिप्रकरणे उदयनाचार्येण पूर्वाचार्योक्तासु ईश्वरसाधकयुक्तिषु काः युक्तयः स्वीकृताः, काश्च युक्तयः परिष्कृत्य वर्णिताः, काश्च युक्तयः युक्त्याभासा इति खण्डिताः, काश्च युक्तयः स्वोपज्ञा उद्भाविता इति नेदानीं वक्तुं शक्यन्ते कुसुमाञ्जलिप्रभावात् प्रचारात् प्रसाराच्च मन्दप्रचाराणां तेषां पूर्वेषां ग्रन्थानामिदानीं अनुपलम्भात् ।

अत्र आत्मा - जीव - ईश्वरान् अधिकृत्य विवदमानानां दार्शनिकानां सिद्धान्ताः सुलभबोधाय आपातः ज्ञानाय च केवलं रेखारूपेण सङ्क्षेपात् प्रतिपाद्यन्ते । एतेषां विस्तृतं विवरणन्तु प्रमाणप्रमेयविचारात्मके द्वितीयभागे तत्तद्विषयविचारावसरे भविष्यति ।



पूर्वमीमांसादर्शनतत्त्वानि आत्मा च
प्रमाणानि
प्रमाता आत्मा
(विहितकर्तव्यसमर्थ अधिकारी)
प्रमेयम्
(कर्तव्यं कर्म तदनुरोधात् सर्वम्)
प्राभाकरमते
वेदः
प्रत्यक्षम्
अनुमान
उपमान
अर्थापत्ति
भाट्टमते
वेदः
प्रत्यक्षम्
अनुमान
उपमान
अर्थापत्ति
अनुपलब्धि
ज्ञानम्
(कर्तव्यविधान भावना)
अज्ञानम्
(कर्तव्यासमर्थ भावना)
दुःखम्
(अज्ञानजन्यः मनस्तापः)
मोक्षः
(मानसी शान्ति)
वादः
अपौरुषेयत्वम्
स्वतः प्रामाण्यम्
अख्यातिः
अभिहितान्वय
(भाट्टमते)
अन्विताभिधान
(प्राभाकरमते)


सांख्यदर्शनतत्वानि आत्मा च
प्रमाणम्
प्रत्यक्षम्
अनुमान
शब्द
प्रमाता आत्मा
(अखण्डचिद्रूपः)
प्रमेयम्
(सविकारा प्रकृतिः)
अज्ञानम्
(ज्ञानावारकः
भावविशेषः)
ज्ञानम्
(प्रकृतिपुरुषान्यथा
ख्याति रूपः स्वरूपप्रकाशः)
दुःखम्
(प्रतिकूलभावना
विषयः)
मोक्षः
(प्रकृतिपुरुषयोरन्य
तरस्य औदासीन्यम्)
वादः
परिणामवादः
सदसत्ख्यातिः


योगदर्शने तत्त्वानि आत्मा च
प्रमाणम्
प्रत्यक्ष
अनुमान
शब्द
प्रमाता (आत्मा)
(नित्यः चिद्रूपः ईश्वरः)
प्रमेयम्
(ईशाधिष्ठिता
सविकारा प्रकृतिः)
ज्ञानम्
(ईश्वरसाध्यः
प्रकृति पुरुष भेदग्रहः)
अज्ञानम्
(ज्ञानप्रतिबन्धक
मोहशक्तिरूपम्)
दःखम्
(निषिद्धाचरणेन
उत्पन्नः चेतोविकारः)
मोक्षः
(ईशध्यानेन सकल
दुःखनिवृत्ति रूपं कैवल्यम्)
वादः
(परिणामवादः)



शाङ्कराद्वैतदर्शनतत्त्वानि आत्मा च
प्रमाणानि
प्रत्यक्ष
अनुमान
उपमान
शब्द
अर्थापत्ति
अनुपलब्धि
प्रमाता आत्मा
( अन्तःकरणावच्छिन्नं
चैतन्यम् )
प्रमेयम्
( मायिकं जगत् )
अविद्योपाधिकम्
जीवः
मायोपाधिकम्
ईश्वरः
ज्ञानम्
( सच्चिदानन्दोऽहं
इति ज्ञानम् )
अज्ञानम्
( त्रिगुणात्मकं
आवरण विक्षेप
शक्ति विशिष्टम् )
दुःखम्
( बाधनालक्षणं
जननमरणरूपम् )
मोक्षः
( ब्रह्मानन्दात्म
स्वरूपलाभः )
वादः
अभिन्ननिमित्तो
पादानकारणतावादः
अनिर्वचनीयवादः
विवर्तवादः


विशिष्टाद्वैतदर्शन तत्वानि आत्मा च
प्रमाणानि
प्रत्यक्ष
अनुमान
शब्द
प्रमाता आत्मा
( चेतनवान्
अणुरूप: )
प्रमेयम्
( सर्वं दृश्यमदृश्यञ्च
ईश्वरशरीरभूतम् )
अज्ञानम्
( विषयेषु ममत्व
भावना )
ज्ञानम्
( ईश्वरो नित्य: असंख्य
कल्याण गुणवानिति
भावना )
वाद:
दु:खम्
( नानाविध:
मानस:
ताप: )
मोक्ष:
( भगवत्कृपया
दु:खापुनरावृत्ति: )
परिणामवाद:
प्रपत्तिवाद:


द्वैतदर्शनतत्त्वानि आत्मा च
प्रमाणानि
प्रत्यक्ष
अनुमान
शब्द
प्रमाता (आत्मा)
(अणुरूप: हरे:
सेवक: )
प्रमेयम्
( परमात्मसृष्टं
जगत् )
ज्ञानम्
( अहं हरे:
सेवक इति
भावना )
अज्ञानम्
( परमात्मनिर्मितिषु
अतत्त्वमति: )
दु:खम्
( नानायोनिषु
सम्भूय दु:खानुभव: )
वाद:
मोक्ष:
( नैकसुखानुभव:
उत्तमलोके नित्य
सुखानुभव: )
सदसत्कार्यवाद
(आरम्भवाद:)
निमित्तकारणतावाद:

## वैशेषिकदर्शनतत्वानि आत्मा च




न्यायदर्शने आत्मा तत्त्वानि च
प्रमाणानि
प्रत्यक्ष
अनुमान
उपमान
शब्द
प्रमाता (आत्मा)
( ज्ञानसुखादिगुणवान्
नित्य आत्मा )
प्रमेयम्
प्रमाणप्रमेयाद्याः
षोडश पदार्थाः
ज्ञानम्
( आत्मनित्यत्व
भावना )
अज्ञानम्
( अनित्येषु देहादिषु
नित्यतामतिः )
दुःखम्
( आत्मत्व बुद्धिजन्यः
आत्मगुणविशेषः )
वादः
मोक्षः
दुःखध्वंसः
आत्मन्येव चरमो
दुःखनाशः
पिठरपाक
वादः
अभिहितान्वय
वादः
परिणाम
वादः
अन्यथाख्याति
वादः

कुसुमाञ्जलिव्याख्याः—

कुसुमाञ्जलिव्याख्याः द्विविधा दृश्यन्ते । गद्यपद्यात्मकस्य तस्य व्याख्याः काश्चन, केवलं कारिकाभागस्य काश्चन व्याख्याश्चेति । गद्यपद्यात्मकस्य तस्य व्याख्यासु अधोनिर्दिष्टा इदानीमुपलभन्ते—

1. जगद्गुरुकृता कुसुमाञ्जलिव्याख्या ।

ईश्वरवादे अदसीयं "अन्ये तु अनुकूल कृतिसमवायित्वं कर्तृत्वम्" इति कर्तृलक्षणं चिन्तामणिकारेण ( p. 1959 काशी संस्करणम् ) निर्दिश्यते । अस्यावतरणिकायां प्रगल्भाचार्येण अनुमानप्रागल्भ्यां सरस्वतीभवनस्थ यामुद्रितायां "जगद्गुरुमतमुपन्यस्यतीति निर्दिश्यते । तस्माद् जगद्गुरुणा काचन कुसुमाञ्जलि व्याख्या कृता स्यादिति सम्भाव्यते । अयमेव द्रव्यकिरणावलीव्याख्याता इत्यपि लन्डनकार्यालयस्थात् पक्षधरकृतात् द्रव्यकिरणावलीप्रकाशव्याख्यानात्मकाद् द्रव्यविवेकाख्यात् ग्रन्थाज् ज्ञायते ।

2. कुसुमाञ्जलि—बोधिनी ।

रामदेवमिश्रपुत्रेण मैथिलेन तार्किकरक्षाकर्त्रा वरदराजमिश्रेण द्वादशशतकीयेन (1150 A. D.) कृतेयं व्याख्या या प्रकरणपञ्चिकाकारं शालिकनाथं निर्दिशति सा सरस्वतीभवनग्रन्थमालायां (S. B. T. 4) मुद्रिता ।

3. कुसुमाञ्जलिव्याख्या—परिमलः ।

व्याख्येयममुद्रिता जैनपुस्तकालये पाटनानगरे विद्यते । अस्याश्च रचयिता विलासकरोपाध्यायापरनामा न्यायपरिशुद्धिव्याख्या—उद्योतकारः दिवाकरोपाध्यायः (1300 A. D.) इति ज्ञायते ।

4. कुसुमाञ्जलिव्याख्या—मकरन्दः ।

चिन्तामणिव्याख्यातेति प्रसिद्धेन रुचन्तोपाध्यायेन (1375 A. D.) कृता काचन मकरन्दाख्या व्याख्या आसीदिति शङ्करमिश्रकृतात् आशुतोषग्रन्थमालायां मुद्रितात् कुसुमाञ्जल्यामोदात ( श्लोकसंख्या 2 ), एवं प्रत्यक्षालोकपदर्शिन्यां कृष्णदाससार्वभौमनिर्देशात् (नव्यन्यायचर्चा pp. 114-123), बन्दरगारपुस्तकालयरक्षितात् पद्मनाभमिश्रकृतात् पक्षधरोद्धाराच्च ज्ञायते परं व्याख्या न लभ्यते ।

5. कुसुमाञ्जलिव्याख्या—प्रकाशः ।

महामहोपाध्यायबिरुदभूषितेन गङ्गेशोपाध्यायपुत्रेण तत्त्वबोधकर्त्रा प्रकाशकार इति प्रसिद्धेन वर्धमानोपाध्यायेन (1350 A. D.) कृतेयं व्याख्या काशीसंस्कृतग्रन्थमालायां (KSS. 30) बिब्लियोथिकाग्रन्थमालायां कलकत्तानगरे (BIS. 123) च मुद्रिता ।

प्रकाशव्याख्या—मकरन्दः ।

पक्षधरशिष्येण देवदत्तरेणुकादेव्योः पुत्रेण शक्तिदत्तनतिदत्तयोः भ्रात्रा विवृति-मकरन्द-लीलावतीविलासादिकर्त्रा रुचिदत्तमिश्रेण (1556 A. D.) कृतेयं व्याख्या काशीसंस्कृतग्रन्थमालायां, बिब्लियोथिकाग्रन्थमालायाञ्च (KSS. 30, BIS. 123) मुद्रिता ।

प्रकाशव्याख्या—प्रकाशिका-(जलदा) ।

चन्द्रपण्डितधरणिभवान्योः पुत्रेण महादेवज्येष्ठभ्रात्रा मेघठक्कुरापरनामक-भगीरथठक्कुरेण (1600 A. D.) कृतेयं प्रकाशव्याख्या काशीसंस्कृतग्रन्थमालायां (KSS. 30) मुद्रिता । एवं निरुक्तव्याख्या अज्ञातकर्तृनामधेया वर्धमानीय-प्रकाशव्याख्या टंसूच्यामेव दृश्यते ।

6. कुसुमाञ्जलिव्याख्या—दीधितिः ।

गोविन्दसीतादेव्योः पुत्रेण वासुदेवसार्वभौमशिष्येण तत्त्वचिन्तामणि-दीधित्यादिकर्त्रा रघुनाथशिरोमणिना (1475 A. D.) कृतेयं व्याख्या अमुद्रिता वाराणसेयसंस्कृतकलाशालासरस्वतीभवनपुस्तकालये लभ्यते ।

7. कुसुमाञ्जलिव्याख्या—आमोदः ।

भवनाथभवान्योः पुत्रेण जीवनाथभ्रातृज्येन मैथिलेन रघुदेवोपाध्यायशिष्येण वैशेषिकोपस्कारादिकर्त्रा अपरकाणादनामकेन शङ्करमिश्रेण (1500 A. D.) कृतेयं व्याख्या आशुतोषग्रन्थमालायां कलकत्तानगरे (Ash. S. S. 4.) मुद्रिता यस्या-स्तृतीयश्लोके स्वन्तोपाध्यायमकरन्दः निर्दिष्टः ।

8. कुसुमाञ्जलि—टिप्पणी ।

पीताम्बरविद्यानिधिपुत्रेण उमागर्भजेन चिन्तामणिव्याख्याचकरश्मि—दीधितिव्याख्याविद्योत—आलोकव्याख्यादिकर्त्रा अमृतोदयनाटकस्य च कर्त्रा गोकुलनाथोपाध्यायेन (1610 A.D.) कृतेयं टिप्पणी दर्भङ्गपुस्तकालये विद्यते ।

9. कुसुमाञ्जलिव्याख्या—गादाधरी ।

हरिरामतर्कवागीशशिष्येण जीवाचार्यपुत्रेण बङ्गदेशीयेन व्युत्पत्तिवादादिकर्त्रा गदाधरभट्टाचार्येण (1650 A.D.) कृता व्याख्या काचनासीदति कील्ह्रान् सूच्यामेव ज्ञायते न प्राप्तिस्थानादिकम् ।

10. कुसुमाञ्जलिव्याख्या—विलासः ।

गोस्वामिभट्टपुत्रेण जयसिंहराजाहृतेन पदार्थविवेकटीकागोवर्धनीयतर्कभाषा-प्रकाशव्याख्या-शब्दालोकरहस्यादिकर्त्रा गोपीनाथमौनिना (1650 A.D.) कृतेयं व्याख्या अमुद्रिता बरोडा—रायलासिटिकुण्ोसाइटिपुस्तकालयं लभ्यते ।

11. कुसुमाञ्जलिव्याख्या—तात्पर्यविवेकः ।

मधुसूदनठक्कुरशिष्येण गौडेन न्यायलीलावती-आलोक शब्दखण्ड—दीधित्यनुमानखण्डेषु विवेकाख्यव्याख्याकर्त्रा गुणानन्दविद्यावागीशेन (1700 A.D.) कृतेयं व्याख्या आशुतोषग्रन्थमालायां (Ash. S. S. 4) मुद्रिता ।

12–24. कुसुमाञ्जलि—व्याख्याः ।

रामपण्डितपुत्रेण गाडियावासिना बङ्गीयेन त्रिलोचनन्यायपञ्चाननेन (1700 A.D.) कृता काचन व्याख्याप्यासीदिति बङ्गीयन्यायचर्चायाः (p. 116) ज्ञायते । एवं रामगोविन्दतीर्थवासुदेवपण्डितयोः शिष्येण सिद्धान्तबिन्दुलघुव्याख्या (K. S. S. 65) सांख्यकारिकाव्याख्यमुक्तावलीव्याख्या—चन्द्रिका (H. S. S. 16) दिकर्त्रा नारायणतीर्थेन (1702 A.D.) कृता काचन कुसुमाञ्जलिव्याख्या कुरुक्षेत्रविश्वविद्यालयग्रन्थमालायां (No. ) मुद्रिता । एवं विद्यानिवासज्येष्ठपुत्रेण लीलावती—प्रकाशपरीक्षादीनां कर्त्रा परीक्षाकार इति प्रसिद्धेन रुद्रन्यायवाचस्पतिभट्टाचार्येण (1700–1800 A.D.) कृता काचन व्याख्या हाल्सूच्यामेव दृश्यते ।

एवं नवद्वीपवासिना रामशिष्येण त्रिलोचनदेवेन (1800 A.D.) कृता काचन व्याख्या अमुद्रिता वाराणसीपुस्तकालये लभ्यते। एवमाधुनिकेन महापण्डितेन आचारशीलेन N. S. रामानुजताताचार्यगुरुणा नावल्पाक्कं देवनाथाचार्येण (2000 A.D) कृता काचन व्याख्या या मूलार्थावबोधनोपकारिणी देवनाथाचार्यशताभिषेकसमित्या दक्षिणदेशीयकाञ्चीमण्डलान्तर्गतनावल्पाक्कग्रामादेव प्रकाशिता। एवं शिवचन्द्रपण्डितकृता काचन व्याख्या विद्योदयग्रन्थमालायां (No. 20) प्रकाशिता। एवमाधुनिकराधामोहनस्वामिना कृता व्याख्या, कामाख्यानाथतर्कवागीशकृता कृता व्याख्या, महेशचन्द्रन्यायरत्नकृता व्याख्या, अम्बाप्रसादशास्त्रिकृता व्याख्याश्च सन्ति। तासु अन्त्या मुद्रिता। एवं न्यायकुसुमाञ्जलितर्कनामा कश्चन ग्रन्थः अज्ञातकर्तृनामधेयः जैनेन गुणरत्नेन षड्दर्शनसमुच्चये निर्दिष्टः। विरूपाक्षशिष्येण वामध्वजेन कृता काचन व्याख्या आसीदिति राघवसूच्याः पूनाओरियण्टलपत्रिकायाश्च (Vol. IV pp. 170-73) ज्ञायते अन्या काचन नीलकण्ठकृता व्याख्या लक्ष्मणपुरीविश्वविद्यालयसूच्याः ज्ञायते।

25. कुसुमाञ्जलिव्याख्या—शोधना।

वङ्गेशजेन वैशेषिकसूत्रयोगसूत्रब्रह्मसूत्रादिव्याख्यात्रा प्रायशश्चत्वारिंशद्ग्रन्थानां प्रणेत्रा गङ्गाधरकविराजकविराजेन (1798–1885 A.D) निर्मितेयं व्याख्या गङ्गाधरमनीषाग्रन्थमालायां कलकत्तानगरे मुद्रिता।

26-27. कुसुमाञ्जलि—टीके।

महानैयायिकेन चन्द्रनारायणभट्टाचार्येण (1800 A. D.) कृता काचन टीका अमुद्रिता मीर्जापुरपुस्तकालये लभ्यते। एवं चन्द्रकान्ततर्कालङ्कारेण (1900 A. D.) कृता काचन टीका कलकत्तानगरे मुद्रिता।

28. कुसुमाञ्जलि—क्रोडपत्रम्।

वङ्गयोगिनीग्रामाभिजनेन नव्यनैयायिकचन्द्रनारायणगृहपाचकेन सता तस्मादेव गृहीतन्यायशास्त्रेण क्रोडपत्रकार इति प्रसिद्धेन कालीशङ्करभट्टाचार्येण (1800–1900 A. D.) रचितमिदं क्रोडपत्रं चौखम्भाग्रन्थमालायां (Ch.SS.25) मुद्रितम्।

29-30. कुसुमाञ्जलि—टिप्पण्यौ ।

रत्नपाणिझापौत्रेण दुर्गादत्तझापुत्रेण विशुद्धानन्दसरस्वतीविश्वनाथझा बबुजन-झाशिष्येण मैथिलेन धर्मदत्तबच्चाझशर्मणा (1860 A. D.) कृता काचन टिप्पणी काशीसंस्कृतग्रन्थालायां (K. S. S. 30) मुद्रिता । एवं धर्मदत्तबच्चाझशिष्येण मैथिलेन काशिहिन्दूविश्वविद्यालयदर्शनाध्यापकेन दर्भङ्गावासिना भामतीचतुस्सूत्री व्याख्यात्रा लक्ष्मीनाथझाशर्मणा (2000 A. D.) कुसुमाञ्जलिपञ्चमस्तबकस्य परं लिखिता काचन टिप्पणी काशीसंस्कृतग्रन्थमालायां (K.S.S.30) मुद्रिता ।

31. कुसुमाञ्जलिव्याख्या—आमोदः ।

राममूर्तिबुधेन्द्रशिष्येण आन्ध्रदेशजेन कोरल्लुरसोमशेखरशास्त्रिणा (2000 A. D.) कृतेयमाधुनिकी व्याख्या तिरुपतिकुसुमाञ्जलिसमित्या शास्त्रकल्पवल्ली-ग्रन्थमालायां (No. 1) मुद्रिता ।

32. कुसुमाञ्जलिव्याख्या—विस्तरः ।

काञ्चीमण्डलाभिजनेन तर्करत्नादिविरुदभूषितेन वैशेषिकदर्शनविमर्श—तर्क संग्रहव्याख्या—आपदेवीव्याख्यादिकर्त्रा प्रसिद्धेन पण्डितोत्तमेन उत्तमूरवीरराघवा-चार्येण (20th cen) कृतेयं व्याख्या मूलावबोधनोपकारिणी तिरुपतिनगरे मुद्रिता ।

## कुसुमाञ्जलिकारिकाव्याख्याः

गद्यपद्यात्मकस्य कुसुमाञ्जलिप्रकरणस्य काठिन्यात् गच्छता कालेन केवलं कुसुमाञ्जलिकारिकाध्ययनमेव सुतरामादृतमासीत् । तस्मादेव कारणात् केवलं कारिकाणामेव व्याख्याश्चोदभूवन् । तासु—

सर्वदर्शनकौमुदीकारेण मणिव्याख्यामयूखमाला—सप्तपदार्थीव्याख्यामित-भाषिण्यादिकर्त्रा वेदान्तिना कृष्णातीरवासिना माधवसरस्वत्या (1500 A.D.) कृता काचन व्याख्या आसीदिति सर्वदर्शनकौमुदीग्रन्थान्तनिर्देशादेव ज्ञायते (T.S.S. 135) न तु मातृकासनादि ।

कुसुमाञ्जलि—कारिकावृत्तिः।

वासुदेवसार्वभौमशिष्येण मणिप्रकाश-आलोकव्याख्याकर्त्रा वङ्गीयेन हरिदासन्यायालङ्कारेण (1600 A.D.) कृतेयं कारिकाव्याख्या न्यायालङ्कारापराभिधा वाराणस्यां मुद्रिता। व्याख्येयं मूलग्रन्थसारांशभूता मूलग्रन्थापेक्षया सुगमा च। परन्तु अदसीयायां व्याख्यायां मूलकारिकासु क्वचित् पाठभेदो दृश्यते। क्रकच मुद्रितहरिदासीयवृत्तेः पञ्चमस्तबके 'उद्देश एव तात्पर्य'मित्यादि कारिका तदुक्तमित्यन्योक्तिप्रकारेण उद्धृता व्याख्याता च। न तु कुसुमाञ्जलिकारिकात्वेन स्वीकृता। अत्र कारणन्तु सम्प्रदायविद एवं वदन्ति—

पुरा मिथिलाप्रदेश एव अधिकतया न्यायशास्त्रस्य चर्चा आसीत्। अतश्च वङ्गीयास्तत्र गत्वा न्यायशास्त्राध्ययनमकुर्वन्। मैथिला अध्यापकास्तानध्याप्य तेषां स्वदेशप्रतियानसमये तल्लिखितानि न्यायपुस्तकानि बलादाक्षिप्य नयन्ति स्म। ततश्च वङ्गीयाः ग्रन्थं कण्ठस्थं कृत्वा स्वदेशमागत्य अलिलिखन्। हरिदासोऽपि कुसुमाञ्जलिकारिकांशम्, गद्यांशञ्च कण्ठस्थं कृत्वा स्वदेशमागत्य यथास्मृति व्याख्यातवान्। अत एव स्मृतिशैथिल्यात् क्वचित् क्वचित् पाठभेदस्सम्भाव्यत एवेति।

हरिदासीयवृत्तेर्व्याख्याः।

शाण्डिल्यगोत्रजेन लक्ष्मीनाथमिश्रबुद्धिमत्योः पुत्रेण मैथिलेन नारायणमिश्रेण (1969 A.D.) कृता काचन व्याख्या भारतीविद्याप्रकाशने वाराणस्यां मुद्रिता। वैद्यनाथभट्टाख्येन केनचित् पण्डितेन कृता काचन सौरभाख्या हरिदासीयवृत्तेर्व्याख्या अमुद्रिता तिरुवनन्तपुरपुस्तकालये मिथिलापुस्तकालये च लभ्यते। अन्या काचन गोस्वामिभट्टाचार्यकृता व्याख्या हरप्रसादसूच्यां दृश्यते।

कुसुमाञ्जलि—कारिकाव्याख्याः।

जानकीनाथभट्टाचार्यचूडामणिपुत्रेण रामभद्रसार्वभौमेन (1600—1700 A.D.) कृता काचन व्याख्या आशुतोषमुखर्जीग्रन्थमालायां (Ash. S. S. 2) मुद्रिता। जर्नल आफ् एशियाटिक सोसाइटि बंगालपत्रिकायां (Vol. XI pp. 280-1) परामृष्टा च।

एवं हरिरामतर्कवागीशचिरञ्जीवभट्टाचार्यशिष्येण मणिव्याख्यागूढार्थदीपिका-कर्त्रा रघुदेवन्यायालङ्कारेण (1650 A D.) कृता काचन कारिकाव्याख्या अमुद्रिता वाराणसीसर्वकारीयपुस्तकालये लभ्यते । एवं पूर्वोक्तपत्रिकायां (Vol. XI 1915 p. 289) परामृष्टा ।

एवं न्यायसिद्धान्तमालादिबहुग्रन्थकर्त्रा रामभद्रशिष्येण लौगाक्षिभास्कर जनार्दनव्यासयोर्गुरुणा वाराणसीवासिना जयरामन्यायपञ्चाननेन (1657 A.D.) कृता काचन कारिका व्याख्या विवृत्यभिधा अमुद्रिता दर्भङ्गापुस्तकालये लभ्यते । सरस्वतीमहालयस्थ—एतदीय पदार्थमालायां निर्दिष्टा च । सरस्वतीमहालयपत्रिकायाः प्रथमभागे (I - 1 - 1939 pp. 14 - 18) एवं पूर्वोक्तपत्रिकायां (Vol. XI 1915 p: 283) परामृष्टा च ।



## कुसुमाञ्जलिव्याख्याः

- आमोदः
  - शङ्करमिश्रीयः
  - सोमशेखरीयः
- क्रोडपत्रम्
- टिप्पणी
  - गोकुलनाथीया
  - लक्ष्मीनाथीया
  - धर्मदत्तीया
- टीका
  - चन्द्रकान्तीया
  - चन्द्रनारायणीया
- तर्क
- दीधितिः
- परिमलः
- प्रकाशः
  - निरुक्तिः
  - प्रकाशिका
  - मकरन्दः
- बोधिनी
- मकरन्दः
- विलासः
- विस्तरः
- व्याख्याः
  - अम्बाप्रसादीया
  - कामाख्यानाथीया
  - गादाधरी
  - जगद्गुरुकृता
  - त्रिलोचनदेवीया
  - त्रिलोचनीया
  - देवनाथीया
  - नारायणीया
  - नीलकण्ठीया
  - महेशचन्द्रकृता
  - राधामोहनकृता
  - रुद्रन्यायकृता
  - वामध्वजकृता
  - शिवचन्द्रकृता
- शोधना

प्रमाणप्रमोदः—ग्रन्थोऽयं कुसुमाञ्जलिपरम्परायामागत ईश्वरसाधकानुमानानि प्रतिपादयति। "कार्यायोजनधृत्यादे" रित्यादिकारिकया कुसुमाञ्जल्युक्ताः युक्तीर्विशदयन् ईश्वरं साधयति। तत्र तत्र हेतुं परिष्कुर्वन्नयं ग्रन्थः नव्यन्यायशैल्या निबद्धः। ईश्वरसाधकानि प्रमाणानि हेतुनवकैरत्र प्रतिपादितानि—

1. जन्यकृत्यजन्यो जन्यो भावः स्वोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिजन्यः जन्यभावत्वात् (कार्यत्वात्),

2. सर्गाद्यकालीनद्व्यणुकजनकारम्भकसंयोगजनकं कर्म प्रयत्नजन्यम्, कर्मत्वात् चेष्टावत्,

3. क्षितौ पतनाभावः पतनप्रतिबन्धकप्रयोज्यः गुरुवृत्तिपतनाभावत्वात्, घटादिवृत्तिपतनाभाववत्।

4. जन्यकृत्यजन्यो नाशः अदृष्टमद्वारीकृत्य प्रयत्नप्रयोज्यः नाशत्वात् मुद्गरप्रहारप्रयोज्यघटनाशवत्,

5. सामान्यतो वाग्व्यवहारो लिप्यादिव्यवहारो वा स्वतन्त्रपुरुषविश्रान्तः व्यवहारत्वात् चैत्रबुद्धिवैलक्षण्यप्रयुक्तापूर्वव्यवहारवत्,

6. सर्गाद्यकालीनवेदवाक्यजन्या शाब्दप्रमा वक्तृवाक्यार्थयथार्थज्ञानजन्या शाब्दप्रमात्वात्,

7. वेदाः पौरुषेयाः वेदत्वात्, यन्नैवं तन्नैवं यथा घटः,

8. वेदाः पुरुषोच्चारिताः वाक्यत्वात् चैत्राद्युच्चारितवाक्यवत्,

9. द्व्यणुकपरिमाणं संख्याजन्यं परिमाणप्रचयाजन्यत्वे सति जन्यपरिमाणत्वात्, इति। ग्रन्थोऽयं लालबहदूरशास्त्रि संस्कृतविद्यापीठग्रन्थमालायां (No. 6) मुद्रितः। ग्रन्थोऽयं प्रमाणविनोदनाम्ना सरस्वतीभवनलघुग्रन्थमालायां (SBT. 12) पूर्वम् प्रकाशितश्च।

अस्य रचयिता मैथिलः चतुर्भुजप्रपौत्रः वंशधरपुत्रः रुद्रधरपिता चित्रधरपण्डितः (1800 A.D.) अस्य पित्रा वंशधरेण न्यायसूत्रव्याख्या अन्वीक्षातत्वपरीक्षाख्या कृता या चामुद्रिता मिथिलापुस्तकालये विद्यते। चित्रधरकृतः प्रतियोग्यारोपविचारः,

विभक्त्यर्थनिर्णयश्चेति ग्रन्थद्वयममुद्रितं मिथिलापुस्तकालये लभ्यते। अनेन काव्या-न्यप्यन्यानि विरचितानीति ज्ञायते।

प्रमाणप्रमोदव्याख्या—बबुजनझापुत्रेण बबुआ उपनामकेन दुःखमोचन झापण्डितेन विरचिता व्याख्येयं तत्रैव मुद्रिता।

## वाक्यार्थज्ञानविषयकाः ग्रन्थाः

घटपदादेः समवायसम्बन्धेन सम्बन्ध्याकाशविषयकोपस्थितिबलात् आकाश-विषयकशाब्दबोधवारणाय तत्तत्पदजन्यशाब्दबोधे तत्तत्पदनिष्ठवृत्तिज्ञानाधीनतत्त-द्विषयकोपस्थितिः कारणमिति वक्तव्यम्। एवं घटं पश्यतीत्यादिवाक्यात् आकाशं पश्यतीति शाब्दबोधवारणाय च आकाङ्क्षासंनिधिप्राप्तयोग्यार्थान्तरसङ्गतान् स्वार्थानाहुः पदानीति व्युत्पत्तिश्च स्वीक्रियते। तत्र वृत्तिश्च शाब्दबोधहेतुपदार्थोप-स्थित्यनुकूलः पदपदार्थयोः सम्बन्ध इत्युच्यते। एवञ्च आकाशोपस्थितेर्वृत्तिज्ञान-जन्यत्वाभावात् न शाब्दबोधजनकत्वम्। सम्बन्धश्च आकाङ्क्षायोग्यतासत्ति तात्पर्यज्ञानजन्य इतीयं प्रक्रिया शाब्दबोधे।

शाब्दबोधो नाम शब्दप्रयोज्यः प्रमाविशेषः। स च अतिरिक्त एव शब्दस्य प्रमाणान्तरत्वात्। प्रत्यक्षानुमानद्वयस्यैव प्रमाणत्वमङ्गीकुर्वतां मते शाब्दबोधस्यानुमान एवान्तर्भावो वक्तव्यः। अनुमितिस्थले सर्वत्रैव व्याप्तिज्ञानं परामर्शश्चापेक्ष्येते, शाब्दबोधस्थले तु व्याप्तिज्ञानादिकं विनापि आकाङ्क्षाज्ञानादिघटितायाः अन्य-विधसामग्र्याः शाब्दबोधोत्पत्तिर्जायत इति शाब्दबोधस्यानुमितित्वं न सम्भवति। पर्वते वह्निनिश्चयोत्तरं सिषाधयिषामन्तरेण अनुमितिर्न भवति, सिषाधयिषायां सत्यान्तु अनुमितिर्भवत्येव। शाब्दबोधस्तु निश्चयसत्त्वेऽपि इच्छां विनापि भवत्येवेति अनयोर्वैलक्षण्यदर्शनात् शब्दस्य शाब्दबोधस्य च प्रमाणान्तरत्वं सिध्यति। शाब्दबोधस्य प्रमाणान्तरत्वस्वीकारे शाब्दबोधानन्तरं जायमाने अहममुमर्थं शृणोमि, शाब्दयामि इत्याद्यनुव्यवसाये यद्विलक्षणा शाब्दबोधरूपा प्रमा भासते तस्यापलापः कर्तव्यो भवेत्। अभिमतमर्थं अन्यानवबोधयितुमेव सर्वे शब्दाः प्रयुज्यन्ते।

तेभ्यश्शब्देभ्य अभिमतानामर्थानां सम्बन्धमवगाह्य एकपदार्थेन अपरपदार्थस्य संसर्गरूपो योऽन्वयरूपस्तादृशबोध एव शाब्दबोधः, वाक्यार्थबोध इति नाम्ना व्यवह्रियते । एवञ्च शक्तिलक्षणान्यतरसम्बन्धेन पदजन्यपदार्थस्मृतित्वावच्छिन्नकारणतानिरूपितकार्यत्वं शाब्दबोधत्वमिति वक्तव्यम् । शाब्दबोधे च वृत्तिज्ञानसकृतं पदज्ञानं करणम् । पदार्थोपस्थितिर्व्यापारः । पदज्ञानस्य च शक्तिज्ञानं आकाङ्क्षायोग्यतासन्निधीनां ज्ञानं सहकारि ।

न्यायमते शक्तिर्लक्षणाचेति वृत्तिर्द्विविधैव, न तु व्यञ्जनावृत्तिरिति तृतीया अभ्युपेयते । यतः शब्दशक्तिमूलव्यञ्जनावृत्तिः शक्त्या, अर्थशक्तिमूलव्यञ्जनावृत्तिरनुमानेन च चरितार्था भवति । यथा दूरस्थाः भूधरा रम्या इत्यत्र भूधरपदस्य पर्वतनृपयोः समाना शक्तिरेव अङ्गीक्रियते । गच्छ गच्छसि चेत् कान्त तत्रैव स्याज्जनिर्मम इत्यादौ इयं कान्ता भर्तृगमनोत्तरकालिकमरणव्यापारवती एतादृशविलक्षणशब्दप्रयोगकर्तृत्वात् इत्यनुमानेनैव अर्थशक्तिमूलव्यञ्जनया बोध्यस्य मरणरूपार्थस्य बोधनात् व्यञ्जनावृत्तेरनभ्युपगम इति वृत्तिर्द्विविधैव । एवं न्यायमते शक्तिज्ञानजन्या शाब्दबोधसामग्री त्वेवम्—प्रथमं पदज्ञानम्, ततश्शक्तिज्ञानम्, द्वाभ्यामुपस्थितिः ततश्शाब्दबोधः । यथा घटमानयति इत्यत्र प्रथमं घटपदज्ञानम्, तत अम्पदज्ञानम्, तदनु आङ्पूर्वक नय्धातुज्ञानम्, तत आख्यातज्ञानम् । अस्य पदज्ञानमिति व्यवहारः । ततः घटपदस्य कम्बुग्रीवादिमति वस्तुनि शक्तिः । अम्पदस्य कर्मत्वे शक्तिः, आङ्पूर्वकस्य नय्धातोरानयने शक्तिः । आख्यातस्य कृतौ शक्तिरितीदं शक्तिज्ञानमित्युच्यते । ततः घटपदात् घटस्य, अम्पदात् कर्मत्वस्य आङ्पूर्वकनय्धातोः आनयनस्य आख्यातात् कृतेश्चेति उपस्थितयः भवन्ति । ततश्च आकाङ्क्षायोग्यतासन्निधितात्पर्यज्ञानादिसामग्रीबलात् घटकर्मकानयनानुकूलकृतिमान् चैत्र इति घटकर्मकानयनानुकूलकृतिप्रकारकः चैत्रविशेष्यश्चेति बोधो भवति । एवं लक्ष्यार्थविषयकशाब्दबोधसामग्री त्वेवम्—प्रथमं पदज्ञानम्, तदनु शक्तिज्ञानम्, द्वाभ्यां शक्यार्थोपस्थितिः । तत अन्वयानुपपत्तेः तात्पर्यानुपपत्तेर्वा ज्ञानम्, तदनु लक्ष्यपदार्थे तात्पर्यज्ञानम्, ततः लक्ष्यपदार्थोपस्थितिः तदनु लक्ष्यपदार्थविषयकश्शाब्दबोध इत्येवं क्रमः । यथा गङ्गायां घोष इत्यत्र प्रथमं

गङ्गापदज्ञानम्, तदनु सप्तमीविभक्तिज्ञानम्, तदनु गङ्गादिपदानां शक्तिज्ञानानि, तदनु प्रवाहाद्युपस्थितयः तदनु प्रवाहवृत्तित्वं घोषे अनुपपन्नमित्यन्वयानुपपत्तिज्ञानम्, तदनु गङ्गापदस्य प्रवाहवाचकत्वे तीरे वक्तृतात्पर्यमनुपपन्नमिति तात्पर्यानुपपत्तिज्ञानम्, तदनु गङ्गापदं तीरे लाक्षणिकमिति लाक्षणिकत्वज्ञानम्, ततः गङ्गापदात् तीरमित्युपस्थितिः। तदनु आकाङ्क्षादिसामग्रीवलात् गङ्गातीरवृत्तिर्घोष इति शाब्दबोधो भवति। लक्षणास्थले कुत्रचिदन्वयानुपपत्तिः लक्षणाबीजम्, यथा गङ्गायां घोषः, मञ्चाः क्रोशन्तीत्यादौ। कुत्रचित्तात्पर्यानुपपत्तिः लक्षणाबीजम्, यथा यष्टीः प्रवेशय, छत्रिणो यान्तीत्यादौ। तात्पर्यानुपपत्तेः सर्वत्रापि सम्भवेन सर्वत्रापि तात्पर्यानुपपत्तिरेव लक्षणाबीजमिति सिद्धान्तः। प्रकरणादिकं तु तात्पर्यग्राहकम्, तच्च प्रकरणं सन्दर्भभेदेन देशकालाद्यन्यतमरूपतां भजते। नानार्थकस्थले सैन्धवमानयेत्यादावेव तात्पर्यज्ञानस्यावश्यकता न सर्वत्र शाब्दबोधे तस्यावश्यकतेति, शाब्दबोधसामान्यं प्रति तात्पर्यज्ञानं कारणमिति च मतद्वयम्।

तत्र शाब्दबोधो द्विविधः—लौकिको वैदिकश्चेति। तत्र आप्तवाक्यजन्यबोधो लौकिकः। श्रुतिस्मृत्यादिजन्यबोधो वैदिकः। प्रत्येकं खण्डशाब्दबोधः अखण्डशाब्दबोधश्चेति द्विविधं भवति। घटमानय इत्यत्र घटपदस्य घटोऽर्थः, द्वितीयायाः कर्मत्वमर्थः, आङ्पूर्वकनयधातोः आनयनम्, आख्यातस्य कृतिश्चार्थः। एवंरूपः खण्डशाब्दबोधः। अखण्डशाब्दबोधस्तु घटकर्मकानयनानुकूलकृतिमान् त्वमित्याकारको भवति। खण्डशाब्दबोधस्तु शाब्दबुद्धिसौकर्याय भवति। अखण्डशाब्दबोधस्यैव मुख्यं शाब्दबोधत्वं स्वीक्रियते।



तत्र शाब्दबोधे भासमानस्सम्बन्धो द्विविधः। शक्तिभास्यः, आकाङ्क्षाभास्यश्चेति। पदार्थेन सह पदार्थतावच्छेदकीभूतस्य घटत्वादेः सम्बन्धस्तु शक्तिभास्य एव, पदार्थद्वयस्य सम्बन्धस्तु आकाङ्क्षाभास्यः। तत्र प्रभाकरमीमांसकानां मते शब्दार्थयोः वाच्यवाचकभावरूपश्शक्तिरूपस्सम्बन्धस्स्वाभाविक एवेति अपौरुषेयता स्वीक्रियते। गवादिपदानां देवदत्तादिपदानाञ्च पुरुषसङ्केतग्रहाधीनैव अर्थप्रतीतिरिति शब्दार्थयोस्सम्बन्ध न अपौरुषेय इति नैयायिकाः।

वैयाकरणमते भावप्रधानमाख्यातमिति नियमेन भावार्थमुख्यविशेष्यक-शाब्दबोधोऽङ्गीक्रियते। भावो नाम धात्वर्थः। प्रधानं विशेष्यम्। एवञ्च घटमानयति इत्यत्र चैत्रकर्तृकं घटकर्मकमानयनमिति बोधः। चैत्रो ग्रामं गच्छति इत्यत्र ग्रामाभिन्नाश्रयनिष्ठसंयोगानुकूलः चैत्रकर्तृकः वर्तमानकालवृत्तिर्व्यापारः इति बोधः। मीमांसकते तु आख्यातार्थमुख्यविशेष्यकबोध अङ्गीक्रियते। यथा घटमानयति इत्यत्र घटकर्मकानयनानुकूला चैत्रसमवेता कृतिरिति। न्यायमते तु प्रथमान्तार्थमुख्यविशेष्यकशब्दबोध एवाङ्गीक्रियते यथा घटकर्मकानयनाकूलकृतिमान् चैत्र इति बोधः। चैत्रो ग्रामं गच्छति इत्यत्र ग्रामनिष्ठसंयोगानुकूलव्यापारानुकूल-वर्तमानकृतिमान् चैत्रः इति प्रथमान्तार्थमुख्यविशेष्यकबोधो नैयायिकानाम्।

इयं शाब्दबोधप्रक्रिया वाचस्पतिमिश्रेण लिङर्थस्य इष्टाभ्युपायतायाः क्रियायामन्वयकथनद्वारा विधिर्विधायक इति न्यायसूत्रविवरणावसरे सूचिता। कृतिराख्यातार्थः, तस्याश्च भावनायामन्वयः, संख्यापि आख्यातार्थमेवान्वेति, इत्यादिनियमविशेषनिरूपणमुखेन कुसुमाञ्जलाविंय प्रक्रिया ईषदिव प्रकटिता। मणिकारेण समासे एकार्थीभावसामर्थ्यं विनैव समस्यमानपदार्थान्वयकथनेन उपसर्गाणां द्योतकत्वव्यवस्थापनेन जानातीत्यादौ लकारस्य साधुतासम्पादकतायाः व्यवस्थापनेन धात्वर्थादिविचारेण च सा प्रक्रिया परिष्कृता आसीत्। जगदीश-भट्टाचार्येण शब्दशक्तिप्रकाशिकायां शाब्दबोधोपयोगिनः सर्वे प्रमेयाः सुबर्थतिङर्थ-समासार्थाश्च प्रतिपादिताः। शब्देऽपि प्रकृतिप्रत्ययभेदेन द्वौ विभागौ भवतः। गदाधरभट्टाचार्येण व्युत्पत्तिवादे प्रत्ययार्थाः, शक्तिवादे प्रकृत्यर्थाश्च परिष्कृत्य


वाक्यार्थबोधवादे दार्शनिका वादिनः वादाश्च
मीमांसकाः
भाट्टमीमांसकाः
प्रभाकरमीमांसकाः
वैदिकशब्दाः
अभिहितान्वयवादः
अन्विताभिधानवादः
स्वतः प्रमाण्य वादः
अपौरुषेयत्व वादः
लौकिकाश्शब्दाः
अनुवादकत्ववादः
वैयाकरणाः
मीमांसकाः
नैयायिकाः
धात्वर्थमुख्यविशेष्य क.ववादः
अर्थभावनामुख्य विशेष्यकत्ववादः
प्रथमान्तार्थमुख्य विशेष्यकत्ववादः

विचारिताः। न च, यदि इत्यादीनां अव्ययानां शाब्दबोधोपयोगी परिष्कृतोऽर्थः त्रिंशच्छ्लोकीकारेण विचारिताः। एवं क्रमेण शाब्दबोधप्रक्रिया न्यायशास्त्रे प्रधानं प्रस्थानमासीत्। तेषु ग्रन्थाश्चोत्तमा उदभूवन्। तेषु प्रथमा शब्दशक्तिप्रकाशिका—

काशीसंस्कृतग्रन्थमालायां (No. 109) मुद्रितोऽयं ग्रन्थः शाब्दबोधोपयोगि-सकलप्रमेयान्निरूपयति। सुबर्थतिङर्थसमासार्थान् विस्तरेण प्रतिपादयति।

नाम – समास – सुप् – कारक – आख्यात – तद्धिताख्यैः प्रकरणषट्कैः पूर्णोऽयं ग्रन्थः। नामप्रकरणे शब्दप्रमाण्यसाधनपूर्वकं सार्थकशब्दं निरूप्य प्रकृति-लक्षणमुपवर्ण्य प्रत्ययलक्षणं विभागञ्च उक्त्वा, निपातानां नाम्नाञ्च लक्षणानि भेदा-श्चोपवर्णिताः। प्रसङ्गात् जातिशक्तिवाद उत्थाप्य खण्डितः। तत्प्रसङ्गात् गोत्वादिजातिशक्त्यैव गवादिपदेन लक्षणया गोत्वादिविशिष्टा शक्तिर्बोध्यत इति मण्डनमिश्रमतमनूद्य खण्डितम्। एवं शक्तिर्हि शक्यकार्यापेक्षया, कार्यञ्च विशिष्ट-ज्ञानविषयतयैवेत्येकैव सा, तस्याश्च विशिष्टगोचरता विशिष्टज्ञानविषयतयैवेति विशिष्टगोचरा शक्तिरेकैव, जातिनिष्ठतया ज्ञाता उपयुज्यते, व्यक्तौ तु स्वरूपसती उपयुज्यते इति वदतां प्रभाकरमीमांसकानां मतमुपवर्ण्य, तस्यार्धजरतीयतावर्णनपूर्वकं खण्डनं कृतम्। शक्तिग्रहे वृद्धव्यवहारस्यैव प्राथम्यमुपवर्ण्य तत्प्रसङ्गात् प्राभाकरा-भिमतः अन्विताभिधानवाद अनूद्य खण्डितः।

समासप्रकरणे — अव्यवहितोत्तरत्वसम्बन्धावच्छिन्नयादृशानुपूर्व्यवच्छिन्न-प्रकारक – स्वतलादिविशेष्यकज्ञानम् यादृशार्थनिष्ठप्रकारताक – स्वतलाद्यर्थविशेष्य-कान्वयबोधजनकं महावाक्यघटकतादृशानुपूर्वीमच्छब्दत्वं तादृशार्थे समासत्वमिति परिष्कृतं समासलक्षणमुपर्णितम्। समासस्य सप्तधा भेदवर्णनं कृत्वा वाग्भटाद्युक्तस्य पञ्चधा विभागस्य असाङ्गत्यमुपवर्ण्य, जयादित्योक्तं समासस्य नित्यानित्यत्वविभाग-मुपवर्ण्य सर्वेषां समासानां लक्षणमुदाहरणञ्च विशदीकृतम्। सुब्विभक्तिप्रकरणे तद्धितान्तकृदन्तनाम्नोर्लक्षणम्, शब्दसंस्कारानुगुणलिङ्गभेदेन नाम्नो विभागः, धातुलक्षणमुक्त्वा तस्य त्रैविध्यमुपवर्ण्य प्रत्ययानां चातुर्विध्यम्, विभक्तिविभागश्चोप-

वर्णिताः । तत्र तद्धितघटितयादृशानुपूर्वीप्रकारकनिश्चयत्वम् यादृशार्थबोधजनकतावच्छेदकम्, तादृशानुपूर्वीमच्छब्दत्वं तादृशार्थे तद्धितान्तनामत्वमिति तद्धितान्तलक्षणम्, एवं यद्धातुयादृशर्थनिष्ठविषयतानिरूपितयादृशार्थनिष्ठविषयाभिन्नविषयतानिरूपितकिञ्चिद्विषयताकान्वयबोधं प्रति यादृशानुपूर्वीप्रकारकनिश्चयत्वं जनकतावच्छेदकं तादृशार्थकतद्धातुघटिततादृशानुपूर्वीमच्छब्दत्वं तादृशार्थधात्वर्थान्विततादृशस्वार्थबोधने कृदन्तनामत्वमिति कृदन्तलक्षणम्, स्वाश्रयोत्तरकुचिन्तनाभावविशिष्टयादृशानुपूर्वीप्रकारकनिश्चयत्वं सुबर्थधर्मिकस्वाश्रयोपस्थाप्ययादृशार्थान्वयबोधजनकतानवच्छेदकं तादृशानुपूर्वीमच्छब्दत्वं तादृशधातुत्वमिति, यः स्वोत्तरकृतं विना सुबर्थविशेष्यकान्वयबोधेऽहेतुः स धातुरिति च धातुलक्षणम्, यादृशानुपूर्वीप्रकारकनिश्चयत्वं स्वार्थधर्मिकस्वाश्रयप्रकृत्यर्थविधेयकान्वयबोधजनकतावच्छेदकं यादृशानुपूर्वीमच्छब्दत्वं विभक्तित्वमिति विभक्तिलक्षणम्, प्रकृत्यर्थधर्मिकस्वार्थसंख्यान्वयबोधकविभक्तित्वं सुप्त्वमिति सुप्लक्षणञ्चेति लक्षणानि परिष्कृतानि । कारकप्रकरणे अपादान-सम्प्रदान-करण-अधिकरण-कर्मकारकादीनां लक्षणोदाहरणानि उपपदविभक्तयश्च प्रतिपादिताः । आख्यातप्रकरणे तिङ्लक्षणम्, लकारलक्षणानि अर्थाश्च विचारिताः । तद्धितप्रकरणे विभक्तिधात्वंशकृद्भ्योऽन्यः प्रत्ययस्तद्धितमिति तद्धितप्रत्ययलक्षणमुक्त्वा अपत्यार्थकचातुरर्थिकशैषिकप्रत्ययानामर्था उदाहरणानि चोपवर्णितानि ।

सर्वत्र प्रथमं कारिकाभिर्विषयमुपक्रम्य तद्व्याख्याव्याजेन विचारप्रधानोऽयं ग्रन्थः । विभक्त्यर्थनिरूपणावसरे वैयाकरणानुशासनप्रस्तावे प्राधान्येन पाणिनीयसूत्राणि न प्रमाणितानि, कातन्त्रभागुर्यादीनामनुशासनानि प्रमाणितानि । कर्मकारकार्थविचारावसरे बहूनां प्राचीनानां नैयायिकानां मतं वर्णितम् खण्डितञ्च । अत्रोक्ताः बहवो ग्रन्थाः ग्रन्थकर्तारश्च इदानीमपरिचिता एव दृश्यन्ते ।


शब्दशक्तिप्रकाशिकायां शब्दविभागः
सार्थकशब्दः
प्रकृतिः
प्रत्ययः
निपातः
नाम
धातुः
रूढ (संज्ञा)
लक्षक
योगरूढ
यौगिक
परस्मैपद
आत्मनेपद
उभयपद
मूल
सौत्र
प्रत्ययान्त
नैमित्तिकी
पारिभाषिकी
औपाधिकी
सामासिक
तद्धितान्त
जहत्स्वार्थ
अजहत्स्वार्थ
निरूढ
आधुनिक
गौण
समास
तद्धितान्त
कृदन्त
कर्मधारय
द्विगु
तत्पुरुष
अव्ययीभाव
बहुव्रीहि
द्वन्द्व
तद्धितार्थ
उत्तरपद
समाहार

## शब्दशक्तिप्रकाशिकायां प्रत्ययविभागः



ग्रन्थेऽस्मिन् आलङ्कारिक - नव्यवैशेषिक - प्राभाकर भाट्टमीमांसक - जरन्मीमांसक प्राचीनमीमांसक-वैयाकरणानां सिद्धान्ताः ग्रन्थकर्तृनामनिर्देशं विनैव अनूद्य खण्डिताः। उदयनस्य किरणावली, तत्त्वचिन्तामणिः, दीधितिः, न्यायरहस्यम् (p. 132), मीमांसामहार्णवः (p. 336), रत्नकोषः (p. 417), इतीमे ग्रन्थाः निर्दिष्टाः। अभियुक्त-कालाप-कौमार-पाणिनीय-मैथिल शब्देन केचन ग्रन्थकर्तारः निर्दिष्टाः। अमरसिंहः, परिशिष्टकृच्छब्देन उदयनः, उमापतिः (p. 51), जुमरनन्दी (p. 208) दण्डी, दुर्गसिंहः, देवीपुत्रः (p. 132), पक्षधरमिश्रः भर्तृहरिः, मणिकृच्छब्देन गङ्गेशः मण्डनः, मण्डनमिश्रः, रघुनाथशिरोमणिः, वागीशः (pp. 315, 319), श्रीकरः (p. 86), श्रीपतिः (pp. 181, 248), सुभूतिः (p. 265), वत्सेश्वरः (p. 336) सोन्दडः (p. 448), इतीमे नवीनप्राचीनाचार्याश्च निर्दिष्टाः।

अस्य रचयिता सनातनिमिश्रप्रपौत्रः माधवमिश्रपौत्रः यादवचन्द्रविद्यावागीश-पुत्रः मैथिलः मिश्रकुलोत्पन्नः रघुनाथरुद्रेश्वरयोः पिता रामभद्रसिद्धान्तवागीशपितामहः काश्यपगोत्रजः रामभद्रसार्वभौमभवानन्दसिद्धान्तवागीशयोश्शिष्यः जगदीश-तर्कालङ्कारभट्टाचार्यः (1600 A.D)

एनमधिकृत्य कथेयं प्रसिद्धा - अष्टवर्षदेशीयोऽयं अनधीतविद्यः, दुराचारी सन् कदाचित् पक्षिशावकानाहर्तुं यदा वृक्षमारुरोह तदा तत्रस्थं कृष्णसर्पं निर्भयं स्वीयदृढमुष्ट्या ग्रीवामाक्रम्य तालवृक्षे निघृष्य अच्छिनत्। तस्य निर्भीकतां प्रत्युत्पन्नमतित्वञ्चालोक्य केनापि साधुना उपदिष्टः विद्याभ्यासतत्परोऽभूत्। पितृविहीनः घोरदारिद्र्यपीडितोऽयं दीपप्रज्वालनाय तैलमपि क्रेतुमनीशः शुष्कवंशपत्राणि प्रज्वाल्य तत्प्रकाशे पापठीति स्म। रात्रौ पठने निद्रामन्तरायं मत्वा निद्रादूरीकरणाय स्वशिखां रज्वा उपरितनप्रदेशे बध्वा अपठत्। निद्राभिभवकाले शिखाविकर्षणेन निद्राभङ्ग अभवत्। एवं रात्रिन्दिवं अध्ययनपर अचिरेणैव कालेन वैदुष्यमाप। पूर्वमन ध्ययनदशायां जगा इति निकर्षसूचकेन शब्देन आहूतोऽयं पश्चात् विद्याव्यस-नोत्कर्षसूचकेन जगुरिति शब्देनाहूतः। शास्त्रार्थविचारेण ज्ञानसम्पत्त्या च गुरुणा जगदीश इत्याहूतश्च। पद्यमिदञ्चैनमधिकृत्य प्रसिद्धम्—

आदौ जगा जगुः पश्चात् जगाजगुरतः परम् ।
अधुना ज्ञानसम्पत्त्या जगदीशायते जगा ॥ इति ।

चिन्तामणिव्याख्यामयूख – दीधितिव्याख्याप्रकाशिका – गादाधरीसिद्धान्तलक्षणव्याख्या – प्रशस्तपादभाष्यव्याख्यासूक्ति – न्यायलीलावती प्रकाशव्याख्या – तर्कामृतादीनां कर्ता चायम् । तदीयग्रन्थेषु शब्दसौष्ठवेन भावगाम्भीर्येण च अन्यादृशं स्थानं वहन्तीयं शब्दशक्तिप्रकाशिकेति 'जगदीशस्य सर्वस्वं शब्दशक्तिप्रकाशिका' इत्याभाणकोऽपि प्रसिद्धः ॥

शब्दशक्तिप्रकाशिकाव्याख्या :—

जगदीशभट्टाचार्यपौत्रेण रुद्रेश्वरभट्टपुत्रेण रामभद्रसिद्धान्तवागीशेन (1700–1800 A D.) कृता काचन रामभद्रीति प्रसिद्धा प्रबोधिन्याख्या व्याख्या काशीसंस्कृतग्रन्थमालायां (K. S. S. 109) मुद्रिता यस्याम् —

'गुरुमिव गुरुमिह नत्वा तत्कृतशब्दशक्तिप्रकाशिकायाः ।
श्रीरामभद्रकृती कुरुते टीकाम्' इति दृश्यते ।

परमियं व्याख्या बहुव्रीहिसमासान्ता एव लभ्यते मुद्रिता । व्याख्येयं मूलग्रन्थावज्ञाने बहूपकारोति । एवं ब्रह्मश्री कालीचरणतारिणीदेव्योः पुत्रेण रामनारायणतर्कचरणशिष्येण गिरीशकृष्णनगरराजादृतेन कृष्णकान्तविद्यावागीशेन (1800–1900 A D.) शक्तिसन्दीपन्याख्या व्याख्या, या अतिविस्तृता विषयाववोधनसमर्था छात्रोपयोगिनी च राजते । क्वचित् क्वचित् केचिच्छब्देन रामभद्रीयव्याख्यार्थमनुवदति मुद्रितेयं व्याख्या काशीसंस्कृतग्रन्थमालायाम् (K. S. S 109) । एवमाधुनिकेन वङ्गालवास्तव्येन G. C, तर्कदर्शनतीर्थाख्यपण्डितेन (1914 A. D.) कृता काचन विषमस्थलाख्या व्याख्या कलकत्तायां मुद्रिता । एवमाधुनिकेन जयचन्द्रसिद्धान्तभूषणभट्टाचार्येण (1934 A. D.), दुण्डिराजशास्त्रिणा च कृते टिप्पण्यौ मुद्रिते च । एवं कालीशङ्करभट्टाचार्यकृतं शब्दशक्तिप्रकाशिकाकोडपत्रम् (Ch. S. S. 25) मुद्रितम् ।




**शक्तिवादः**—प्रकृतिशक्तिनिरूपणपरोऽयं ग्रन्थः अर्थनिरूपितां पदनिष्ठां सङ्केतलक्षणात्मिकां शक्तिं सविस्तरं प्रतिपादयति। सामान्यकाण्डविशेषकाण्डभेदेन विभक्तोऽयं ग्रन्थः सामान्यकाण्डे वृत्त्यादिपदप्रतिपाद्य एव पदार्थ इति प्रतिपाद्य शक्तिस्वरूपम्, ज्ञाने पदानां शक्तिर्नत्वर्थे, इति वादिनां, अन्विताभिधानवादिनश्च मीमांसकानां मतमनूद्य दूषित्वा पदानां तद्धर्मतद्वैशिष्ट्यतदाश्रयेष्वेव शक्तिरिति तार्किकसिद्धान्तस्सपरिष्कारं स्थापितः। विशेषकाण्डे आकाशादिविशेषशब्दानां शक्तिरुपवर्णिता। प्रसङ्गात् मुरारिमिश्रमतं परिशीलितम्। धेनुपुष्पवन्ततत्सर्वं किम्यत्तत्इदमेतत्अदसस्वएकादीनां शक्तिरुपवर्णित्वा। शक्तिविषयकभाट्टप्राभाकरसिद्धान्तं विशेषतो दूषित्वा तत्प्रसङ्गात् जातिवाचकपदात् जातिबोधः व्यक्तिबोधस्तु औपादानिक इति श्रीकरमतम्, एवं मण्डनाचार्यमतञ्च खण्डितम्। जातिशक्तिवादिमतनिरसनपूर्वकं जातिविशिष्टव्यक्तौ शक्तिस्साधिता।

अस्य कर्ता दीधितिव्याख्याप्रकाशिका (गादाधरी) निर्माता हरिरामतर्कवागीशशिष्यः जीवाचार्यपुत्रः गदाधरभट्टाचार्यः। एनमधिकृत्यास्माभिः पूर्वमेव (p. 48) लिखितम्।

**शक्तिवादव्याख्याः**—गदाधरभट्टाचार्यशिष्येण विश्वनाथपञ्चाननगुरुणा जयरामतर्कालङ्कारेण (1675 A. D.) कृता काचन शक्तिवादव्याख्या इति गोपिनाथकविराजो वदति परं प्राप्तिस्थानादि न ज्ञायते। एवं माधवभट्टाचार्येण

(1680 A. D.) कृता काचन विवृत्याख्या व्याख्या काशीसंस्कृतग्रन्थमालायां (K. S. S. 57) मुद्रिता। अन्या काचन विश्वनाथभट्टकृता (1800 A. D.) विवृत्याख्या व्याख्या वाराणस्यां मुद्रिता। कालीशङ्करभट्टकृतं क्रोडपत्रमपि (Ch. S. S. 25) मुद्रितम्। दुर्बलाचार्य इति प्रसिद्धेन देवीदत्तपौत्रेण रामसेवकपुत्रेण कृष्णमित्राचार्येण (1800 A. D.) कृता शब्दशक्तिव्याख्या अमुद्रिता ओधसूच्यां दृश्यते। एवमाधुनिकेन हरिनाथतर्कवागीशेन (1900–2000 A. D.) कृता काचन व्याख्या कलकत्तायां मुद्रिता। पञ्जाबवास्तव्येन गङ्गाधरशास्त्रिशिष्येण सुदर्शनशास्त्रिणा कृता काचन आदर्शाख्या व्याख्या बम्बईनगरे मुद्रिता। एवं कृष्णभट्टआर्डेकृता दीपिकाख्या व्याख्या अमुद्रिता मद्रासबाम्बेमिथिला-पुस्तकालयेषु लभ्यते। रङ्गनाथसूरिपुत्रेण नारायणानुजेन कृष्णभट्टेण कृता मञ्जूषाख्या (दीपिकाविवरणम्) व्याख्या शिलाक्षरेषु मुद्रिता। जयरामशिष्यकृता अन्या व्याख्यापि (MGOML) लभ्यते। गोस्वामिदामोदरशास्त्रिणा (1927 A. D) कृता काचन विनोदिनी नाम्नी शक्तिवादव्याख्या काश्यां (K. S. S. 57, 77) मुद्रिता।




**त्रिंशच्छ्लोकी** — अज्ञातकर्तृनामधेयोऽयं ग्रन्थ अण्णामलैविश्वविद्यालय संस्कृतग्रन्थमालायां (No. 4) मुद्रितः। द्वात्रिंशद्भिः श्लोकैः पूर्णोऽयं ग्रन्थः न च–वाच्यम्, यद्यपि–तथापि, अपेक्ष्य, वर्जयित्वा, वक्तुं युक्तम्, इति, अस्ति, नास्ति, ननु-चेत्, यदि तदा, अथवा, परन्तु, एव, यद्वा, इत्यादीनां वादकथावसरे प्रयुज्यमानानां शब्दानामर्थम्, लक्षणम्, परिष्कारश्च प्रतिपादयति। अस्य व्याख्यायां उदाहरणप्रदर्शनपूर्वकं शाब्दबोधश्चोपवर्णितः। व्युत्पादकोऽयं ग्रन्थः।

अस्य व्याख्या मुक्तावलीप्रभा–तर्कसंग्रहदीपिकाव्याख्यानरसिंहप्रकाशिका-कारस्य नृसिंहशास्त्रिणः शिष्येण सिद्धान्तमुक्तावलीमञ्जूषाकारेण भट्टाभिरामशास्त्रिणा (1850 A. D.) कृतापि मुद्रिता पूर्वोक्तग्रन्थमालायाम् ।

व्युत्पत्तिवादः—शब्दतत्त्वविचारे प्रकृतिप्रत्ययभेदेन भागद्वयं वर्तत इति पूर्वमस्माभिरुक्तम् । तत्र प्रकृत्यर्थस्यालोचनं शक्तिवादे कृतम् । प्रत्ययविचारं विना शब्दतत्त्वविचारोऽपूर्ण एवेति प्रधानतया न्यायमतमवलम्ब्य व्युत्पत्तिवादाख्यः ग्रन्थ उदभूत् । ग्रन्थोऽयं विषयोत्कृष्टतया स्पष्टलेखनप्रणाल्या गूढार्थतया च शास्त्रज्ञैर्विशेषत आद्रीयते । व्याकरणे न्याये वा अस्याध्ययनं विना प्रकर्षपाण्डित्यं वैदुष्यं वा नैव लब्धुं शक्यते ।

यथार्थः, अयथार्थश्चेति शाब्दबोधो द्विविधः । तत्र यथार्थः शाब्दप्रमा । सा च नद्यास्तीरे पञ्च फलानि सन्ति इत्यादिवाक्यार्थगोचरयथार्थज्ञानम् । अस्य फलवत्प्रवृत्तिजननयोग्यत्वात् यथार्थता । अयथार्थस्तु वह्निना सिञ्चतीत्याद्ययोग्य-वाक्यजन्यः शाब्दबोधः । द्विविधोऽपि शाब्दबोधः प्रत्येकं द्विविधः । भेदान्वय-विषयकः, अभेदान्वयविषयकश्चेति । तत्राद्यः राज्ञः पुरुष इत्यादिवाक्यजन्यः । द्वितीयो नीलो घट इत्यादिवाक्यजन्यः । अभेदान्वयबोधं प्रति समानलिङ्गविभक्ति-वचनकत्वं प्रयोजकमिति सामान्यनियमः । समानविभक्तिकत्वं नाम स्वप्रकृतिकवि-भक्तिसजातीयविभक्तिकत्वम्, विरुद्धविभक्तिराहित्यं वा । एवं विशेष्यवाचकपदोत्तर विभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षितत्वम्, तत्र विशेष्यविशेषणपदयोः समानलिङ्गवचनत्वमिति नियमश्च । तेन पुरूरवार्द्रवसौ, विश्वे देवाः, त्रयः समुदिता हेतुः, पितरो देवताः, जात्याकृतिव्यक्तयः पदार्थाः प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि इत्यादिषु विभिन्नलिङ्गवचनकस्थलेषु अभेदान्वय उपपन्नो भवति । स्वप्रकृतिकविभक्तिसाजात्यञ्च विभक्तिविभाजकप्रथमात्वादिना न तु समानानु-पूर्वीकत्वेन, तेन वेदाः प्रमाणम्, शतं ब्राह्मणा इत्यादौ अभेदान्वयबोध उपपन्नो भवति । एवं क्रमेण ग्रन्थेऽस्मिन् अभेदान्वयबोधश्चेति द्विविधोऽपि बोधः सप्रपञ्चं निरूपितः ।

नामार्थयोः, नामार्थधात्वर्थयोराकाङ्क्षाप्रतिपादनपूर्वकं अभेदान्वयबोधो न्यरूपि । विरूपोपस्थितयोरेवाभेदान्वय इति व्युत्पत्तिः सविमर्शं साधितः ।

प्रातिपदिकस्य प्रत्ययार्थेन निपातार्थेन च, धात्वर्थस्य धातूत्तरप्रत्ययार्थेन च भेदान्वयमुपक्षिप्य लाघवगौरवविचारपूर्वकं विभक्त्यर्थसंसर्गकबोधः निराकृतः, विभक्त्यर्थप्रकारकबोधस्समर्थितः। प्रातिपदिकार्थप्रत्ययार्थयोः भेदान्वयो दृढीकृतः। ततः प्रातिपदिकप्रकृतिकानां प्रथमादिविभक्तीनामर्थः, स्त्रीप्रत्ययार्थः, केचन तद्धितार्थाः, तेषां प्रातिपादिकार्थेन भेदान्वयश्च निरूपितः। धातुप्रकृतिकलकारार्थनिरूपणपूर्वकं लकारार्थधात्वर्थयोश्च भेदान्वय उपवर्णितः।

प्रथमाविभक्त्यर्थविचारप्रकरणे अभेदसम्बन्धविचारः, समानवाचकत्वपरिष्कारः, एकवचनत्वपरिष्कारः, अभेदान्वयकारणीभूताया आकाङ्क्षाया विचारः, विशेषणविभक्त्यर्थविचारश्चेति विषया वर्णिताः विद्यन्ते। अभेदान्वयबोधश्च विरूपोपस्थितयोरेवेति व्युत्पत्तिविचारप्रसङ्गात् घटो घट इति वाक्यार्थविचारः अभेदान्वयसम्बन्धिनश्च विषया विचार्यन्ते स्म। भेदान्वयबोधश्च प्रतिपदिकार्थधात्वर्थयोः प्रत्ययार्थेन क्वचिन्निपतार्थेन च सममेव जायत इति व्युत्पत्तिनिरूपणावसरे नामार्थयोरन्वयः, राजपुरुषः, मुखं चन्द्र इत्यादौ मतभेदेन व्यभिचारवारणं कृतम्। अव्यय निपातातिरिक्तनामार्थयोः क्रियाप्रातिपदिकार्थयोश्च साक्षात् भेदेन अन्वयबोध अव्युत्पन्न इति व्युत्पतिः साधिता। राजपुरुष इत्यादौ राजपदार्थस्य पुरुषपदार्थे स्वस्वामिभावसम्बन्धेन अन्वयो वाच्यः। तथाविधान्वयस्य पूर्वोक्तव्युत्पत्तिविरुद्धत्वेन तं परित्यज्य राजपदस्य राजसम्बन्धिनि लक्षणां स्वीकृत्य तादृशराजपदार्थस्य अभेदेन पुरुषपदार्थेऽन्वयः। राजा पुरुष इत्यादौ स्वस्वरूपभेदसम्बन्धेन राजपदार्थस्य पुरुषादौ अन्वयमादाय राजसम्बन्धी पुरुष इति बोधवारणाय अस्याः व्युत्पत्तेरावश्यकत्वम्। घटो न पट इत्यादौ घटपटाभ्यां नञः साक्षादेवान्वय त् निपातातिरिक्तपदमावश्यकम्। चन्द्र इव मुखं इत्यादौ इवार्थसादृश्ये चन्द्रस्य प्रतियोगितया भेदेन अन्वयात् अव्ययातिरिक्तपदस्यावश्यकता। नीलो घट इत्यादौ नामार्थयोः, स्तोकं पचतीत्यादौ क्रियापातिपदिकार्थयोश्च अभेदान्वयात् भेदेन इत्युक्तम्। भूतले घट इत्यत्र आधेयतासंसर्गेणापि घटभूतलयोरन्वयात् साक्षादित्युक्तम्। प्रत्ययार्थमद्वारीकृत्येति साक्षादित्यस्यार्थः। भेदेन इत्यस्य तादात्म्यातिरिक्तेनेत्यर्थो वक्तव्य इत्यादि व्युत्पत्तिविवेचनं कृतम्। एवं प्रत्ययविचारः, एकवचनत्वपरिष्कारः संख्यावाचकत्वविचारः, संख्यासम्बन्धविचारः, संख्यानुयोगिविचारः, शतादिशब्दार्थकथनम्, निरर्थकैकवचनादिनिरूपणम्, आख्यातस्य संख्यातार्थतायां विवादः, द्वितीयातृतीयाप्रयोजकस्वरूपकथनम्, संख्यान्वये

कारणकथनम्, इतीमे विषयाः प्रथमाकारके विचार्यन्ते स्म। या विभक्तिः तादात्म्यभिन्नस्वार्थधर्मिकप्रकृत्यर्थबोधं प्रति न स्वरूपयोग्या सा प्रथमा इति प्रथमाविभक्त्यर्थः स्वीकर्तव्यः।

द्वितीयाविभक्त्यर्थविचारे कर्मत्वं द्वितीयार्थः, कर्मत्वञ्च क्रियाजन्यफलशालित्वमित्युक्त्वा क्रियायाः धातुत एव लाभात् जन्यजनकभावसम्बन्धस्य संसर्गमर्यादया भानसम्भवात् फलमात्रं द्वितीयाविभक्त्यर्थ इति निरूपितम्। प्रसङ्गात् धात्वर्थविचारः, नव्यप्राचीनमतयोः समीक्षा, कर्माख्यातार्थः हु-दा-पच्-युज् इत्यादिसकर्मकधात्वर्थाः, गां दोग्धि पयः इत्यादिद्विकर्मकधातुसमभिव्याहृतद्वितीयार्थविचारप्रसंगेन दुह्-याच्-रुध्-पृच्छ्-नय्-वह्-निरूपयत्यादीनां अर्थाः विवेचिताः। शिष्यं शास्त्रं ज्ञापयतीत्यादौ ण्यन्तप्रयोगे मुख्यभाक्तसाधारणं कर्तृत्वमेव द्वितीयार्थ इत्युपवर्ण्य ण्यर्थः प्रकाशीकृतः। यगन्त-भावाख्यातप्रयोगविचारप्रसंगेन चैत्रः स्वं गच्छति इति प्रयोगमापाद्य परसमवेतक्रियाफलशालित्वमिति कर्मत्वपरिष्कारः कृतः। प्राप्य-प्रकृति-विकृतिभेदेन कर्मत्रैविध्यमुक्त्वा क्रियाजन्यफलशालि प्राप्यं कर्म, क्रियानिष्पाद्यं विकृतिरूपं कर्म, क्रियया वस्त्वन्तरनिष्पत्तये पूर्वभावविशिष्टस्य यस्यासत्स्वरूपो विकारो निर्वाह्यते तत् प्रकृतिरूपं कर्मेति लक्षणमुपवर्ण्य तेषामुदाहरणानि च विशदीकृतानि। एवं द्वितीयाविभक्तेः निष्ठत्वम्, विषयत्वम्, विशेष्यत्वम्, प्रकारत्वम्, प्रतियोगित्वम्, निरूपितत्वम्, व्यापकत्वञ्चेत्यर्थाः सोदाहरणं निरूपिताः। सविषयकज्ञादीनां धातूनां, ध्राधात्वर्थञ्च विचार्य सौरभं न पश्यति, चैत्र आकाशं न पश्यति, अभाव आकाशं न पश्यति, घट आकाशं न पश्यति इत्यादौ द्वितीयाविभक्त्यर्थविचारः, तेषां प्रयोगाणां साधुत्वासाधुत्वे विचारिते। अनुमित्यर्थकधातुस्थले द्वितीयाविभक्त्यर्थविचारः, इच्छार्थकधातुस्थले मुख्यविशेष्यत्वरूपं कर्म द्वितीयार्थ इति, तत्प्रसंगात् सन्नन्तप्रयोगविचारः, पुत्रीयति पुत्रकाम्यति इत्यादि नामधातुप्रयोगविचारः, विना-यावत्-अनु-प्रति-अन्तरा पदसमभिव्याहृतद्वितीयार्थ इत्येते विषया अवर्ण्यन्त।

तृतीयाविभक्त्यर्थविचारप्रकरणे तृतीयायाः क्रियान्वयि कर्तृत्वम्, करणत्वञ्चार्थ इत्युपक्रम्य काष्ठेन पच्यते, चैत्रेण ज्ञायते इत्यादिषु तृतीयार्थं विमृश्य ज्ञानज्ञाप्यत्वम्, अभेदः, साहित्यम्, प्रतियोगित्वम्, निरूपितत्वम्, निष्ठत्वम्, तत्समवेतत्वम्, समानकालिकत्वम्, अवच्छिन्नत्वमित्यादयोऽर्थाः सोदाहरणं निरूपिताः।

कारकान्तरव्यापारानधीनत्वे सति कारकत्वमिति स्वतन्त्रत्वपरिष्कारः, मुख्य-क्रियाकर्तृत्वपरिष्कारः, काष्ठेन पचतीत्यत्र करणत्वं तृतीयार्थ इत्युपपाद्य कर्तृव्या-पाराधीनव्यापारवत्कारणत्वं करणत्वमिति परिष्कारः, हेतुतृतीयार्थः, ज्ञाप्य ज्ञापकस्वरूपविषये प्राचीननवीनमतपरिशीलनम्, सहशब्दार्थकथनपूर्वकं सहशब्द-समभिव्याहृततृतीयार्थः, इत्थम्भूत तृतीयार्थविचारप्रसंगे विद्यमानं सत् व्यावर्तकं विशेषणम्, अविद्यमानं सत् व्यावर्तवं उपलक्षणमिति विशेषणोपलक्षणयोः स्वरूप-मितीमे विषयाः परिशीलिताः।

चतुर्थीविभक्त्यर्थविचारे क्रियाजन्यफलभागितया कर्तुरिच्छाविषयत्वं सम्प्रदा-नत्वमित्युपक्रम्य भाक्तमुख्यभेदेन भिन्नं सम्प्रदानं उदाहरणेन प्रतिपादितम्। ब्राह्मणाय गां ददाति, भूतेभ्यो बलिः, गवे सुखम्, यूपाय दारु, कुण्डलाय सुवर्णम्, वृक्षाय उदकं, नारदाय कलहः, पुष्पेभ्यः स्पृहयति, एधेभ्यो व्रजति, अन्नाय यतते, यागाय यातीत्यादिवाक्यार्थान् उपपाद्य उद्देश्यत्वम्, तृप्तिप्रयोजकत्वम्, समवेतत्वम्, निष्पत्तिप्रयोजकत्वम्, वृद्धिप्रयोजकत्वम्, आश्रितत्वम्, विषयत्वम्, स्वाहरणेच्छा-विषयत्वम्, प्रयोजकत्वम्, इच्छाधीनेच्छाविषयत्वमित्यादय अर्था चतुर्थ्या इति निश्चितम्। एवं धारयत्यर्थविचारः पाकाय व्रजति, अश्वाय घास इत्यादौ चतुर्थ्यर्थ-परिशीलनम्, शिवाय नम इत्यादौ नमश्शब्दार्थरूपत्यागविवेचनम्, प्रसंगात् च्विप्रत्ययार्थविचारः, परहितविषयकस्वेच्छा स्वस्त्यर्थ इतीमे विषयाः वर्णिताः।

पञ्चमीविभक्त्यर्थविचारे स्वनिष्ठभेदप्रतियोगितावच्छेदकीभूतक्रियाजन्यविभा-गाश्रयत्वं इति अपादानत्वं परिष्कृतम्। उपात्तविषयं निर्दिष्टविषयं अपेक्षित-क्रियञ्चेति अपादानत्रैविध्यमुपपादितम्। वृक्षात् पर्णं पततीत्यत्र अवधित्वम्, घटः पटाद् भिन्न इत्यत्र प्रतियोगित्वम्, दण्डाद् घट इत्यत्र जन्यत्वम्, साध्याभाव-वतोऽवृत्तिरित्यत्र निरूपितत्वम्, पर्वतो वह्निमान् धूमादित्यत्र ज्ञानज्ञाप्यत्वम्, आजननात् अभ्यस्यतीत्यत्र आरम्भः, आमरणात् ध्यायतीत्यत्र पर्यन्तः, पण्डितात् शास्त्रं शृणोतीत्यत्र तत्कर्तृकोच्चारणाधीनत्वम्, अयमस्माद् दीर्घ इत्यत्र तदपेक्षत्व-मित्यादयः पञ्चम्यर्थाः वर्ण्यन्ते स्म। एवं अन्य–इतर–अपर–पृथक् इत्यादिपदार्थाश्च विवेचिताः।

षष्ठ्यर्थविचारे शेषे षष्ठीति सूत्रेण इतरविभक्तिभिरनिर्दिष्टेषु अर्थेषु षष्ठी-विधानात् शतं षष्ठ्यर्था इति प्रसिद्धश्च स्वत्वनिरूपितत्व अवयवत्वादीनां सम्बन्धत्वमेव

षष्ठ्यर्थ इत्यारभ्य निर्धारणषष्ठ्यर्थं बहुभिरुदाहरणैर्विविच्य व्यावृत्तत्वमेव निर्धारण-विभक्तेरर्थ इति साधितम्। तत्र तत्र प्रसङ्गात् घटस्य कारणमित्यत्र निरूपितत्वम्, राज्ञः पुरुष इत्यत्र स्वामितानिरूपितस्वत्वम्, चैत्रस्य भोजनम् इत्यत्र कर्तृत्वम्, चैत्रस्य हस्त इत्यत्र अवयवत्वम्, नाग्निस्तृप्यति काष्ठानाम्, न पुंसां वामलोचना इत्यादौ करणत्वम्, घटस्य रूपमित्यत्र समवेतत्वम्, नराणां क्षत्रियश्शूर इत्यत्र स्वसमभिव्याहृतपदार्थतावच्छेदकजातिशून्यषष्ठ्यन्तपदार्थव्यावृत्तत्वम्, षष्ठीविभक्त्यर्था इति च निरूपितम्।

सप्तमीविभक्त्यर्थविचारप्रकरणे आधारस्यैवाधिकरणत्वात् अधिकरणे च सप्तम्याः विहितत्वात् आधारसप्तम्या आधेयत्वमर्थ इति विचारमुपक्रम्य आधाराधेय-इत्यत्र भावश्च संयोगादिवद् न कश्चन सम्बन्धः परन्तु पदार्थान्तरमिति विशदीकृतम्। तत्प्रसंगात् वीणायां शब्दः, वृक्षाग्रे कपिसंयोग इत्यत्र अवच्छेद्यत्वम्, भूतले घट इत्यत्र आधेयत्वम्, भूतले घटो वर्तत इत्यत्र निरूपितत्वम्, गोषु दुह्यमानासु गत इत्यत्र समानकालीनत्वम्, दोग्धव्यासु गत इत्यत्र प्राक्कालीनत्वम्, दुग्धासु गत इत्यत्र उत्तरकालीनत्वम्, चर्मणि द्वीपिनं हन्ति इत्यादौ स्वविषयकेच्छाधीनत्वम्, पाथसि पीते तृषा शाम्यति इत्यत्र कार्यकारणभावश्च सप्तम्यर्था इति वर्णिताः।

सम्बोधनप्रथमायाः वक्तुरव्यवहितशब्दजन्यबोधाश्रयत्वेच्छा अर्थ इति प्रतिपाद्य एकत्र विशेषणतया अन्वितस्य नान्यत्र विशेषणत्वमिति व्युत्पत्तिविरोधात् सम्बोधनस्य न प्रकृत्यर्थविशेष्यकत्वम्, किन्तु प्रकृत्यर्थविशेषणत्वमेवेति साधितम्।

स्त्रीप्रत्ययार्थविचारप्रकरणे क्वचित् स्त्रीत्वं टाबादयः प्रकृत्यर्थविशेषणतया बोधयन्तीत्युक्त्वा, योनिमत्वं स्त्रीत्वमिति लक्षणमुपवर्ण्य तस्य खट्वादौ व्यभिचार-माशङ्क्य साधुत्वार्थं तत्र टाबादय इत्युपवर्ण्य प्रयोगानुसारेण स्त्रीलिङ्गताया विवक्षणीयत्वं निश्चितम्।

तद्धितप्रत्ययार्थविचारप्रकरणे अपत्यार्थक–युवार्थक–रक्तार्थक–संस्कारार्थक नक्षत्रयुक्तकालार्थक – देवतार्थक – समूहार्थक – तद्धितप्रत्ययानां अर्थविचारं तेषां प्रातिपदिकार्थेन भेदान्वयं शाब्दबोधञ्च प्रदर्श्य, निष्कृष्टः पौषशब्दार्थः, तद्धितचतुर्थ्योर्बलाबलविचारश्चेति विषया विस्तृताः।

धातुप्रकृतिकलकारार्थविचारप्रकरणे लडादिदशलकाराणां कर्तृत्वसामान्यमर्थ इत्युपक्रम्य कर्तृत्वानभिधानविचारं कृत्वा तृतीयार्थकर्तृत्वस्यान्वयप्रकार उपवर्णितः। आख्यातार्थविचारप्रसंगात् मीमांसकानां नैयायिकानां दीधितिकृतां सिद्धान्त-परिशीलनम्, कर्तृत्वशक्ततावच्छेदकम्, आत्मनेपदाख्यातार्थः, कर्माख्यातार्थः, सकर्मकधात्वर्थः, लटो वर्तमानार्थकत्वम्, वर्तमानकालविचारः वर्तमानत्वपरिष्कारः लृट्-लुट्-लङ्-लिट्-लोट्लकाराणां अर्थः, लोट्प्रत्ययार्थविचारप्रसंगात् स्वर्गकारणत्वम् यागसाध्यतावच्छेदकम्, नित्यकर्म, विधिप्रत्ययः, विधिनिषेधवाक्यार्थ इष्टसाधनस्य विध्यर्थत्वम्, श्येनवाक्यार्थः विधिप्रत्ययार्थनिष्कर्ष इतीमे विषया न्यरूपिषत।

प्रयोगातिप्रसंगवारणाय विषयविचारमुखेन तत्तद्वाक्यानां शाब्दबोधोऽत्र वर्णितः। लाघवतर्कमवष्टभ्य अनुशासनारूढं प्रत्ययार्थं स्वीकृत्य आकाङ्क्षाभास्य-संसर्गविशेषेण अन्वयमुपपाद्य प्रयोगातिप्रसङ्गा वारिता दृश्यन्ते। प्रायशो वाक्यार्थ-निर्णये नञ्घटितवाक्यार्थपर्यालोचनायाः प्राधान्यं दीयते। तदनुसृत्यैव वाक्यार्थ-निर्धारणं भवति। मतभेदविमर्शनावसरे तत्त्वनिर्णयोद्देशेनैव विचारः प्रवर्तितः न तु मतविशेषस्थापने अभिनिवेशेन। द्वितीयार्थविचारावसरे तदर्थविशेषनिरूपणोप-योगितया धात्वर्थविचार उपक्रान्तः। व्यापारमात्रं धात्वर्थ इति प्राचीनमतम्, फलावच्छिन्नो व्यापारो धात्वर्थ इति नवीनमतम्, फलम् व्यापारश्च धात्वर्थ इति खण्डशक्तिवादिमतञ्च निरूपितम्। तत्र प्राचीनमतपरिष्कारं सम्यङ् निरूप्य नवीनमतस्य युक्तता प्रतिपादिता। प्रायः पाणिनीयं सूत्रमेव प्रमाणीकृतम्। क्वचित् कातन्त्रव्याकरणमुद्धृतं विद्यते। विशिष्य तृतीयाचतुर्थ्योर्विचारे कातन्त्रं स्वीकृतम्। प्रथमाविचारे दुर्गसिंहकृतं कातन्त्रपरिशिष्टं प्रमाणीक्रियते। द्वितीयाविचारे भागुरीयमपि उद्धृतम्। प्रथमाद्वितीयातृतीयासप्तमी-आख्यातार्थप्रकरणे मणिकार दीधितिकारौ, प्रथमाविचारे नवीनमतम्, आलङ्कारिकमतम्, गुरुमतम्, हरिकारिका, द्वितीयाविचारे नवीनमतम्, भट्टिः, साम्प्रदायिकाः, सौन्दडमतम्, यज्ञपतिमतम्, अभियुक्तशब्देन केचित् मिश्रमतम्, तृतीयाविचारे प्राचीनमतम्, चतुर्थी-तद्धितार्थ विचारे शूलपाणिः, षष्ठीविचारे मिश्रमतम्, प्रकाशकृत्, स्त्रीप्रत्ययार्थविचारे श्रीपति दत्तमतम्, आख्यातार्थविचारे मीमांसकाश्चेतीमे निर्दिष्टाः।

अस्य रचयिता बङ्गालदेशान्तर्गत लक्ष्मीपाशग्रामाभिजनो गदाधरभट्टाचार्यः । स च शिवाचार्येत्यपराभिधस्य जीवाचार्यगोस्वामिनः पुत्रः । शिवाचार्योऽयं महान् तान्त्रिक इति प्रसिद्धिः । हरिरामतर्कवागीशस्य शिष्यो गदाधरभट्टाचार्यः । गदाधरभट्टाचार्यस्य पञ्च पुत्राः—रामतर्कालङ्कार—कृष्णदेवविद्याभूषण—रामदेव—महादेव रघुदेवन्यायवागीशाख्याः । रघुनन्दवाचस्पतिः पौत्रः, गोविन्दन्यायपञ्चानन रमाकान्तविद्यालङ्कारौ प्रपौत्रौ च गदाधरभट्टाचार्यस्य । व्युत्पत्तिवादरचनाकालः (1625 A. D.) इति ज्ञायते ।

अनेन कृता बहवो ग्रन्थाः । तेषु केचन मुद्रिता अन्येऽमुद्रिताश्च । 1. मूलतत्वचिन्तामणिटीका 2. मूलानुमानखण्डटीका 3. शब्दमण्यालोकटीका 4. प्रत्यक्षालोकटीका 5. अनुमानालोकटीका 6. प्रत्यक्षदीधितिटीका 7. अनुमानदीधितिटीका 8. नञ्वादः (आसियाटिकसोसाइटि मुद्रितः) 9. आत्मतत्वालोक (बौद्धाधिकार) दीधितिटीका 10. कुसुमाञ्जलिटीका 11. व्युत्पत्तिवादः 12. शक्तिवादः 13. मुक्तिवादः 14. प्रमाण्यवादः 15. विशिष्टवैशिष्ट्यवादः 16. संशय-निर्विकल्पक - स्मरणवादः 17. विषयतावादः 18. कारणतावादः 19. अपेक्षाबुद्धिकारणतावादः इत्येते ग्रन्थाः प्रसिद्धा उपलभ्यन्ते च । एषु मुक्तिवादः चन्द्रिकाव्याख्यया शिवरामीयटीकया च मुद्रितः । प्रामाण्यवादः प्रभाव्याख्यया विद्यते । विषयतावादः दुण्ढिराजीयटिप्पण्या शोभते । अन्ये केचनवादाः वीचिनाम्ना वादवारिधौ प्रकाशिताः । रत्नकोषवादरहस्यम् आख्यातवादः, कारकवादः—कारकार्थनिर्णयो वा, विधिवादः मुक्तावलीटीका इत्यादय अदसीया ग्रन्था इति प्रसिद्धिः, परं न ते लभ्यन्ते । अनेन चतुष्षष्ठिवादाः कृता इति उच्यते न सर्वे लभ्यन्ते ।

व्युत्पत्तिवादव्याख्याः—

रामेश्वरपुत्रेण मधुसूदनशिष्येण तर्कसंग्रहटिप्पणी—मुक्तावली दिनकरीयव्याख्यातरङ्गिणीकर्त्रा रामरुद्रभट्टाचार्येण (1700—1800 A. D.) कृता काचन व्युत्पत्तिवादव्याख्या अमुद्रिता मद्रपुरीपुस्तकालये तृतीयाविभक्त्यर्थविचारारम्भपर्यन्ता दृश्यते ।

वाराणसीवासिना हरिदीक्षितशिष्येण रङ्गनाथसूरिकमलाम्बयोः पुत्रेण नारायणानुजेन महादेवपौत्रेण कृष्णम्भट्टआर्डेपण्डितेन (1700—1800 A. D.) कृता काचन व्युत्पत्तिवादव्याख्या प्रथमाकारकान्ता शिलाक्षरेषु मुद्रिता विद्यते। एवं विश्वनाथपण्डितेन (1800 A. D.) कृता काचन व्युत्पत्तिवादलकारार्थनिर्णय-व्याख्या विवृत्याख्या वाराणस्यां मुद्रिता। श्रीवत्सगोत्रजेन अण्णादीक्षित लक्ष्म्यम्बयोः पुत्रेण रामभद्रमखिपौत्रेण शाहजीपुरवास्तव्येन गादाधरीपञ्चलक्षणी-व्याख्याभावसंग्रहाख्यायाः कर्त्रा अश्वत्थनारायणदीक्षितेन (1800 A. D.) कृता काचन व्युत्पत्तिवादव्याख्या वादार्थभावाख्या क्रोडपत्रात्मिका प्रथमाविभक्त्यन्ता अमुद्रिता बरोडामद्रासतञ्जपुरपुस्तकालयेषु लभ्यते। शेषार्यवंशजेन यादवगिरि (मेलकोट मैसूर) वास्तव्येन विशिष्टाद्वैतिना महता पण्डितेन अनन्तार्यशानिति प्रसिद्धेन अनन्ताचार्येण (1822 A. D.) कृता काचन व्युत्पत्तिवादप्रथमाविभक्त्यर्थ व्याख्या आसीदिति सम्प्रदायतः श्रूयते परं प्राप्तिस्थानादि न ज्ञायते।

नृसिंहशास्त्रिशिष्येण तर्कसंग्रहदीपिकाटिप्पणी - मुक्तावलीव्याख्यामञ्जूषा-कर्त्रा पट्टाभिरामशास्त्रिणा (1850 A. D.) कृता काचन व्युत्पत्तिवादव्याख्या क्रोडपत्ररूपा अमुद्रिता रैसूच्यां दृश्यते मेलकोटे मैसूरपुस्तकालये लभ्यत इति श्रूयते। एवं बङ्गीशकुलजेन श्रीभाष्यटिप्पणीकर्त्रा कपिस्थलं देशिकाचार्येण (1856 A. D.) कृता काचन क्रोडपत्रात्मिका व्युत्पत्तिवादव्याख्या अमुद्रिता मद्रासतञ्जपुरयोर्लभ्यते। गर्गगोत्रजेन रामशुक्लशास्त्रिणः पौत्रेण देवदत्तशुक्लपुत्रेण नारायणशुक्लपित्रा दुर्गादत्तशास्त्रिजयदेवमिश्रयोः शिष्येण कौमुदीकल्पलतिका—वैयाकरणभूषणसार व्याख्या—शक्तिवादटीका—परिष्कारदर्पणादीनां कर्त्रा वाराणसी-वास्तव्येन वैयाकरणशिरोमणिरिति प्रसिद्धेन शुक्लवेणीमाधवशास्त्रिणा (1850—1953 A. D.) कृता काचन शास्त्रार्थकलाख्या व्युत्पत्तिवादव्याख्या या मूलार्थावबोधने बहूपकुर्वती छात्रोपयोगिनी च भवति सा काशीसंस्कृतग्रन्थमालायां (K S.S. 115) मुद्रिता। शाण्डिल्यगोत्रजेन गङ्गौलीपरिवारोत्पन्नेन मैथिलदर्भङ्गावास्तव्येन रत्न-पाणिझापौत्रेण दुर्गादत्तझापुत्रेण विश्वनाथझाबबुजनझाबालशास्त्रिरानडे — विशुद्धा-नन्दसरस्वतीनां शिष्येण वाराणसीसंस्कृतकलाशालाप्रधानाध्यक्षेण प्रकाशितानां

जागदीशीव्याप्तिपञ्चक–सिद्धान्तलक्षण–गादाधरी सामान्यनिरुक्तिव्याख्यानाम् न्याय-कुसुमाञ्जलिप्रकाशव्याख्या गीतामधुसूदनीव्याख्यानां कर्त्रा, अप्रकाशितानां जागदीशी - अवच्छेदकत्वनिरुक्ति - व्याप्त्यनुगमपक्षताग्रन्थानां टीकाकर्त्रा गादाधरी अवयवसव्यभिचारसत्प्रतिपक्षादीनां, न्यायभाष्य-न्यायवार्तिकतात्पर्यटीका-शक्तिवाद खण्डनखण्डनखाद्यादीनां टिप्पणीकर्त्रा धर्मदत्तबच्चाझाशर्मणा (1860 – 1918 A. D.) कृता काचन व्युत्पत्तिवादव्याख्या गूढार्थतत्वालोकाख्या चौखाम्भा अमरभारतीग्रन्थमालायां (No. 4) निर्णयसागर मुद्रणालये च मुद्रिता । न्याय-कौस्तुभादिग्रन्थेषु उक्तार्थानां साधुत्वासाधुत्वे विमृशन्तीयं व्याख्या भाट्टरहस्य लघुमञ्जूषादिग्रन्थेषु उदीरितानि दूषणानि परिहरति । स्वतन्त्रविचारपूर्णेयं व्याख्या प्रौढपण्डितवेद्या च भवति ।

वाराणसीराजकीयसंस्कृतमहाविद्यालयप्राध्यापकेन प्रभुदत्तमिश्रनाहीदेव्योः पुत्रेण विद्याधरशास्त्रिकनीयसा देवदत्तशर्मणः पूर्वजेन ज्वालाप्रसादगौडगुरुणा शिवदत्तमिश्रेण (1900–71 A. D.) कृता काचन दीपिकाख्या व्युत्पत्ति वादव्याख्या वाराणसीभारतीविद्याभवनप्रकाशने मुद्रिता । अद्वैतचन्द्रिका—न्याय-सूत्रवृत्तिप्रसन्नपदा—शास्त्रदीपिकप्रकाशिका—शक्तिवादादर्शकर्त्रा गङ्गाधरशास्त्रिशिष्येण पञ्जाबीसुदर्शनाचार्येण (1901 A. D.) कृता काचन आदर्शाख्या व्युत्पत्ति वादव्याख्या मूलार्थजिज्ञासूनां उपकारिणी ललितशैलीपूर्णा छात्रोपकारिणी च राजते, बम्बई वेङ्कटेश्वरमुद्रणालये मुद्रिता च । परन्तु क्वचित् क्वचित् मतान्तर-प्रदर्शनपरसन्दर्भेषु मूलार्थो वा मतान्तराशयप्रदर्शनं तस्य खण्डनप्रकारश्च अस्पष्टा विद्यन्ते । उमादत्तपुत्रेण मैथिलेन लघुशब्देन्दुशेखरव्याख्यानागेशोक्तिप्रकाशकर्त्रा खुद्दीशर्मणा (1910 A. D.) कृता काचन नौकाख्या व्याख्या मधुवाण्यां मुद्रिता । आधुनिकेन शशिनाथझाख्येन कृता काचन अर्थदीपिकाख्या व्याख्या वाराणस्यां मुद्रिता । आधुनिकाभ्यां जानकीनाथलक्ष्मीनाथझाभ्यां कृतं प्रकाशिकाद्वयं मुद्रितं विद्यते ययोः जानकीनाथीयः प्रकाशः गूढार्थतत्वालोकमनुसरति ।

चित्रनाथशचीदेव्योः पुत्रेण उमेशपित्रा गङ्गानाथझागुरुणा हिन्दूविश्वविद्यालय-दर्भङ्गाविद्यालयप्राध्यापकेन परिभाषेन्दुशेखरटीकाविजया - लघुशब्देन्दुशेखरटीका-

शास्त्रार्थरत्नावलीकर्त्रा जयदेवमिश्रेण (1920 A. D.) कृता काचन जयाख्या व्युत्पत्तिवादव्याख्या प्रथमार्थविचारमध्यभागान्ता अलहाबादनगरे मुद्रिता। शाहजी-पुरवास्तव्यानां दरभङ्गामहाराजसंमानितानां वेङ्कटरामशास्त्रिणामात्मजेन अक्षपादका-णादवैयासिकदर्शनेषु अकुण्ठितमतिना पण्डितराजशास्त्ररत्नाकरविरुदभूषितेन अण्णामलैविश्वविद्यालयप्राध्यापकेन वे. सुब्रह्मण्यशास्त्रिणा कृता काचन मूलार्थबोधन-चतुरा वैयाकरणमीमांसकाशयनिरूपणपूर्वकं व्युत्पत्तिवादगतलकारार्थनिरूपणपरा लक्षणपरिष्कारयुक्ता विवरणाख्या व्याख्या अण्णामलैविश्वविद्यालयसंस्कृतग्रन्थ-मालायां (No. 10) मुद्रिता। कालीशङ्करभट्टाचार्यविरचितं व्युत्पत्तिवादक्रोडपत्रमपि वाराणस्यां (Ch. S. S. 25) मुद्रितम्।

व्युत्पत्तिवादसङ्ग्रहः—सिद्धान्तमाला

व्युत्पत्तिवादसिद्धान्तसंग्राहकोऽयं ग्रन्थः पञ्चोत्तरनवत्युत्तर चतुश्शतैः (495) आनुष्टुभाभिः कारिकाभिः सप्त विभक्तीनां सपरिकरं व्युत्पत्तिवादे प्रतिपादितानर्थान् सङ्गृह्णाति। प्रथमं विभक्त्यर्थानुक्त्वा अनन्तरं सविचारं तान् परिष्करोति। संग्रहोऽयं तत्र तत्र सिद्धान्तानामुपरि सम्भाव्यमानानि दूषणानि उद्धरति। विशेषतः परिष्कृततया तत्तत्सिद्धान्तस्मरणपठनादिविषये लाघवातिशयकारिकारूपतया च अतीवोपकरोति। ग्रन्थोऽयं मङ्गलोदयमुद्रणालये तिरुच्चूरनगरे मुद्रितः।

अस्य रचयिता शठकोपशिष्यः महामहोपाध्यायविरुदभूषितः कृष्ण-विषारडिगुरुः कोटिलिङ्गपुरवास्तव्यः गोदावर्मराजः (1911 A D.) केरलीय इति ज्ञायते।


व्युत्पत्तिवाद—व्याख्याः
अर्थदीपिका
आदर्शः
गूढार्थतत्त्वालोकः
जया
दीपिका
नौका
प्रकाशिका
जानकीनाथीया
लक्ष्मीनाथीया
विवरणम्
विवृतिः
व्याख्या
व्याख्या
(क्रोडपत्ररूपा)
शास्त्रार्थकला
सिद्धान्तमाला
कृष्णभट्टीया
रामरुद्रभट्टीया
अनन्तालवान्कृता
वादार्थभाव
(अश्वत्थनारायणीया)
कालीशङ्करीया
देशिकाचार्य
कृता
पट्टाभिरामी

विभक्त्यर्थनिर्णयः—

परिपूर्णप्रतिपाद्यविषयः परोक्तिनिराकरणसयुक्तिपूर्णः विस्तृतोऽयं ग्रन्थः पाणिनीयसुब्विभक्तिविधायकसूत्रविवरणव्याजात् न्यायमतानुसार्यर्थं, न्यायमतेन प्रथमादिसप्तविभक्त्यर्थं च वर्णयति । कारकाकारकभेदेन प्रतिविभक्त्यर्थं द्वेधा विभज्य उपपदविभक्तीः अकारकविभक्तावन्तर्भाव्य विचारः क्रियते । कारकत्वं विभक्तित्वम्, प्रत्ययत्वञ्च पक्षान्तरनिरसनपूर्वकं सदलकृत्यञ्च परिष्करोति ।

तत्र धातुपदव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगि निरर्थकपदसमभिव्याहार ज्ञानाभावविशिष्टस्वार्थकसुब्ज्ञानजन्योपस्थितिप्रकारीभवद्धर्मावच्छिन्नक्रियानिरूपकत्वो-पलक्षितसम्बन्धावच्छिन्नस्वप्रकारताकशाब्दसामान्यनिरूपकसुबर्थत्वं कारकत्वमिति कारकत्वानुगमपरिष्कारः कृतः । संख्यावाचकप्रत्ययत्वम्, संख्यात्व व्याप्यजातिविशिष्टवाचकप्रत्ययत्वं वा विभक्तित्वमिति विभक्तिलक्षणम्, कात्यायनमतेन भाष्यमतेन च वाक्यलक्षणमुक्त्वा सुबन्तसमुदाय—तिङन्तसमुदाय—उभयसमुदायश्चेति वाक्य-विभागञ्च करोति ।

व्यापाराश्रयनिष्ठेच्छाप्रकृष्टविषयः कर्मपदवाच्य इति कर्मपदार्थम्, कारका-न्तरानपेक्षतया क्रियासम्बन्धत्वं स्वातन्त्र्यमिति स्वतन्त्रशब्दार्थवर्णनपूर्वकं तृतीया-प्रयोजनकं कर्तृत्वं करणत्वञ्च विविच्य प्रतिपादयति । धात्वर्थफलसम्बन्धितया धात्वर्थान्यफलेन सम्बन्धेन व्यापारसम्बन्धितया चाभिप्रायविषयत्वं सम्प्रदानत्वमिति सम्प्रदानत्वम्, अपादानसंज्ञाविचारप्रसङ्गात् क्रियानधिकरणत्वं ध्रुवत्वम्, विभागजनक तत्क्रियावदन्यत्वे सति तत्क्रियाजन्यविभागवत्त्वमवधित्वमिति, षष्ठीशेषे इति सूत्र-प्रसङ्गात् शेषत्वेन शेषत्वम्, सम्बन्धत्वञ्च सप्रतियोगिकत्वे सति सानुयोगिकत्वम्, प्रतियोगित्वानुयोगित्वनिरूपकतावच्छेदकधर्मवैशिष्ट्यमिति शेषत्वपरिष्कारम्, संयोग समवायस्वत्वकर्तृत्वादिकारकविषयत्वादिभेदादनेकविधं शेषत्वमिति च प्रतिपादयति ।

कर्तृ कर्म व्यवहितामसाक्षाद्धारयत्क्रियाम् ।
उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥ इति

अधिकरणस्वरूपं निरूप्य आधेयत्वं सप्तम्यर्थ इत्युक्त्वा फलव्यापारयोः स्वाश्रय-सम्बन्धावच्छिन्नाधेयत्वस्य सप्तम्यर्थस्य अन्वयं उपपाद्य संयोगः, समवायः कालिक-विशेषणता, विषयता इति स्वाश्रयसम्बन्धाश्चोपपादिताः ।

शाब्दबोधवर्णनशैल्यां प्रायस्सर्वाणि विभक्त्यर्थविधायकानि सूत्राणि सोदाहरणानि व्याख्यातानि। क्वचित् तृतीयाविभक्त्यर्थविचारे होच्छन्दसीति वैदिकप्रक्रियागतं सूत्रमपि विचारितं दृश्यते। अत एव काशिकावृत्त्यनुसारीणि सूत्राणि निर्दिष्टानीति ज्ञायते। सर्वेषां वाक्यानां शाब्दबोधकथनमस्य ग्रन्थस्य महान् विशेषः। दीधितिकारम्, पदवाक्यरत्नाकरम्, निर्दिशन्नयं ग्रन्थः पदवाक्यरत्नाकरं महीकरोति। पञ्चम्यर्थविचारावसरे व्युत्पत्तिवादोक्तं परतोऽनिष्टसम्भावनास्वरूपं भयम्, अनिष्टानुत्पत्त्यनुकूलव्यापारस्वरूपं त्राणमित्यर्थमनूद्य खण्डयति। बहुत्र गुरुचरणशब्देन गोकुलनाथोपाध्यायः, गौडशब्देन गदाधरभट्टाचार्यश्च निर्दिष्टौ।

अस्य कर्ता मैथिलः मंगरोलीग्रामाभिजनः फणदहकुलजन्मा वागीशशर्मजयन्तीदेव्योः पुत्रः पदवाक्यरत्नाकरकारगोकुलनाथोपाध्यायशिष्यः गिरिधरोपाध्यायः (1750–1850 A.D ) इति ज्ञायते। ग्रन्थोऽयं चौखाम्बासंस्कृत (Ch. S. S. 12) मालायां मुद्रितः।

पदवाक्यरत्नाकरः।

विषयविचारेण नाम्ना चान्वर्थोऽयं ग्रन्थः विवरणाख्यैः त्रयोविंशतिभिः प्रकरणैः पूर्णः। ग्रन्थोऽयं प्रथममनुबन्धचतुष्टयं शब्दतत्त्वज्ञानस्य मोक्षकारणताम्, शब्दोत्पत्तिम्, पदम्, पदार्थस्मृतिम्, वृत्तिग्रहम्, अभेदभेदान्वयौ, वैयाकरणसम्मतस्फोटम्, वचनार्थम्, प्रथमाविभक्त्यर्थम्, कारकोपपदभेदभिन्नद्वितीया तृतीयाविभक्त्यर्थान्, कारकाकारकभेदभिन्नचतुर्थ्यादिसप्तम्यन्तविभक्त्यर्थान् च विवृणोति। कारिकाभिस्सङ्गृहीतस्यार्थस्य व्याख्यारूपोऽयं ग्रन्थः पदस्वरूपम्, पदज्ञानोत्पत्तिप्रकारम्, पदार्थसङ्केतस्यैवाभिधात्वम्, सङ्केतज्ञानस्यैव शाब्दबोधकारणत्वम्, च विशदयन् अभेदान्वयं भेदान्वयञ्च सोदाहरणं प्रदर्शयति। अस्य भावावबोधे न्याय इव व्याकरणेऽपि व्युत्पत्तिरनिवार्या।

सम्बोध्यत्वातिरिक्तलिङ्गवचनमात्रं प्रथमार्थः, ज्ञानमिच्छा च सम्बोधनप्रथमायाः खण्डशोऽर्थः, परसमवेतक्रियाविशेषणधात्वर्थफलसमवायित्वं कर्मत्वम्, सव्यापारकं कारणं करणम्, धात्वर्थव्यापाराश्रयत्वं कर्तृत्वम्, आश्रयत्वमाधेयत्वं वा तृतीयायास्संक्षिप्तोऽर्थः, दानफलस्वत्वनिरूपकत्वमेव सम्प्रदानविभक्त्यर्थः, तत्तत्क्रियाजन्यविभागाश्रयत्वमपादानत्वम्, अवधित्वप्रतियोगित्व–अनुयोगित्वनिरूप-

कतावच्छेदकधर्मवैशिष्ट्यञ्च पञ्चम्यर्थः, षष्ठीप्रयोजकं शेषशब्दार्थं निरुच्य षष्ठ्याः सम्बन्धत्वेन प्रवृत्तिनिमित्तताम्, सम्बन्धश्चानुयुक्तत्वादिर्धर्मः, अधिकरणत्वमाधेयत्वञ्च सप्तम्यर्थः, अकारकसप्तम्याः तादर्थ्यमथवा निमित्तत्वमर्थ इति च प्रतिपादयति ।

सुबर्थनिरूपणावसरे वैयाकरणमीमांसक नैयायिकानां मतभेदस्सपरिकरं निरूपितः । सिद्धान्तकौमुदीगतानां भट्टोजिदीक्षितीयानां सर्वेषां विभक्त्यर्थोदाहरण-वाक्यानां न्यायशैल्या प्रायश्शाब्दबोधो वर्णितः । सपत्नीश्चतुर्विध इति प्रतिपादितः । हरिकारिकाः भट्टोजिदीक्षितकारिका (शब्दकौस्तुभः) मणिकृत् आलोकः जरद्वैयाकरणाः, माघः, बौद्धाधिकारविवरणम्, नैषधीयचरितम्, भागुरिस्मृतिः रसमहार्णवः प्रभा, उपाध्यायः मण्डनः, वामनः, काव्यप्रकाशकारः, मिश्रः (आलोककर्ता) शिवादित्यः, घटकर्परः हरदत्त इत्येते निर्दिष्टाः । मुद्रितोऽयं ग्रन्थः सरस्वतीभवनग्रन्थमालायां (SBT. 88) सव्याख्यः ।

अस्य रचयिता दरभङ्गामण्डलान्तर्गतमङ्गरौनीग्रामाभिजनः फणदहनामक मैथिलवंशजः पीताम्बरोमादेवीपुत्रः त्रिलोचनधनञ्जयानुजः जगद्धराग्रजः स्वपितुरे-वाधीतसकलशास्त्रः दर्शने स्मृतौ साहित्ये च ग्रन्थरचयिता अमृतोदयनाटकचक्ररश्मि रित्यादीनां बहूनां ग्रन्थानां रचयिता गोकुलनाथोपाध्यायः (1631 शक = 1709 A. D.) । अनेन कृतः न्यासिद्धान्ततत्वाख्यः ग्रन्थः रघुनाथशिरोमणिमत-खण्डनपर अमुद्रितः भारतकार्यालयपुस्तकालये लन्दननगरे बङ्गालसूच्याञ्च दृश्यते ।

पदवाक्यरत्नाकरव्याख्या—गूढार्थदीपिका ।

विचारपूर्णा मूलार्थरहस्योद्घटनशीला चेयं उत्तमा व्याख्या सरस्वतीभवन-ग्रन्थमायां (SBT. 88) मुद्रिता । अस्य प्रणेता दरभङ्गामण्डलान्तर्गत लालगञ्ज-ग्रामवास्तव्यः जयनाथमिश्रपुत्रः जुडानझा - लोकनाथझाशिष्यः व्यञ्जनावादसमास शक्तिवाद न्यायसूत्रप्रदीपकर्त्ता यदुनाथमिश्र (1885 A. D.) इति ज्ञायते ।

षट्कारकविवेचनम्—षण्णां कारकाणां न्यायप्रक्रियासिद्धार्थवर्णनपरोऽयं शाब्दबोधग्रन्थः । प्रथमं सूत्ररूपैर्वाक्यैः कारकार्थं प्रतिपाद्य तस्य व्याख्याव्याजेन शाब्दबोधप्रक्रियां कारकार्थान् प्रतिवाक्यं शाब्दबोधञ्च विवृणोति । अस्यैव कारकचक्रमिति च नामान्तरम् ।

विभक्त्यर्थद्वारा क्रियान्वयित्वं मुख्यभाक्तसाधारणं कारकत्वमित्युपक्रम्य कर्तृकर्मत्वादिषट्कारकान्यतमद्वारा क्रियान्वयित्वं कारकत्वमित्युपसंहृत्य कर्तृत्वकर्मत्वादिलक्षणञ्च प्रतिपादयति। क्रियाश्रयत्वं कर्मत्वमिति वदतां वैयाकरणानां मतं परिशील्य अनुकूलकृतिमत्वं कर्तृत्वम्, परसमवेततत्तद्धात्वर्थान्वयिफलविशेषशालित्वं तत्तद्धात्वर्थकर्मत्वमिति कर्मत्वं निरुच्य प्राप्यविकार्यनिर्वर्त्यभेदेन कर्म विभज्य विशदीकृतम्। कारकान्तरेऽचरितार्थत्वे सति फलहेतुत्वं कारणत्वमित्युपक्रम्य व्यापारवत्कारणं करणमिति करणलक्षणम्, करणीभूतकर्मजन्यफलभागित्वेनोद्देश्यत्वं सम्प्रदानत्वमिति उपक्रम्य त्यक्तुः त्यज्यमानद्रव्यस्वत्वभागित्वेनोद्देश्यत्वमिति सम्प्रदानलक्षणम्, परकीयक्रियाजन्यविभागाश्रयत्वं अपादानत्वमित्यपादानलक्षणम्, प्रतियोगित्वानुयोगित्ववदाधेयत्वमधिकरणत्वञ्च विलक्षणप्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेष इति प्रतिपाद्य परम्परया क्रियाश्रयत्वमेवाधिकरणत्वमाधेयत्वञ्च सप्तम्यर्थ इति च लक्षणानि विभक्त्यर्थाश्च वर्णिताः। शेषेषष्ठीति सूत्रे शेषशब्देन प्रतिपादितस्य सम्बन्धसामान्यस्य क्रियायोगाभावात् कारकत्वं नास्तीति षष्ठीविभक्त्यर्थो न वर्णितः।

ग्रन्थोऽयं शब्दार्थसारमञ्जर्याः कश्चन भाग इति मुद्रितपुस्तकाद् ज्ञायते। मुद्रितोऽयं ग्रन्थः वादार्थसंग्रहे हरिदाससंस्कृतग्रन्थमालायाम् (No. 154)। अस्य रचयिता पूर्वमस्माभिर्निर्दिष्टः (pp. 53, 56, 68) भवानन्दतर्कविद्यागीशः (1700 A. D.) इति ज्ञायते। अस्य आधुनिकेन माधवतर्कालङ्कारेण कृता माधवीसमाख्या व्याख्यापि मुद्रिता (HSS. 154)।

कारकवादार्थः—वादाख्यैष्षड्भिर्लघुप्रकरणैः पूर्णोऽयं ग्रन्थः षट् कारकार्थान् विवृणोति। भवानन्दीयं कारकविवेचनं अनुसरत्ययं ग्रन्थः। चैत्रस्य तण्डुलं पचतीत्यादौ तण्डुलादिसम्पादनद्वारा सम्बन्धिनः चैत्रस्यापि पाकक्रियानिमित्तत्वात् चैत्रेऽतिव्याप्तिरिति क्रियान्वितविभक्त्यर्थान्वितत्वमिति कारकत्वपरिष्कारः कृतः। कारकान्तराप्रयोज्यत्वे सति कारकान्तरप्रयोजकत्वं कर्तृत्वमिति लक्षणं प्रदूष्य तत्तत्क्रियाकर्तृत्वमिति कर्तृत्वलक्षणम्, करणव्यापार्यत्वम्, परसमवेतिक्रियाजन्य फलशालित्वं वा कर्मत्वमिति लक्षणं दूषयित्वा धात्वार्थतावच्छेदकपरसमवेत क्रियाजन्यफलशालित्वं कर्मत्वमिति तल्लक्षणम्, प्राप्यविकार्यनिर्वर्त्यभेदेन तत्त्रैविध्यम्, कारकान्तरेऽचरितार्थत्वे सति क्रियाहेतुत्वं करणत्वमिति, व्यापारवत्वे सति कारणं

करणमिति करणलक्षणद्वयम्, करणीभूतकर्मजन्यफलभागित्वेनोद्देश्यत्वं, त्यागजन्य स्वत्वजनकस्वीकारवत्वं वा सम्प्रदानत्वमिति, परकीयक्रियाजन्यविभागाश्रयत्वमपादानत्वम्, अधिकरणत्वं न धर्मसम्बन्ध इत्युपपाद्य उत्पत्तये स्थितये ज्ञप्तये चापेक्षणीयं अधिकरणमिति लक्षणं प्रदूष्य अधिकरणमिति प्रतीतिसाक्षिकमधिकरणत्वम्, आधेयमितिप्रतीतिसाक्षिकमाधेयत्वमिति प्रतिपाद्य तयोस्स्वरूपसम्बन्धरूपत्वे अतिरिक्तत्वे च अनास्थां प्रदर्श्य विचारस्समापितः। अत्रापि सर्ववाक्यानां शाब्दबोधवर्णनं स्तुत्योंऽशः।

अस्य कर्ता पूर्वमस्माभिरुपवर्णितः (pp. 37, 54, 102) जयरामन्यायपञ्चाननभट्टाचार्यः (1700 A. D.)। ग्रन्थोऽयं वादार्थसंग्रहे मुद्रितः।

समासवादः—समस्तपदानां शाब्दबोधवर्णनपरोऽयं ग्रन्थः वादार्थसंग्रहे मुद्रितः। विभक्तिशून्यपूर्वपदकनामसमुदायवत्वं समासत्वम्, विभक्त्यन्तविभक्तिमन्नामसमुदायत्वं वा समासत्वमिति समासलक्षणमुक्तम्। कर्मधारय-द्विगु-तत्पुरुष बहुव्रीहि-द्वन्द्व-अव्ययीभावाः षट् इति समासं विभज्य प्रत्येकं लक्षणं सोदाहरणं न्यायसिद्धान्तशैल्या प्रतिपादयति। समासप्रयुक्तलक्षणाशून्य तुल्याधिकरणनामद्वयघटितसमासत्वं कर्मधारयत्वम्, संज्ञाविषयान्यत्वे सति संख्यावाचकपूर्वपदकतुल्याधिकरणसमासो द्विगुः, समासप्रयुक्तलक्षणाशून्योत्तरनामपदकत्वे सति लुप्तद्वितीयादिविभक्तिकपूर्वनामपदकसमासत्वं तत्पुरुषत्वम्, नियमतः समासप्रयुक्तलाक्षणिकोत्तर पदसमासो बहुव्रीहिः, द्वन्द्वव्यवहारविषयत्वं द्वन्द्वत्वम्, परस्परान्वितसमस्यमाननिखिलपदार्थबोधकसमासत्वं वा द्वन्द्वत्वम्, नियमतः पूर्वपदार्थविशेष्यकबोधजनक समासत्वं अव्ययीभावत्वमिति समासभेदलक्षणानि परिष्कृतानि। अस्य रचयिता पूर्वोक्तः जयरामन्यायपञ्चाननभट्टाचार्यः (pp. 37, 54, 102)।

शाब्दतरङ्गिणी—षड्भिस्तरङ्गैः पूर्णोऽयमुत्तमो ग्रन्थः ग्रन्थकर्तुरगाधशास्त्र पाण्डित्यरत्नस्य निकषग्रावा विराजते। अभिहितान्वय—अन्विताभिधानवादौ, शक्तिविचारम्, वृत्तित्रैविध्यम्, अभिधाविचारप्रसङ्गात् नव्यप्राचीनवैयाकरण नैयायिकमतविवेचनम्, लक्षणाविचारः, व्यञ्जनाविचारः, वाक्यार्थबोधविचारे भावनामुख्यविशेष्यकबोधवादिनां मीमांसकानाम्, धात्वर्थमुख्यविशेष्यकबोधवादिनां वैयाकरणानां मतमुपपाद्य नैयायिकाभिमतप्रथमान्तार्थमुख्यविशेष्यकबोधस्यौचित्यम्, इत्यादयो विषयाः परिशीलिताः। मुद्रितश्चायं ग्रन्थः मद्रपुरीसंस्कृतविद्यासमित्या।

अस्य रचयिता शाहजीप्रामापरामिधतिरुविशलूरवास्तव्य: वेङ्कट्राम शास्त्रिण: पुत्र: पण्डितराजशास्त्ररत्नाकरविरुदभूषित: अण्णामलैविश्वविद्यालयन्यायवेदान्त-प्राध्यापक: सर्वदर्शनमहापण्डित: व्युत्पत्तिवादलकारार्थविचारव्याख्यादिनिर्माता आधुनिक: विंशतिशतकवासी सुब्रह्मण्यशास्त्रिवर्य: ।

वृत्तिचन्द्रिका —शाब्दबोधोत्पत्तौ वृत्तिज्ञानस्य कारणत्वम्, वृत्तिभेदांश्च प्रतिपादयन् व्युत्पादकोऽयं ग्रन्थ: सविस्तरं वृत्तिलक्षणानि शाब्दबोधप्रक्रियाश्च विशदयति । अमुद्रितोऽयं ग्रन्थ: मद्रपुरी सर्वकारीयहस्तलिखितपुस्तकालये लभ्यते । ग्रन्थस्यास्य रचयिता रामबलपुत्र: परमानन्दशिष्य: घासीराम (1696 A. D.) इति ज्ञायते ।

एवं विद्यानिवासपुत्रेण सिद्धान्तमुक्तावलीकर्त्रा विश्वनाथन्यायपञ्चानेन (1637 A. D.) कृत: कश्चन सुबर्थतत्त्वालोकाख्य: शाब्दबोधग्रन्थ: कारकचक्रापरनामा लन्दननगरपुस्तकालये मिथिलापुस्तकालये वाराणसीसंस्कृतकलाशाला-पुस्तकालये चामुद्रितो लभ्यते । एवं पञ्जाप्विश्वविद्यालयपुस्तकालये वाचस्पति भट्टाचार्यकृत: कारकवाद:, रामनाथपुत्रेण कृष्णमित्रेण कृत: कारकवाद: चन्द्रशेखरपुत्रेण अज्ञातनामधेयेन कृतं कारकतत्त्वमिति ग्रन्थत्रयं शाब्दबोधविषयकं लभ्यते । शिवतर्कालङ्काराख्येन केनचित् कृत: कारकविवेकाख्यो ग्रन्थ: शृङ्गेरी सूच्यां दृश्यते । भवानन्दपुत्रेण रुद्रभट्टाचार्येण कृत: कारकव्यूहाख्य: कश्चन ग्रन्थ: मद्रासससरस्वतीमहालयपुस्तकाययोर्लभ्यते । एवं रुद्रभट्टाचार्येणैव कृत: कश्चन आत्मनेपदशक्तिविचाराख्य: शाब्दबोधग्रन्थ अमुद्रित: सरस्वतीमहालये लभ्यते । रुद्रभट्टोऽयं पक्षतावादकर्ता रामेश्वरपुत्र इति च ज्ञायते ।

एवं न्यायवैशेषिकदर्शनयो: प्रमाणप्रमेयविषयान् प्रक्रियाश्च अधिकृत्य तत्तदाचार्यै: विद्वद्भि: पण्डितैश्च स्वप्रतिभाशक्त्या उद्भाविताभिर्युक्तिभि: पूर्णा: प्रकरणग्रन्थसमा: विचारपूर्णा: लघुग्रन्था: वादग्रन्था: क्रोडपत्राणि च इति कथ्यन्ते । ते विचारा: पण्डितसभासु वादगोष्ठीषु च विचारिता भवन्ति । तादृश्य असंख्या: पुस्तिका विद्यन्ते । तासु काश्चन प्रसिद्धतमा: पण्डितोत्तमैरुद्भाविता इदानीं निर्दिश्यन्ते ।

**वादिविनोदः**—पञ्चभिरुल्लासैः पूर्णोऽयं ग्रन्थः वादकथासु विजिगीषूणां अनिवार्यान् शास्त्रीयानुपायान् आवेदयति । ते चोपायाः—

कथातः प्रश्नतः प्रश्नज्ञानात् प्रश्नपराहतेः ।
प्रश्नानुत्तरतः क्वापि पराहङ्कारशातनम् ॥ इति ।

प्रथमोल्लासे वादकथयोर्लक्षणम्, वादकथाङ्गभूतानां वादिप्रतिवादिनोस्सप्तदशकक्षाणां वर्णनम्, स्फूर्तिमतोः कक्षानियमाभावम् वर्णयन् प्रसङ्गात् निग्रहस्थानानां वादे कथमुपयोग इति, जल्पवितण्डाहेत्वाभासछलजातिनिग्रहस्थानानि सलक्षणानि सप्रकाराणि सोदाहरणानि च वर्णितानि । स्थापनाप्रकाराख्ये प्रकरणे ईश्वरः, सुवर्णस्य तैजसत्वम्, वायोरप्रत्यक्षता, महाप्रलयः, अवान्तरप्रलयः, मुक्तिः, सर्वमुक्तिः, परलोकस्वर्गनरकाः, वृक्षादीनां सात्मकता, इत्येते विषया अनुमान प्रमाणेन साधिताः । द्वितीयोल्लासे द्रव्याणां गुणानाञ्च लघुलक्षणानि विशेषलक्षणानि च वर्णितानि । तद्वर्णनमुखेन प्रश्ने कृते तत्रोत्तरमजानतां अहङ्कारशातनं स्वयमुन्नीय प्रश्नविषया निगूढा निरुक्तयश्चोपवर्णिताः । तृतीयोल्लासे सप्तपदार्थानां साधर्म्य-वैधर्म्ये निरूप्य तत्प्रसङ्गात् वादिना प्रश्ने कृते झटिति प्रश्नविषयज्ञाने सति प्रष्टुरहङ्कारशातनाख्यः विजयोपायो वर्णितः । तत्रैव प्रसङ्गात् निर्विकल्पकसवि-कल्पकप्रत्यक्षे, मतभेदेन पदार्थभेदाः गुणभेदाः प्रत्यासत्तिभेदाः, मीमांसकसिद्धान्तः, नास्तिकमतानि, अनुमानम्, व्याप्तिः, उपाधिः, उपाध्याभासाः हेत्वाभासाः, शाब्दानुभवसामग्री, नामाख्यातसमासार्थाः, पदशक्तिनिरूपणप्रसङ्गात् जातिव्यक्ति शक्तिविचारः इत्येते विषयाः वर्णिताः ।

प्रश्नकर्तुः प्रश्नस्य उत्तरं जानतापि प्रश्नस्याभासतां अयुक्तताञ्च उत्तरं अदत्त्वैव प्रसाध्य अहङ्कारः शातनीय इत्ययं विषयः प्रश्नपराघाताख्ये चतुर्थोल्लासे वर्ण्यते । तत्रोदाहरणतया ईश्वरवादस्स्वीकृतः । प्रश्नानुत्तरतः पराहङ्कारशात-नाख्ये पञ्चमोल्लासे मध्यस्थदुर्दुरूढवादिना झटिति दुष्परिहरणीयार्थगोचरप्रश्ने कृते प्रश्नानुत्तरमेव तस्याहङ्कारशातनोपाय इति प्रतिपादितम् ।

सर्वात्मनात्युत्तमोऽयं ग्रन्थः नानादुरूहदार्शनिकविषयविवेचनपरान् कथा-प्रकारान् विशदयति । नानाविषयेषु आस्तिकनास्तिकदर्शनगतभेदान् सुलभशैल्या प्रतिपादयति । वादकथासु प्रतिज्ञानुसारेण उद्भावितं प्रश्नं पराहत्यैव विजयलाभः

प्रदर्शितः । दुर्दुरूढप्राश्निकानां प्रश्नस्य उत्तरमदत्त्वैव यथा प्रतिष्ठा लभ्येत तथोपायश्च सूचितः । सर्वस्यापि अनुमानप्रामाण्यं प्रतिपादयन्नयं ग्रन्थः मानमनोहरग्रन्थमनुसरतीव दृश्यते । मुद्रितश्चायं ग्रन्थः श्यामचरणग्रन्थमालायां (No. 2) प्रयागनगरे । ग्रन्थेऽस्मिन् मणिकण्ठः, प्राभाकरैकदेशी चन्द्रः, महार्णवकारः, धर्मकीर्तिदिङ्नागभदन्तज्ञानश्रीप्रज्ञाकरगुप्ताः, न्यायालोचनकारः, अनुमानमयूखः, जीवनाथमिश्रः चिन्तामणिः वाचस्पतिमिश्रः शबरस्वामी इत्यादयः नामोल्लेखं निर्दिष्टाः ।

अस्य कर्ता वैशेषिकसूत्रोपस्कार—कणादरहस्य—खण्डनखण्डखाद्यटीका कुसुमाञ्जल्यामोद—आत्मतत्त्वविवेकटीका—भेदरत्न—अनुमानमयूखादिकर्ता प्रयोगपल्लवाख्यव्याकरणग्रन्थस्यापि कर्त्ता मैथिलः भवनाथमिश्रभवान्योः पुत्रः शङ्करमिश्रः (1450—1550 A. D.) । एनमधिकृत्य पण्डितमण्डलीप्रसिद्धा काचन कथापि श्रूयते । अस्य पिता भवनाथमिश्रः सात्त्विक अन्यस्मात् किमपि न याचते । अयाचीति प्रसिद्धस्य तस्य जीवनं सात्त्विकं साधारणञ्चासीत् । शङ्करमिश्रस्य जननकाले तद्ग्रामस्थानां चर्मकाराणां भेरीषु स्वयमेव मङ्गलध्वनिरुत्पन्ना । तां श्रुत्वा चर्मकार अवदत्—यस्य कस्यापि महात्मनः जननवेला इयमिति । ज्ञात्वा चर्मकारः स्वपत्नीं आसन्नप्रसववेदनायाः भवनाथपत्न्याः सेवायै प्रेषितवान् । भवनाथपत्न्या च प्रतिज्ञातम्—बालकः प्रथमं यत् अर्जिष्यति तत्तवैव दापयिष्यामि इति । कदाचित् बालकः शङ्करमिश्रः यदा क्रीडन्नासीत् तद्देशराजेन तेन मार्गेण गच्छता दृष्टः । बालकं वर्चस्विनं दृष्ट्वा किमपि पद्यं पठेत्यवदत् । शङ्करमिश्रेण पृष्टम् किं मदीयम् उत अन्यदीयमिति । किं पद्यमपि रचयितुं शक्नोषीति राज्ञा पृष्टः शङ्करमिश्रः—

बालोऽहं जगदानन्द न मे बाला सरस्वती ।
अपूर्णे पञ्चमे वर्षे वर्णयामि जगत्त्रयम् ॥ इति

प्रत्यवदत् । श्रुत्वैतत् मुग्धो राजा स्वकीयमन्यदीयञ्च पद्यं पठेति उवाच । वेदमन्त्रादन्यस्य कस्यापि पद्यस्य स्वपद्येन तुलनामसहमानो बालकः—

चलितश्चकितश्छन्नः प्रयाणे तव भूपते ।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥

इत्यवदत् । अनेनातीव तुष्टो राजा महान्तं सुवर्णभारमयच्छत् । यथाप्रतिज्ञं तं सुवर्णभारं जननी चर्मकारिण्यै अदापयत् इति ॥

पूर्वमस्माभिर्निर्दिष्टेन (p. 43) रघुनाथशिरोमणिना (1475 A. D.) आख्यातवादः आख्यातापरपर्यायतिङादिप्रत्ययानां कृतावेव शक्तिर्न तु कर्तरीति नैयायिकसिद्धान्तं साधयति । मुद्रितोऽयं ग्रन्थः कलकत्तायाम् (B. I. S. No. 98) अस्य मथुरनाथेन (1570 A. D.) जयरामन्यायपञ्चाननेन च (1600–1700 A.D.) कृते व्याख्ये बम्बयीनगरे मुद्रिते । भवानन्दविद्यासागरेण (1600 A.D.) कृता व्याख्या अमुद्रिता राजेन्द्रलालसूच्यां दृश्यते । रघुदेवन्यायालङ्कारेण (1700 A.D.) कृता व्याख्या बम्बयीनगरे मुद्रिता । रुद्रन्यायवाचस्पतिकृता (1700 A. D.) च व्याख्या बम्बयीनगरे मुद्रिता । रामकृष्णभट्टाचार्येण (1700 A. D.) कृता व्याख्या अमुद्रिता सरस्वतीमहालये लन्दनपुस्तकालये अनन्तशयने च लभ्यते । कृष्णभट्टेन (1800 A. D) कृता आख्यातार्थनिर्णयाख्या व्याख्या अमुद्रिता बम्बयी विश्वविद्यालयपुस्तकालये लभ्यते । तोलप्पाचार्यकृता दीपिकाख्या व्याख्या अनन्तशयने, राघवपञ्चाननभट्टाचार्यकृता ग्रन्थिविमुक्तिनाम्नी व्याख्या लन्दनपुस्तकालये च लभ्यते । रामचन्द्रसिद्धान्तवागीशकृता तु अपरा व्याख्या बम्बयीनगरे मुद्रिता ।




एवं रघुनाथशिरोमणिना कृतः कृतिसाध्यतानुमानवादाख्यः कश्चन ग्रन्थः वादवारिधौ मुद्रितः, यस्मिन् पाको मत्कृतिसाध्यतः स्वचिकीर्षाप्रयोजकेच्छाविषयसाधनत्वात् इत्यनुमाने साध्यतावच्छेदकविचारः कृतः । एवं

नञ्वादाख्यः कश्चन ग्रन्थः कलकत्तायां (B. I. S. 98) मुद्रितः। तस्मिन् नञः स्वरूपम् नञोऽर्थश्च विविच्य संसर्गाभावः अन्योन्याभावश्च नञर्थ इति प्रतिपादितम्। अस्यापि मथुरानाथेन कृता काचन व्याख्या आसीदिति संस्कृतसाहित्यपरिषद् कलकत्तासूच्याः ज्ञायते हार्वेर्ड ओरियण्टल ग्रन्थमालायाः (No. 40) 27 तमे पत्रे निर्दिष्टश्च। कृष्णदाससार्वभौमकृता नञ्वादटिप्पणी बीकानेरपुस्तकालये विद्यते अमुद्रिता च। गदाधरभट्टाचार्यकृता टीका कलकत्तायां (B. I. S. 98) वाराणस्याञ्च मुद्रिता। रामभद्रसार्वभौमकृता व्याख्या आसियाटिकसोसाइटि कलकत्तापुस्तकालये लभ्यते। जयरामन्यायपञ्चाननकृता काचन नञ्वादटिप्पणी वाराणसी संस्कृतकलाशालापुस्तकालये हालसूच्याम् मध्यप्रदेशसूच्याञ्च दृश्यते। कारिकावलीकारेण विश्वनाथन्यायपञ्चाननेन कृता अपरा व्याख्या बन्दरकारसूच्यां मिथिलापुस्तकालये च लभ्यते। भवानन्देन कृता अर्थप्रदीपाख्या नञ्वादव्याख्या मद्रासपुस्तकालयेऽमुद्रिता विद्यते। रघुदेवीया काचन विवेचनाख्या व्याख्या मद्रासअडयारकलकत्ताबरोदाबन्दरगारतिरुवनन्तपुरतञ्जपुरपुस्तकालयेषु मिथिलायाञ्च लभ्यते। सरस्वतीमहालयपत्रिकायाः चतुर्विंशतितमे भागे द्वितीयेंऽशे (24-2) मुद्रिता च। रामकृष्णभट्टाचार्यकृता विवेकाख्या व्याख्या बन्दरगार-बरोडामिथिलावाराणसीसंस्कृतकलाशालातञ्जपुरपुस्तकालयेषु लभ्यते। रुद्रन्याय-वाचस्पतिकृता काचन व्याख्या आसीदिति वङ्गीयन्यायचर्चायाः (pp. 273-75)



ज्ञायते। जगन्नाथतर्कपञ्चाननकृता काचन विवेकाख्या व्याख्या मिथिलासूच्यां दृश्यते। पट्टभिरामशास्त्रिकृता काचनापरा विवेकाख्या व्याख्या आफ्रेटसूच्यां दृश्यते। कृष्णमित्राचार्यकृता काचन टीका औध-सूच्यां दृश्यते। रामनाथकृता व्याख्या वाराणस्यां वेणीदत्तसङ्कलने लभ्यते। शुद्धसत्वार्यशिष्येण केनचित् कृता व्याख्या मैसूरपुस्तकालये लभ्यते।

एवं नियोज्यान्वयवाद इति कश्चन ग्रन्थकः वादवारिधौ मुद्रितः। स च मीमांसकैस्सह विध्यर्थविचारे विसंवदते। वाजपेयेन यजेत इत्यादिवाक्ये यागस्य स्वर्गसाधनत्वेन बाधप्रमानुदयात् याग एवेष्टसाधनमिति शाब्दबोधो नैयायिकानाम्, नापूर्ववाच्यतेति विशदयति।

पदार्थतत्वनिरूपणम्—रघुनाथशिरोमणिकृतोऽयं ग्रन्थः। पदार्थखण्डनम्, पदार्थतत्वम् इति नामान्तराण्यस्य ग्रन्थस्य दृश्यन्ते। जरन्नैयायिकैः प्राचीनैश्च वैशेषिकैरभ्युपेतानां पदार्थानां कस्यचिदनतिरिक्तत्वम्, कस्यचिदतिरिक्तत्वम्, कस्यचित् खण्डनञ्च तर्केण स्थापयत्ययं ग्रन्थः। दिगाकाशकालाः मनः, परमाणुः ईश्वरस्य परिमाणत्वम्, पृथक्त्वम्, परत्वापरत्वे, विशेषपदार्थः, चित्ररूपम्, वायोर प्रत्यक्षत्वम्, सत्ताजातिः गुणत्वजातिः, अभावाभावभावत्वम्, प्रत्यभिज्ञा, संशय इत्येते पदार्थाः खण्डिताः। मूर्तत्वमूर्तत्वयोः जातित्वम्, स्वत्वस्य पदार्थान्तरत्वम्, कारणत्वस्य पदार्थान्तरत्वम् संख्यायाः वैशिष्ट्यस्य च पदार्थान्तरत्वञ्चेति विषयाः स्थापिताः। मुद्रितोऽयं ग्रन्थः पण्डितग्रन्थमालायां वाराणस्याम्। अस्य रघुदेवन्यायालङ्कारकृता व्याख्या च तत्रैव मुद्रिता। एवं रामभद्रसार्वभौमकृता पदार्थतत्वनिर्णयटीकापि पण्डितग्रन्थमालायामेव मुद्रिता। आधुनिकेन कृष्णमित्राचार्येण कृता रामभद्रीयव्याख्याया अपि टिप्पणी अमुद्रिता सरस्वतीमहालये लभ्यते। जयरामन्यायपञ्चाननकृता काचनापरा व्याख्या अमुद्रिता मद्रासपुस्तकालये लभ्यते। विद्यानिवासपुत्रेण विश्वनाथपञ्चाननेन पदार्थतत्वालोकाख्या पदार्थतत्वनिर्णयव्याख्या अमुद्रिता लन्दनभारतकार्यालयपुस्तके वाराणसीसंस्कृतकलाशालायाञ्च लभ्यते। कालीचरणन्यायालङ्कारतरणिदेव्योः पुत्रेण रामनारायण शिष्येण कृष्णकान्तविद्यावागीशेन कृता काचन व्याख्या इति लन्डनपुस्तकालयसूच्या एव ज्ञायते। अपरा काचन गोविन्दभट्टाचार्यकृता टीका अमुद्रिता नवद्वीपपुस्तकालये लभ्यते।




आस्तिकाः नास्तिकाश्च दार्शनिका आचार्याः विद्वांसश्च स्वस्वसिद्धान्तस्य उपादेयत्वसाधनाय विशेषतः कांश्चन वादान् युक्त्या इतरवादनिराकरणपूर्वकं प्रसाध्य तानेव वादान् आधारभूमीकृत्य स्वस्वसिद्धान्तभवनानां निर्माणे बद्धादरा दृश्यन्ते। प्रसिद्धश्चेदम् —

(१) आरम्भवादः कणभक्षपक्षः सङ्घातवादस्तु भदन्तपक्षः।
सांख्यादिपक्षः परिणामवादः वेदान्तपक्षस्तु विवर्तवादः॥

(२) वाचस्पतेरवच्छिन्नः आभासो वार्तिकस्य च।
सङ्क्षेपशारीरककृतः प्रतिबिम्बं तथेष्यते॥ इति।

(३) आत्मख्यातिरसत्ख्यातिः अख्यातिः ख्यातिरन्यथा।
तथाऽनिर्वचनीयख्यातिरित्येतत् ख्यातिपञ्चकम्॥
योगाचारो माध्यमिकः तथा मीमांसकोऽपि च।
नैयायिकोऽद्वैतिनश्च ख्यातीरेताः क्रमाज् जगुः॥

आरम्भवाद - जगत्कारणतावाद - मोक्षकारणतावाद - ख्यातिवादविषयकास्सर्वे वादाः केवलं रेखारूपेण सङ्क्षिप्तताः प्रदर्श्यन्ते। विस्तृतं विवरणन्तु यथावसरं तत्तत्प्रकरणे भविष्यति। केवलं न्यायवैशेषिकदर्शनसम्बद्धाः वादमन्या एव अत्र निर्दिश्यन्ते।

## दार्शनिका वादाः वादिनश्च

आत्मवादे

- असत्कार्यवादः
  - चार्वाकः
    - भूतचैतन्य वादः
    - सङ्घात वादः
    - नैरात्म्य वादः
  - जैनः
    - अनेकान्तवादः
    - स्याद्वादः
    - देहपरिणामात्म वादः
    - परिणाम्यात्म वादः
  - बौद्धाः
    - माध्यमिक — शून्यवादः
    - वैभाषिक — अनात्मवादः
    - सौत्रान्तिक — क्षणिकात्मवादः
    - योगाचार — विज्ञानात्मवादः
- सत्कार्यवादः
  - मीमांसक — विहितकर्माधिकारवादः
  - नैयायिक — परिणामवादः
  - सांख्य — परिणामवादः
  - योग — परिणामवादः
  - अद्वैतिनः — विवर्तवादः
  - विशिष्टाद्वैती — परिणामवादः
  - द्वैती-आरम्भवादः

## जगत्कारणतावादे दार्शनिका वादाः वादिनश्च




मोक्षकारणतावादे दर्शनिका वादाः वादिनश्च
रत्नत्रयवादः
जैनाः
आस्रववादः
बौद्धाः
पदार्थतत्व
ज्ञानकारणतावादः
वैशेषिकाः
कर्मकारणतावादः
मीमांसकाः
ज्ञानकर्मसमुच्चयवादः
नैयायिकाः
ज्ञानकारणतावादः
अद्वैतिनः
प्रपत्तिकारणतावादः
रामानुजीया विशिष्टाद्वैतिनः
भक्तिकारणतावादः
द्वैतिनः
ईश्वरध्यानकारणतावादः
योगिनः
प्रकृतिपुरुषभेदज्ञानकारणतावादः
सांख्याः


ख्यातिवादे दार्शनिका वादाः वादिनश्च
असत्ख्यातिवादः
माध्यमिकः
आत्मख्यातिवादः
योगाचारः
अख्यातिवादः
मीमांसकाः
अन्यथाख्यातिवादः
नैयायिकः
साधिष्ठाना—
सत्ख्यातिवादः
द्वैतिनः
माध्वाः
सत्ख्यातिः
यथार्थख्यातिवादः
रामानुजीयाः
सदसत्ख्यातिवादः
वैयाकरणाः
सांख्याः
अनिर्वचनीयख्यातिवादः
अद्वैतिनः

## दर्शनिकास्तेषां वादाः विभिन्नविषयकाः

**चार्वाकाः**
1. भूतचैतन्यवादः
2. सङ्घातवादः
3. नैरात्म्यवादः

**जैनाः**
1. अनेकान्तवादः
2. स्याद्वादः
3. परिणाम्यात्मवादः

**बौद्धाः**
1. असत्कार्यवादः
2. सन्तानवादः
3. असत्ख्यातिवादः
4. आत्मख्यातिवादः

**सांख्याः**
1. परिणामवादः
2. सदसत्ख्यतिवादः

**योगिनः**
1. परिणामवादः

**वैशेषिकः**
1. निमित्तकारणतावादः

**नैयायिकाः**
1. परिणामवादः
2. अन्यथाख्यातिवादः

**वैयाकरणाः**
1. सदसत्ख्यातिवादः
2. धात्वर्थमुख्यविशेष्यवादः

**मीमांसकः**
1. स्वतःप्रमाण्यवादः
2. अपौरुषेयत्ववादः
3. अभिहितान्वयवादः
4. अन्विताभिधानवादः
5. अख्यातिवादः
6. कर्मसाधनतावादः
7. अर्थभावनामुख्यबोधवादः

**अद्वैतिनः**
1. विवर्तवादः
2. ज्ञानसाधनतावादः
3. अभिन्ननिमित्तोपादानकारणतावादः
4. अनिर्वचनीयख्यातिवादः
5. प्रतिबिम्बवादः
6. अवच्छेदवादः
7. आभासवादः
8. एकजीववादः
9. बहुजीववादः

**विशिष्टाद्वैतिनः**
1. उपादानकारणतावादः
2. परिणामवादः
3. प्रपत्तिसाधनतावादः
4. सत्ख्याति-यथार्थख्यातिवादः

**द्वैतिनः**
1. असत्ख्यातिवादः
2. साधिष्ठान-असत्ख्यातिवादः
3. भक्तिसाधनतावादः

रघुनाथशिरोमणिना कृतः कश्चन वाजपेयवादाख्यः ग्रन्थः वादवारिधौ मुद्रितः यस्मिन् 'स्वाराज्यकामो वाजपेयेन यजेत' वाजपेयेन इष्ट्वा बृहस्पतिसवेन यजेत इत्यादिवाक्येषु मीमांसाभिमतं अन्वयं प्रदूष्य नैयायिकाभिमत अन्वयबोधस्साधितः।

कारणतावादः—अपूर्णोऽयं ग्रन्थः जगदीशभट्टाचार्येण (1600 A.D) रचितः वादवारिधौ मुद्रितः। कारणत्वलक्षणं बहुधा विकल्प्य यदवच्छिन्नं प्रति यादृशसंसर्गेण नियताव्यवहितपूर्ववर्तितावच्छेदकं यदन्यसिध्यनिरूपकं तद्रूपवत्त्वमेव तदवच्छिन्नं प्रति तादृशसंसर्गेणैव कारणत्वमिति सिद्धान्तलक्षणं निरुच्य तस्य समवाय्यसमवायिनिमित्तभेदेन भेदमुपपाद्य उदाहरणानि च प्रतिपादयति।

नवद्वीपवासिना रघुदेवन्यायालङ्कार—गदाधरभट्टाचार्ययोर्गुरुणा हरिरामतर्कवागीशेन (1625 A.D.) चिन्तामणिदीधितिप्रतिपादितान् विषयानधिकृत्य विचारनाम्ना वादनाम्ना च बहवः विचारप्रधाना लघुग्रन्थाः विरचिता विद्यन्ते। तान् अधिकृत्य पश्चात्तनैश्च विचाराः प्रवृत्ता दृश्यन्ते। तेषु अनुमितिपरामर्शबाधबुद्धिनामा ग्रन्थ अमुद्रितः कल्कत्तासंस्कृतकालाशालापुस्तकालये लभ्यते तस्य विवरणं प्रिंसआफ्वेल्स् सरस्वतीभवन् स्टूडीस् V भागे (p. 148) दृश्यते। अनुमितेर्मानसत्वविचाराख्यः कश्चन ग्रन्थः तारानाथकृतया सरलाव्याख्यया कल्कत्तायां मुद्रितः। एवकारार्थवादाख्यः कश्चन ग्रन्थः अमुद्रित कल्कत्तासंस्कृतकलाशालापुस्तकालये मैसूरपुस्तकालये च लभ्यते यमाधृत्य माधवभट्टाचार्यादिभिः एवकारार्थमञ्जर्याख्याः ग्रन्था व्यरचिषत। काशीमरणकारणतावादाख्ये काशीमरणस्य साक्षादेव मुक्तिहेतुत्वे तत्वज्ञानस्य मुक्तिहेतुत्वं नास्तीतिवादिनां मतं खण्डितं विद्यते। ग्रन्थोऽयं वादवारिधौ प्रकाशितः।

ज्ञानद्वयवादनामा कश्चन ग्रन्थ अमुद्रित अड्यारलन्डनमिथिलामद्रास उज्जैन्पुस्तकालयेषु लभ्यते। ज्ञानलक्षणाविचाराख्यः ग्रन्थः भट्टाचार्यकृतव्याख्यया कल्कत्तायां मुद्रितः। द्रव्यमतरहस्यनामा ग्रन्थः कल्कत्तासंस्कृतकलाशालापुस्तकालये लभ्यते। धर्मितावच्छेदकप्रत्यासत्तिवादाख्यः कश्चन अनुमितिविषयक अमुद्रितः नव्यप्राचीनगतभेदप्रदर्शनपरः मद्रासकल्कत्तासंकृतकलाशालातञ्जपुरपुस्तकालयेषु लभ्यते। अस्य गादाधरीव्याख्यापि (Hall) नसूच्यां दृश्यते। धर्मितावच्छेदवादाख्यया अड्यारबरोडामिथिलामैसूरउज्जै

पुस्तकालयेषु च लभ्यते । ध्वंसजन्यभावयोः कार्यकारणभाववादाख्यः कश्चन ग्रन्थः जैमिनिकान्ततर्कवागीशतीर्थकृतया व्याख्यया कलकत्तायां अनुसन्धानग्रन्थमालायां (No. 12) मुद्रितः । अनुमितिपरामर्शविषयकनव्यमतपरिशीलनपरः नव्यमतवादाख्यः ग्रन्थः सरस्वतीभवनअडयार - बन्दरगारमद्रासमैसूरतञ्जपुर पुस्तकालयेषु लभ्यते । न्यायपदार्थतत्ववादाख्यः ग्रन्थः पण्डितग्रन्थमालायां (No. 9) मुद्रितः । प्रतियोगिज्ञानस्य कार्यकारणभाववादः, बाधरहस्यवादः विशेषणज्ञानवादः व्याप्त्यनुगमरहस्यम्, संशयप्रत्यक्षतावादः, सामग्रीविचारवाद इत्येते कलकत्तासंस्कृतकलाशालापुस्तकालये लभ्यन्ते । मीमांसकानां स्वतः प्रामाण्यवादं तत्रापि प्राचीनगुरुमतखण्डनपरः प्रामाण्यवादाख्यग्रन्थः अमुद्रितः तञ्जपुरकलकत्तासंस्कृतकलाशालापुस्तकालयलभ्यः । विश्वबन्धुभट्टाचार्यकृत प्रभाख्यव्याख्योपेतः प्रामाण्यवादः वाराणस्यां कलकत्तायाञ्च मुद्रितश्च । मङ्गलश्लोकविषयकः अविगीतशिष्टाचारविषयत्वेन हेतुना मङ्गलस्य साफल्यसाधकश्च मङ्गलवादाख्यः ग्रन्थः अमुद्रितः तञ्जपुरकलकत्तापुस्तकालययोर्लभ्यते । मुक्तिवादविचाराख्यः कश्चन ग्रन्थोऽपि विरचितः कलकत्तायां मुद्रितश्च । तस्मिन् उदयनाचार्य कन्दलीकारादीनां मोक्षलक्षणं सविमर्शं परिष्कृतम् । आत्यन्तिकी दुःखनिवृत्तिर्मोक्ष इति लक्षणे किं नाम आत्यन्तिकत्वम् इति प्रश्नमुद्भाव्य आत्यन्तिकत्वं सदलकृत्यं परिष्कृतम् । चरमदुःखध्वंसोऽपवर्ग इति लक्षणम्, भाट्टोक्तं नित्यसुखाभिव्यक्तिर्मुक्तिरिति लक्षणम्, प्रसङ्गात् वेदान्तिमतस्य मन्दतां च उपपाद्य आनन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितमित्यादिश्रुतीनां, अशरीरंवावसन्तं प्रियाप्रिये न स्पृशत इत्यादिप्रसिद्धोपनिषदवाक्यानाञ्च अर्थवर्णनं कृत्वा आत्यन्तिकदुःखसाधनध्वंस एव मोक्ष इति मोक्षलक्षणं सिद्धान्तितम् । कालीपदभट्टाचार्यकृतया मुक्तिलक्ष्मीनाम्न्या व्याख्यया सहितोऽयं ग्रन्थः कलकत्तासंस्कृतमहाविद्यालयगवेषणाग्रन्थमालायां (No. 4) मुद्रितः । एवं तरणिमिश्रकृतरत्नकोशग्रन्थोपरि (p. 130) स्वीयाशयप्रकाशनपरः कश्चन रत्नकोशविचाराख्यः ग्रन्थ अपूर्णः खण्डितश्च अडयार बन्दरगारउज्जैनमद्रासकलकत्तातञ्जपुरमिथिलापुस्तकालयेषु लभ्यते । अस्य परिशीलने तरणिमिश्रकृतः ग्रन्थः रत्नकोषः कारिकामय इति च भाति । क्वचित् रत्नकोषकारिकावादार्थ इति नामापि दृश्यते । वह्निव्याप्यधूमवान् पर्वत इति परामर्शात् वह्निव्याप्यधूमवान् पर्वतो वह्निमानिति अनुमितिवादिनामाचार्याणामाशयं प्रकटयन् लिङ्गोपहितलैङ्गिकभानविचाराख्यः ग्रन्थ अमुद्रित तञ्जपुरपुस्तकालये

लभ्यते। स्वरूपसम्बन्धविशेष एव विषयता न त्वतिरिक्तः कश्चन सम्बन्ध इति वादिनां प्राचीनानां मतं प्रदूष्य तस्या अतिरिक्तसम्बन्धतां साधयन् विषयतावादाख्यः ग्रन्थः वादवारिधौ मुद्रितः। एवं सामग्रीप्रतिबन्धकतावादः स्मृति निश्चयहेतुतावादः स्वत्वजनकतावाद इति ग्रन्थत्रयं वादवारिधौ मुद्रितम्। एकक्षणावच्छिन्न स्वीयसकलबहिरङ्गानुयोगिक जलप्रतियोगिकसंयोग इति लक्षणं सदलकृत्यं परिष्कुर्वन् स्नानवादाख्यः कश्चन ग्रन्थः वादवारिधौ मुद्रितः। विषयत्वावच्छिन्नकारणतावत्वात् संस्कारस्य सविषयकत्वम्, सामान्यतः स्मृतित्वावच्छिन्नं प्रति संस्कारत्वेनैव हेतुत्वं इति प्रतिपादयन् स्मृतिसंस्कारवादाख्यः कश्चन ग्रन्थः वादवारिधौ मुद्रितः। एवमन्येऽपि न्यायनव्यमतवादप्रतिबन्धकतावादप्रत्यासत्तिवादप्रमाणप्रमोदवादविशिष्टवैशिष्ट्यबोधवादस्वप्रकाशरहस्यवादाख्याः वादग्रन्थाः गोपिनाथकविराजमहाशयेन निर्दिष्टा विद्यन्ते।

हरिरामतर्कवागीशशिष्येण जीवाचार्यपुत्रेण पूर्वमस्माभिरुपवर्णितेन (p. 48) गदाधरभट्टार्येण कृताः बहवो वादग्रन्थाः विद्यन्ते। तेषु अपेक्षाबुद्धिकारणतावादाख्यः ग्रन्थः मीमांसकमतखण्डनपूर्वकं अपेक्षाबुद्धेरेकत्वभिन्नसंख्याहेतुत्वसाधनपरतां वर्णयति। मुद्रितोऽयं ग्रन्थः वादवारिधौ। अनन्यथासिद्धनियतपूर्ववर्तिजातीयत्वं कारणत्वमिति लक्षणकथनपरोऽयं कारणतावादाख्यः ग्रन्थः वादवारिधौ मुद्रितः। स्मृतेर्निर्विकल्पकत्वपरिशीलनपरोऽयं निर्विकल्पकस्मरणवादाख्यः ग्रन्थोऽपि वादवारिधौ मुद्रितः। मुक्तिवादाख्यः ग्रन्थ अनुमानशब्दप्रमाणाभ्यां मुक्तिं व्यवस्थाप्य, मुक्तौ अधिकारिणं उपपाद्य, मुक्तौ दुःखप्रागभावत्ववादि प्राभाकरमतं प्रदूष्य, एकदण्डित्रिदण्डिपातञ्जलकापिलमतसिद्धानि मुक्तिलक्षणानि निरस्य, नैयायिकमतेन दुःखात्यन्तनिवृत्तेः, दुरितात्यन्तनिवृत्तेर्वा मुक्तित्वं व्यवस्थापयति। मुद्रितोऽयं ग्रन्थः वाराणस्या संस्कृतसाहित्यपरिषन्मालायाम् (No. 4) अस्य शिवरामकृता टीका शिवचन्द्रसार्वभौमभट्टाचार्यशिष्येण हरिदासभट्टाचार्यपुत्रेण कालीपदतर्काचार्येण कृता च मुक्तिदीपिकाख्या च व्याख्या तत्रैव मुद्रिता। गोलोकनारायणकृता मुक्तावल्याख्या व्याख्या अमुद्रिता अडयारमद्रासपुस्तकालययो र्लभ्यते। विवृत्याख्या विश्वनाथकृता व्याख्या मिरजापुरे अमुद्रिता उपलभ्यते। कालीशङ्करभट्टकृतं मुक्तिवादक्रोडपत्रं वाराणस्यां क्रोडपत्रसङ्ग्रहे (Chs. S. S. 25) मुद्रितम्। विशिष्टप्रतियोगिको वैशिष्ट्यबोधः विशिष्टानुयोगिको वैशिष्ट्यबोधश्चेति द्वेधा

विभज्य विशिष्टवैशिष्ट्यबोधं विचारयन्नयं विशिष्टवैशिष्ट्यबोधवादाख्यः ग्रन्थः सौन्दडोपाध्यायं बहुत्र केचित् अपरे इत्यादिशब्दैश्च बहूनां आशयभेदं विवृणोति। मुद्रितोऽयं ग्रन्थः वादवारिधौ। विषयतावादाख्यः ग्रन्थः विषयतायाः स्वरूपम्, तस्य स्वीकारे हेतुम्, सा पदार्थान्तरं अथवा स्वरूपसम्बन्धविशेषो वेति विचारयति। विष्णुप्रीतिवादोऽयं ग्रन्थः साक्षेपपरिहारं विष्णुविषयकः विहितकर्मकर्तुरनुरागरूपो भावविशेष एव विष्णुप्रीतिशब्दार्थ इति प्रतिपादयति। संशयवादनामा ग्रन्थः सांप्रदायिकमतेन संशयलक्षणमुपपाद्य कोटिद्वयप्रकारताद्वयनिरूपितैकविशेष्यताशालिज्ञानत्वं संशयत्वमिति संशयलक्षणं परिष्करोति। स्वर्गवादनामा अन्यग्रन्थः दुःखासम्भिन्नत्वादिविशिष्टसुखत्वं स्वर्गपदशक्यतावच्छेदकमिति विशदयति। एते ग्रन्थाः वादवारिधौ मुद्रिताः। जगदीशभट्टाचार्यगुरुणा भवनाथपुत्रेण रामभद्र सार्वभौमेन पूर्वमुपवर्णितेन (p. No. 135) कृतस्सिद्धान्तसाराख्यः ग्रन्थः न्यायदर्शनगतप्रमेयविवेचनपरः स्वतन्त्रग्रन्थ अमुद्रित सरस्वतीमहालये लभ्यते। कौण्डिन्यगोत्रजेन कण्डरमाणिक्यग्रामवासिना वेदान्तपरिभाषाशशधरीयव्याख्यादिकर्त्रा धर्मराजाध्वरिणा रचितः युक्तिसंग्रहाख्यः ग्रन्थः अनुमितित्वञ्च स्वज्ञानाजन्यज्ञानप्रकारधर्मसमनियतत्वमिति लक्षणं प्रतिपादयन् व्यधिकरणधर्मता—व्याप्तिवादादींश्च संगृह्णाति। अनुमानविषयकबहुविचारसंग्राहकोऽयममुद्रितः सरस्वतीमहालये लभ्यते।

तर्कभाषाव्याख्या—आलोकव्याख्याकारेण अग्निहोत्रभट्टेन कृतः कश्चन प्रामाण्यवादाख्यः ग्रन्थ अमुद्रितः मद्रासपुस्तकालये लभ्यते। परमयं मदसीयग्रन्थान्तरस्य कश्चन भाग इति ज्ञायते। न्यायकौस्तुभकर्त्रा महादेवपण्डितेन कृत ईश्वरवादाख्यः ग्रन्थः न्यायकुसुमाञ्जल्याद्युक्तयुक्तीरन्याश्च स्वतन्त्रा युक्तीः प्रतिपाद्य ईश्वरं साधयति। अमुद्रितोऽयं मद्रासपुस्तकालये लभ्यते। रामभद्रसार्वभौमशिष्येण न्यायसिद्धान्तमालाकर्त्रा जयरामन्यायपञ्चाननेन कृतः नैयायिकैरभ्युपगतस्य यस्य यद्धर्मत्वेन ज्ञानमुचितम्, तस्य तद्भिन्नधर्मत्वेन ज्ञानरूपस्य अन्यथाख्यातिवादस्य पोषकोऽयं अन्यथाख्यातिवादनामा ग्रन्थ अमुद्रितः सरस्वतीमहालये लभ्यते। अनेनैव कृतः न्यायवैशेषिकदर्शनगतपदार्थान् तद्धर्मांश्च प्रतिपादयन् पदार्थमाला· नामा अपरो ग्रन्थ अमुद्रितः द्रव्यनिरूपणान्तमुपलभ्यते मद्रासपुस्तकालये। निर्दिष्टश्चायं ग्रन्थकारेण स्वकृतन्यायसिद्धान्तमालायाम्। रघुदेवभट्टाचार्यकृताः

परामर्शविषयकनिरुक्तिप्रकाशाख्यः ग्रन्थः विशिष्टवैशिष्ट्यबुद्धिं चतुर्धा विभज्य-विचारपरः विशिष्टवैशिष्ट्यवादाख्यः ग्रन्थः, विशेष्ये विशेषणम् तत्रापि विशेष-णान्तरमिति न्यायेन, एकत्र द्वयमिति, विशिष्टे वैशिष्ट्यमिति, विशिष्टस्य वैशिष्ट्यमिति न्यायैश्च वैशिष्ट्यबोधं चतुर्धा प्रकाशयन् विशिष्टवैशिष्ट्यबोधवादाख्यश्च ग्रन्थाः अमुद्रिता सरस्वतीमहालये लभ्यन्ते । विधिवादाख्यः कश्चन रामचन्द्रसूरिकृत अमुद्रित भोजनकामः पचेत स्वर्गकामो यजेत इत्यादिवाक्येषु न्यायसिद्धान्तरीत्या-लिङर्थं प्रतिपादयति । रामेश्वरपुत्रेण रुद्रभट्टेन कृतः पक्षतावादः सिषाधयिषा-विरहविशिष्टसिध्यभावः पक्षतेति लक्षणोपरि विचारं प्रवर्तयति । प्रमाणतत्वाख्यश्च ग्रन्थः प्रकरणग्रन्थः । उभावपि अमुद्रितौ सरस्वतीमहालयस्थौ ।

प्रागभावास्वीकर्तॄणां मतनिरासपूर्वकं प्रागभावं साधयन् प्रागभावोज्जीव-नाख्यः वज्रटङ्ककृत अमुद्रित मद्रासपुस्तकालये विद्यते । श्रीवत्सगोत्रजेन रामभद्रदीक्षितपौत्रेण अण्णादीक्षितलक्ष्म्योः पुत्रेण अश्वत्थनारायणदीक्षितेन कृतः व्युत्पत्तिवादक्रोडपत्ररूपः वादार्थभावाख्यः कश्चन ग्रन्थः अमुद्रित सरस्वतीमहालये लभ्यते । मैसूरवास्तव्येन राजकीयविदुषा रामशास्त्रिणा कृतश्शतकोटिरिति वादग्रन्थः । तस्मिन् सत्प्रतिपक्षलक्षणे विशिष्टान्तराघटितत्वनिवेशविषये गादा-धर्युक्तविचारोपरि शतं कोटय आपादिता विद्यन्ते । ग्रन्थोऽयं सत्प्रतिपक्षेण साकं काञ्चीपुरे मुद्रितः । शेषार्यवंशजेन अनन्ताख्यानपण्डितेन शतकोटिखण्डननामा ग्रन्थ रचित अमुद्रितश्च मद्रासपुस्तकालयस्थः । तिरुप्पुक्कुषिग्रामाभिजनेन काञ्चीपुर-वासिना देशिकताताचार्यपुत्रेण बहुलभूषणवेंकटाचार्यश्रीनिवासयतिशिष्येण गोपाल-ताताचार्यपित्रा विशिष्टाद्वैतवादग्रन्थकर्त्रा कृष्णताताचार्येण कृतश्च शतकोटि-खण्डननामा ग्रन्थ अमुद्रित मद्रासपुस्तकालये लभ्यते । श्रीशैलकुलजेन कृष्णताताचार्यपुत्रेण गोपालताताचार्येण कृतः शतकोटिखण्डनमण्डननामा ग्रन्थः अमुद्रित मद्रासपुस्तकालये लभ्यते । विजयराघवाचार्यकृतश्च शतकोटिखण्डन-मुण्डननामा ग्रन्थ मद्रासपुस्तकालये लभ्यते । एवं विजयराघवकृतौ सत्प्रतिपक्ष-हेतोः दूषकताबीजनिरूपणपरः समानबलविचाराख्यः, गदाधरोक्ते बाधलक्षणे असम्भवदोषमापादयन् बाधक्रोडपत्राख्यश्च ग्रन्थ इति द्वावपि अमुद्रितौ मद्रास पुस्तकालये लभ्येते ।

दक्षिणदेशजेन अप्पाशास्त्रिणा कृतः सव्यभिचारलक्षणवादाख्यः ग्रन्थः अमुद्रित मद्रासपुस्तकालये लभ्यते। ग्रन्थोऽयं साध्यसन्देहजनककोटिद्वयोपस्थापक पक्षधर्मताज्ञानविषयत्वे सति हेत्वभिमतस्स इति तत्वचिन्तामण्युक्तसव्यभिचारलक्षण व्याख्यावसरे दीधित्युक्तान् गादाधर्युक्तांश्च सव्यभिचारलक्षणसम्बद्धान् विषयान् सङ्गृह्य गदाधरोक्तिं परिशीलयति। बाधज्ञानस्य अनुमितिप्रतिबन्धकता नास्तीति वादखण्डनपरः प्रतिबन्धकतावादाख्यः कृष्णताताचार्यविरचितः बालमनोरमा मुद्रणालये मुक्तावल्या सह मुद्रितः। विशेषलक्षणावसरे मुक्तावल्याः "स्वत एव व्यावृत्त" इत्यादिग्रन्थव्याख्याप्रसङ्गे प्रकाश (दिनकरीय) कर्त्रा महादेवेन परिष्कृतं स्वतोव्यावृत्तत्वञ्च स्वभिन्नलिङ्गकस्वविशेष्यकस्वजातीयेतरभेदानुमित्य-विषयत्वमिति लक्षणं परिशीलयन् कृष्णसुधीपण्डितेन कृतश्च विशेषवादार्थाख्यः कश्चन ग्रन्थ अमुद्रितः मद्रासपुस्तकालये लभ्यते। अनुमितिकारणीभूताभावप्रति-योगियथार्थज्ञानविषयत्वम्, यद्विषयत्वेन लिङ्गज्ञानस्य अनुमितिविरोधित्वं ज्ञायमानं सदनुमिति प्रतिबन्धकं यत् तत्त्वं वा हेत्वाभासत्वमिति मण्युक्तहेत्वाभाससामान्य-लक्षणव्याख्याव्याजेन विचारं प्रवर्तयन् जगन्नाथीयपत्रमिति नाम्ना प्रसिद्धं जगन्नाथकृतं सामान्यनिरुक्तिक्रोडपत्रममुद्रितं मद्रासपुस्तकालये लभ्यते। वादीन्द्रचिट्टिभट्टपुत्रेण तिप्पभट्टेन कृतः कश्चन लक्षणराजिनामा प्रकरणग्रन्थ अमुद्रित मद्रास सरस्वती-महालयपुस्तकालययोर्लभ्यते। ग्रन्थोऽयं साक्षात्कारविषयत्वं पदार्थत्वमिति लक्षण प्रतिपादयन् न्यायवैशेषिकगतानां सर्वेषां प्रमाणप्रमेयाणां लक्षणानि अव्याप्त्यति-व्याप्त्यसम्भवात्माश्रयव्यर्थविशेषणरहितानि प्रतिपादयति। द्रव्यभेदान् गुणभेदांश्च निरूपयन् नन्दीशकृतः गुणधर्मनामा ग्रन्थः सरस्वतीमहालये लभ्यते। प्रतियोगि-ज्ञानकारणतावादप्रधानोऽयं ज्ञानकारणतावादनामा नारायणसार्वभौमभट्टकृतः अमुद्रितः सरस्वतीमहालये लभ्यते। न्यायवैशेषिकप्रमेयविवेचनपरः प्रकरणग्रन्थः पदार्थतत्वविवेकाख्यः लक्ष्मणगुरुशिष्यकृत अमुद्रितः मद्रासपुस्तकालये लभ्यते। लक्ष्मणसूरिकृता न्यायवार्तिकोपाधिभागटीका अमुद्रिता सरस्वतीमहालये लभ्यते। वेङ्कटाचार्यकृत अमुद्रितः सव्यभिचारलक्षणवादाख्यः ग्रन्थः साध्यसंशयजन-केत्यादिमण्युक्तसव्यभिचारलक्षणे गदाधरोक्तिमनूद्य दूषयति। काश्यपगोत्रजेन जगन्नाथाचार्यपुत्रेण अनर्घशिङ्गराचार्येण कृत अमुद्रितस्साङ्कर्यस्य जातिबाधकत्व-खण्डनवादनामा ग्रन्थः नैयायिकाभ्युपेतस्य साङ्कर्यस्य जातिबाधकत्वसिद्धान्तस्य खण्डनपरः। साङ्कर्यलक्षणमुपपाद्य विकल्प्य दूषित्वा तस्य जातिबाधकत्वं निरस्य

भूतत्वेन्द्रियत्वादिकं जातिरेवेति साधयति। ग्रन्थोऽयं मद्रासपुस्तकालये लभ्यते। श्रीमुष्णनगरवासिना कौण्डिन्यगोत्रजेन वीरवल्लीवरदनारायणश्रीनिवासेन कृत अमुद्रितः मद्रासपुस्तकालयस्थश्च न्यायसङ्ग्रहाख्यो ग्रन्थः शतैश्श्लोकैः न्यायवैशेषिक-सिद्धान्तगतप्रमाणप्रमेयान् सङ्गृह्णाति। मूलकारेणैव कृता न्यायसङ्ग्रह-दीपिकाख्या व्याख्याप्यमुद्रिता तत्रैवास्ति। हरिदीक्षितकृतः हरिदीक्षितीयमिति प्रसिद्धः प्रमाणप्रमेयादिषोडशपदार्थविवेचनपरः ग्रन्थ अमुद्रित सरस्वतीमहालये विद्यते।

एवमन्ये केचन वादग्रन्थाः अज्ञातकर्तृनामधेयाः बहवो विद्यन्ते ते च वादवारिधौ मुद्रिताः तेषां विवरणमिदानीं प्रदर्श्यते।

अधमर्णत्ववादः— शोध्यत्वेनाङ्गीकृतदत्तद्रव्यग्राहकत्वे सति दत्तद्रव्यस-जातीयद्रव्यकर्मकस्वानुमतभाविदानप्रागभाववत्त्वमिति अधमर्णत्वलक्षणं परिष्कुर्वन्नयं वादः अज्ञातकर्तृकः।

अनुद्भूतरूपादिखण्डनवादः — वादोऽयं उद्भूतत्वानुद्भूतत्वस्वरूप-निर्वचनपूर्वकं मीमांसकनैयायिकाशयानुपर्ण्य अनुद्भूतरूपं खण्डयति।

अनुभवत्वजातिवादः—अनुभवत्वस्य प्रत्यक्षादिचतुष्टयसाधारणजातित्वे प्रमाणाभावप्रदर्शनपूर्वकं अनुव्यवसायं तत्र प्रमाणमुपदर्शयति।

आत्मत्वजातिविचारः — दीधितिप्रकाशकारादिसिद्धान्तं परिशीलयन् आत्मत्वजातिं साधयन्नयं ग्रन्थः तञ्जपुरपुस्तकालये लक्षणराजौ मुद्रितः।

एकपाणिपादवादः—"चक्षुः परहिताकाङ्क्षी न स्पृशेदेकपाणिना" इति वाक्ये एकपाणिपादशब्दार्थविचारपरोऽयं वादः।

जातिबाधकवादः—व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः॥

इत्ययं उदनाचार्यकृतः श्लोकः उदाहरणप्रदर्शनमुखेन व्याख्यातः।

त्वङ्मनस्संयोगजन्यज्ञानत्वहेतुत्वखण्डनवादः। त्वङ्मनस्संयोगस्य ज्ञानत्वावच्छिन्नं प्रति हेतुत्वे प्रमाणाभावं युक्त्यभावञ्चोपपाद्य मिश्रोक्तं जन्यज्ञान-सामान्यं प्रति चर्ममनस्संयोगस्य हेतुत्वं प्रदूष्य शरीरमनस्संयोगस्यापि ज्ञानसामान्ये जन्यज्ञानसामान्ये वा हेतुत्वं निराकृत्य आत्ममनस्संयोगवृत्तिवैजात्यस्यैव कारणत्वं साधितम्।

नवत्वसंख्याविचारः—द्रव्याणि नवैवेति वाक्ये नवत्वविशेषणस्य आनर्थक्यं उद्भाव्य तमस अतिरिक्तत्वमापाद्य खण्डितम् । मुद्रितोऽयं TSML लक्षणराजौ ।

नित्यसुखवादः—वादोऽयं न्यायशास्त्रप्रक्रियाविरुद्धं नित्यसुखं व्यवस्थापयति । ईश्वरो न सुखवान् सुखसामग्र्यभावादिति प्राचीनमतमुपपाद्य प्रदूष्य नवीनमतेन ईश्वरः सुखवान् सुखवत्वेन वेदबोधितत्वात् इति युक्त्या सुखवत्वं प्रसाध्य ज्ञानत्वसुखत्वयोस्सांकर्यभयात् श्रुतिगतानां आनन्दादिशब्दानां लक्षणया आनन्दवत्वादिबोधकत्वं उपपाद्य नित्यसुखव्यवस्थापनं कृतम् ।

पाकजवादः—वादोऽयं परमाणौ समवायेन द्रव्याभाववति पाकजरूपोत्पत्तिविनाशौ न तु द्वयणुकादाविति वदतां वृद्धवैशेषिकाणाम्, द्वयणुकादावपि पाकजो रूपनाशो भवत्येव पाकजरूपोत्पत्तिस्तु परमाणावेव, द्वयणुकाद्यवयविनि रूपजरूपमेवेति वदतां नव्यवैशेषिकाणाम्, अवयविनि पाकजरूपोत्पत्ति विनाशवादिनां नैयायिकानाञ्च मतं परिशील्य रूपनाशादेः पाकजन्यत्वं विचारयति ।

प्रतिबध्यप्रतिबन्धकभाववादः—तद्धर्मावच्छिन्न विशेष्यताकतदभाववत्ता निर्णयकाले तद्धर्मावच्छिन्नविशेष्यताकतद्विशिष्टबुद्धेरनुदये कीदृशं प्रतिबन्धकत्वं कारणमिति प्रतिबध्यप्रतिबन्धकभावस्वरूपं परिष्करोति ।

प्रतियोगिज्ञानकारणतावादः — अभावप्रत्यक्षे प्रतियोगितावच्छेदकप्रकारप्रतियोगिताज्ञानं कारणमिति प्राचीननव्यमतपरिशीलनपूर्वकं साधयति ।

प्रीतिवादः—प्रीतितुष्ट्यादिपदं सुखपर्यायपठितमपि नैयायिकसिद्धान्तानुरोधेन अनुरागार्थकं, विहितकर्मकर्तृपुरुषीयमोक्षेच्छापरं वा ? इति वेदान्तिमतानुवादपूर्वकं परिशीलयति ।

लङ्घनवादः — संनिहितदेशसंयोगानन्तरं विप्रकृष्टदेशसंयोगानुकूलो व्यापारः लङ्घनम्, सम्बन्धविरोधिव्यापारः लङ्घनम्, एकपार्श्वतः पार्श्वान्तरपतनं लङ्घनम् इत्यादिलक्षणनिर्वचनपूर्वकं एकादश्यां लङ्घनम् इत्यादौ लङ्घनशब्दस्य भोजनाभावे लक्षणेति प्रतिपादयति ।

लौकिकविषयतावादः — लौकिकसंनिकर्षजन्यज्ञानविषयत्वेन लौकिकविषयतां ये वदन्ति तेषां आशयं विवेचयति ।

लौकिकसंनिकर्षकारणतावादः—संयोगसंयुक्तसमवायादिषड्विधलौकिकसंनिकर्षान् उपपाद्य तेषां स्वीकारे हेतुं प्रतिपादयति ।

विशिष्टवैशिष्ट्यवादः—विशिष्टवैशिष्ट्यबुद्धिं चतुर्धा विभज्य तस्याः केन रूपेण कस्य हेतुत्वमिति विमृशति । यद्यपि मुद्रिते पुस्तके अज्ञातकर्तृनामा दृश्यते परन्तु सरस्वतीमहालयस्थपुस्तके रघुदेवभट्टाचार्यः कर्तेति दृश्यते ।

विशेषणज्ञानहेतुतावादः—विशिष्टबुद्धिं प्रति विशेषणज्ञानहेतुतां तस्याः भाने गमकञ्च विशदय्य ज्ञानलक्षणायाः स्वीकर्तव्यतामुपपादयति ।

विशेषणतावच्छेदकज्ञानहेतुतावादः— विशेषणतावच्छेदकप्रकारकनिर्णयशून्यकाले विशिष्टवैशिष्ट्यबोधापत्तिवारणाय विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकनिर्णयत्वेन कारणत्वं कल्पनीयमिति वदन् तत् कारणत्वं सामान्येन अथवा विशेषेणेति विकल्प्य परिष्करोति ।

शरीरकारणतावादः—शरीरत्वं न जातिः, पृथिवीत्वादिना साङ्कर्यात्, किन्तु चेष्टावदन्त्यावयवित्वम्, चेष्टात्वञ्च प्रयत्नाधीनक्रियानिष्ठजातिविशेष इति विशदयन्, अवच्छेदकतासम्बन्धेन जन्यज्ञानत्वावच्छिन्नं प्रति आत्मसमवेतजन्यविशेषगुणत्वावच्छिन्नं प्रति वा शरीरत्वेन शरीरस्य तादात्म्यप्रत्यासत्त्या कारणत्वमिति प्रतिपादयति ।

संशयवादः—संशयनिश्चयभेदेन विशिष्टबुद्धिं द्वेधा विभज्य चाक्षुषत्वादिना साङ्कर्यात् संशयत्वस्य जातित्वाभावमुक्त्वा तदभावप्रकारतानिरूपितविशेष्यतावच्छिन्न तत्प्रकारतानिरूपितविशेष्यताशालित्वं संशयत्वमिति परिष्करोति ।

सामग्रीप्रतिबन्धकतावादः—यद्यपि मुद्रितपुस्तके अज्ञातनामा दृश्यते परं लण्डनकार्यालयपुस्तकालयस्थमातृकायां कलकत्तासंस्कृतकलाशालापुस्तकालयस्य मातृकायाञ्च हरिरामतर्कालंकारः कर्तेति दृश्यते ।

स्नानवादः—एकदा स्वीयबहिस्सर्वाङ्गेन जलसंयोगः स्नानमिति लक्षणं अतिव्याप्त्यव्याप्तिदोषनिवारणपूर्वकमुपपाद्य एकक्षणावच्छिन्नस्वीयसकलबहिरङ्गानुयोगिकजलप्रतियोगिकसंयोगः स्नानमिति परिष्करोति ।

स्मृतिनिश्चयहेतुतावादः — उपेक्षात्मकज्ञानादपि स्मरणापत्तिवारणाय संस्कारावश्यकताम्, ज्ञानजन्यतावच्छेदकतया संस्कारस्य सविषयत्वञ्च उपपाद्य घटत्वेन तद्घटस्मरणं प्रति घटत्वेन तद्घटज्ञानत्वेन हेतुता स्वजन्यसंस्कारः प्रत्यासत्ति-

रिति, तथाविधसंस्कारत्वेन तथाविधस्मृतित्वावच्छिन्नं प्रति, व्यापारीभूतसंस्कारस्य तथाविधसंस्कारं प्रति च तथाविधज्ञानत्वेन हेतुता इति विशदयति ।

स्वत्वजनकतावादः—पित्रादिमरणोत्तरं सर्वेष्वेव पित्रादिधनेषु सर्वभागिनां स्वत्वं उत्पद्यते अथवा गुटिकापातेन वस्तुगत्या यस्य योंऽशो निर्णीतो भविष्यति तत्रैवांशे स्वत्वमुत्पद्यते वा इति प्रश्नस्य समाधिरूपतया प्रवृत्तोऽयं वादः ।

2. स्वत्वजनकतावादः—स्वत्वं पदार्थान्तरमिति प्राचीनमतम्, स्वत्वं स्वामित्वञ्च एकपदार्थ इति नव्यमतम् उपपाद्य, स्वत्वञ्च वृत्तिनियामकविशेषणताविशेषेण स्वर्णादि-द्रव्यनिष्ठम् निरूपकताख्य विशेषणताविशेषेण स्वामिनिष्ठमिति प्रतिपाद्य क्रय प्रतिग्रहादि-वत् पित्रादीनां मरणपातित्य प्रव्रज्योपेक्षाभ्य उत्पद्यते इत्युक्त्वा, स्वत्वजनकं दानमेवेति प्राचीनमतम्, दानं न स्वत्वजनकं परन्तु प्रतिग्रहाख्यस्वीकार एवेति प्रतिपादयति ।

पूर्वोक्तान् वादान् त्यक्त्वा अन्ये केचन क्रोडपत्ररूपाः वादाः बहुषु पुस्तकालयेषु अमुद्रिता अनाद्यनन्ताः ग्रन्थपातसहिताः कृमिकीटदष्टाः त्रुटिताः विद्यन्ते । तेषु केचन तत्त्वचिन्तामणिगादाधरीभागानेव वादनाम्ना सोत्साहं लिखित्वा निक्षिप्ता दृश्यन्ते । अन्ये केचन शशधरीयग्रन्थं भागशः विभज्य वादनाम दत्वा लिखिता विद्यन्ते । परं प्राचीनेषु ग्रन्थेषु ग्रन्थलेखने प्रमादात् त्रुटितस्य ग्रन्थस्य पूरणाय वा, व्याख्यानादिना न्यूनतापूरणाय वा, ग्रन्थोपरि स्वाशयप्रकटनाय वा, ग्रन्थस्य पत्रयोः क्रोडे—मध्ये चिह्नविशेषेण लिखित्वा स्थापितं पत्रमेव क्रोडपत्रमिति वक्तव्यम् । एवञ्चोपचारात् ग्रन्थोपरि विवेचनपूर्वकं लिखितं पत्रं क्रोडपत्रमिति वाद इति च प्रसिद्धिं गतम् । तादृशेषु पत्रेषु हरनारायण—चन्द्रनारायण—न्यायपञ्चानन—कालीशङ्कर—दुलाल—राधामोहन—गोस्वामिप्रभृतिभिरुत्तर देशीयैः, अप्पाशास्त्रि—धर्मराजाध्वरि—अनन्ताचार्य—रामशास्त्रिप्रभृतिर्दक्षिणदेशीयै-र्विरचिताः प्रत्येकविषयप्रधान – प्रकीर्ण – विशकलित – पदार्थनिरूपणपराः वादाः केचन क्रोडपत्रसङ्ग्रहे वादवारिधौ वादार्थसङ्ग्रहे च अन्यत्र च मुद्रिताः । अन्ये केचन वादाः समाननामानः कर्तृभेदेन द्विधा त्रिधा चतुर्धा च वर्तन्ते । ते मुद्रितात् भिन्ना अभिन्ना वा इति न ज्ञातुं पार्यन्ते, सर्वेषां मुद्रितपुस्तकानामलाभात्, अमुद्रितानां च अस्पष्टत्वेन विभिन्नपुस्तकालयस्थत्वेन श्रमसाध्यत्वात्, विशेष-फलाभावाच्च । अज्ञातकर्तृनामधेयेषु वादग्रन्थेष्वपि इयमेव स्थितिरिति केवलं क्रोडपत्ररूपाणां वादानां वा निर्देश एवात्र कर्तुं शक्यते—

1. अनुद्भूतरूपवादः ।
2. अनुमितिपरामर्शवादः ।
3. अनुयोगितावादः ।
4. अन्धकारवादः ।
5. अन्यथाख्यातिवादः ।
6. अन्यथासिद्धिवादः ।
7. अन्यथासिध्यादिविचारः ।
8. अन्वितशक्तिवादः ।
9. अपभ्रंशवादः ।
10. अपिवादः ।
11. अपूर्ववादः ।
12. अभावज्ञानप्रतियोगिज्ञानवादः ।
13. अभावाधिकरणवादः ।
14. अभिधावादः ।
15. अर्थाध्याहारवादः ।
16. अवच्छेदकतावादः ।
17. अवयववादः ।
18. असमवायि कारणनाशाद्
द्रव्यनाशवादः ।
19. आकाङ्क्षावादः ।
20. आख्यातवादः ।
21. आख्यातार्थविचारः ।
22. आत्मत्वजातिविचारः ।
23. आत्ममनोयोगवादः ।
24. आर्द्रेन्धनवादः ।
25. आलोकवादः ।
26. आसत्तिवादः ।
27. ईश्वरवादः ।
28. उच्छिन्नशाखावादः ।
29. उपसर्गवादः ।
30. उपाधिवादः ।
31. एकदेशान्वयवादः ।
32. एवकारवादः ।
34. कारकवादः ।
34. कारणतावादः ।
35. केवलव्यतिरेकिवादः ।
36. केवलान्वयिवादः ।
37. क्रियायोगवादः ।
38. क्त्वावादः ।
39. चकारवादः ।
40. चित्ररूपवादः ।
41. जन्याभावविनाशिकवादः ।
42. जातिबाधकवादः ।
43. जातिवादः ।
44. ज्ञानद्वयवादः ।
45. ज्ञानप्रामाण्यवादः ।
46. ज्ञानलक्षणावादः ।
47. णिचूवाक्यवादः ।

48. तत्त्वेदन्तावादः ।
49. तदादिशक्तिवादः ।
50. तद्धितवादः ।
51. तात्पर्यवादः ।
52. त्वङ्मनोयोगवादः ।
53. देवतावादः ।
54. द्वन्द्वसमासवादः ।
55. धर्मितावादः ।
56. नञ्वादः ।
57. नवत्वसंख्याविचारः ।
58. नव्यमतवादः ।
59 निपातवादः ।
60. निमित्तकारणतावादः ।
61. निर्विकल्पकवादः ।
62. पक्षतावादः ।
63. पक्षताक्रोडः ।
64. पञ्चमविषयतावादः ।
65. पदशक्तिवादः ।
66. पदाध्याहारवादः ।
67. परामर्शवादः ।
68. पृथक्प्रामाण्यवादः ।
69. प्रतियोगितावादः ।
70. प्रत्यक्षलक्षणवादः ।
71. प्रलयवादः ।
72. प्रागभावविचारः ।
73. प्रागभाववादः ।
74. प्रामाण्यवादः ।
75. बाधबुद्ध्यर्थवादः ।
76. बाधरहस्यम् ।
77. बाधविचारः ।
78. ब्राह्मणत्ववादः ।
79. भावप्रत्ययवादः ।
80. भूयोदर्शनवादः ।
81. मङ्गलवादः ।
82. मनोऽणुत्ववादः ।
83. मातरिश्वप्रत्यक्षवादः ।
84. मानसानुमानवादः ।
85. मुक्तिवादः ।
86. मैत्रवादः ।
87. मोक्षवादः ।
88. मोक्षकारणतावादः ।
89. युगपज्ज्ञानवादः ।
90. योगरूढिवादः ।
91. योग्यतावादः ।
92. योग्यानुपलब्धिवादः ।
93. रत्नकोषवादः ।
94. रप्रत्याहारवादः ।
95. रूपनाशवादः ।

96. लकारवादः ।
97. लक्षणावादः ।
98. लाघवज्ञानवादः ।
99. लिङ्गकारणतवादः ।
100. वाक्यवादः ।
101. वायुप्रत्यक्षवादः ।
102. विधिवादः ।
103. विधिविचारः ।
104. विभक्त्यर्थविचारः ।
105. विशिष्टद्वयाघटितत्वविशिष्टान्तराघटितत्वविचारः ।
106. विशिष्टान्तराघटितत्वविचारः ।
107. विशिष्टवैशिष्ट्यवादः ।
108. विशेषवादार्थः ।
109. विशेषणतावादः ।
110. विशेषणविशेष्यवादः ।
111. विषयतावादः ।
112. वीप्सावादः ।
113. विवाहवादः ।
114. वृषोत्सर्गवादः ।
115. वेदापौरुषेयत्ववादः ।
116. व्यभिचारज्ञानवादः ।
117. व्याप्तिवादः ।
118. व्याप्तिकोडपत्रम् ।
119. व्याप्तिविचारः ।
120. व्युत्पत्तिवादकोडपत्रम् ।
121. शक्तिवादः ।
122. शब्दप्रामाण्यवादः ।
123. शब्दस्वातन्त्र्यवादः ।
124. शब्दानित्यत्ववादः ।
125. शरीरलक्षणवादः ।
126. शाब्दबोधवादः ।
127. संशयवादः ।
128. संशयपक्षतावादः ।
129. संख्यावादः ।
130. सत्प्रतिपक्षकोडपत्रम् ।
131. सन्ध्यावादः ।
132. सन्निकर्षवादः ।
133. समवायवादः ।
134. समासवादः ।
135. सव्यभिचारसामान्यनिरुक्तिपत्रम् ।
136. सहचारवादः ।
137. सादृश्यवादः ।
138. साधारणविचारः ।
139. साधुत्ववादः ।
140. सापेक्षवादः ।
141. सामग्रीवादः ।
142. सामान्यनिरुक्तिकोडपत्रम् ।

इति न्यायव्याकरणवेदान्तशास्त्रेषु प्राप्तशिरोमणिबिरुदस्य
अद्वैतवेदान्तसाहित्येतिहासकर्तुः कल्याणमञ्जरी–महावाक्यार्थमञ्जरी–
श्लोकवार्तिकव्याख्यादिग्रन्थानां सम्पादकस्य
**तङ्गस्वामिशर्मणः**
कृतौ दर्शनमञ्जर्यां प्रथमो भागः समाप्तः ।



# ग्रन्थकर्त्रनुक्रमणिका

स्थूलाक्षराङ्किताः संख्याः ग्रन्थकर्तृविवरणं द्योतयन्ति

# सामान्यानुक्रमणिका

---